संस्कृतसाहित्यसंवर्धनपरा वार्षिकी शोधपत्रिका

# साहित्यसमाख्या

# SÂHITYASAMÂKHYÂ

**International Research Journal for the Study of Sanskrit Sahitya**

अङ्कः-२ वर्षम्-२०१५-१६ Vol.-02 2015-16

प्रधानसम्पादकः
**प्रो. सुरेन्द्रपाठकः**
**प्राचार्यः**

**राष्ट्रियसंस्कृतसंस्थानम्**
**RASHTRIYA SANSKRIT SANSTHAN**
**(DEEMED UNIVERSITY), LUCKNOW CAMPUS**
**(Accrediated 'A' Grade by 'NAAC')**
**Under the Ministry of Human Resources Development**
**Govt. of India**

# साहित्यसमाख्या

## SÂHITYASAMÂKHYÂ

राष्ट्रियसंस्कृतसंस्थानेन वित्तपोषिता लखनऊपरिसरस्य संस्कृतसाहित्यसंवर्धनपरा वार्षिकी शोधपत्रिका

ISSN-2349-851X





*प्रकाशकः*

प्राचार्यः, राष्ट्रियसंस्कृतसंस्थानपरिसरः

विशालखण्डः-4, गोमतीनगरम्, लखनऊ-226010, उत्तरप्रदेशः

दूरभाषः 0522-2393748, फैक्सः 0522-2302993

वेबसाइटः www.sanskrit.nic.in ई-मेलः- rskslucknow@yahoo.com

द्वितीयोऽङ्कः

प्रकाशनवर्षम्- वि.सं.-2073, ख्रीस्ताब्दः-2015-16

*मुद्रकः*

पनार ऑफसेट

17, अशोकमार्ग, लखनऊ-226001

**प्रो. पी.एन्. शास्त्री**
कुलपति
राष्ट्रिय संस्कृत संस्थान
मानित विश्वविद्यालय
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन)
( 'ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त )

**Prof. P.N. Shastry**
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University ।
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)

## आशीर्वचांसि

मोमुद्यते मे चेतः यद्राष्ट्रियसंस्कृतसंस्थानस्य लखनऊपरिसरस्य साहित्यविभागेन 'साहित्यसमाख्या' इति नामिका पत्रिका प्रकाश्यते। पत्रिकैषा साहित्यशास्त्रजिज्ञासूनां कृते ज्ञानाय, पथप्रदर्शनाय मङ्गलाय च भवत्विति मदीया शुभकामना। तदर्थं पत्रिकाप्रकाशने कृतभूरिपरिश्रमान् परिसरप्राचार्यान् साहित्यविभागाध्यक्षान् सम्पादकमण्डलीञ्चाभिनन्दामि। इत्यलम् ।

( प्रो. परमेश्वरनारायणशास्त्री )
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम् ( मा.वि.वि. ), नवदेहली

# प्रकाशकीयम्

साहित्यशास्त्रमर्मज्ञः श्रीमान् राजशेखरः 'साहित्यम्' पञ्चमी विद्या इति लिखति, प्रायशः विद्वांसः 'पञ्चमी विद्या' इत्यनेन 'साहित्यम्' पञ्चमो वेद इति स्वीकुर्वन्ति। 'साहित्यम्' पञ्चमो वेद इति विदुषां व्याख्यानस्य तात्पर्यमेतत् भवितुमर्हति यत् सम्पूर्णेऽपि जगति यावन्तः ग्रन्थाः वर्तन्ते तावत्सु सर्वेषु ग्रन्थेषु वेदस्य गौरवमत्यन्तं वर्तते इति सर्वेऽपि विद्वान्सः यथाकथञ्चित् स्वीकुर्वन्त्येव अतः साहित्यमपि वेद एव वर्तते, न तु तत्सदृशं न वा ततो न्यूनमिति साहित्यस्य गौरवं प्रतिपादयितुं विदुषामयं प्रयासः प्रशंसायोग्यो वर्तत एव।

'साहित्यम्' पञ्चमी विद्या तत्र विद्यापदं वेदवाचकं वर्तते तत्र जिज्ञासा भवत्येव यत् पण्डितशिरोमणिः श्रीमान् राजशेखर एव कथन्नैवम् उक्तवान् 'साहित्यम्' पञ्चमो वेद इति। तत्र विचारणायां मम मतिरेवं भवति यत् 'साहित्यम्' पञ्चमो वेद इति कथनेन 'साहित्यस्य' तथा गौरवं न भवति यथा 'साहित्यम्' पञ्चमी विद्या इति कथनेन भवति।

'वेदः अपौरुषेयः' तत्र सर्वविधविद्यानां सूक्ष्मातिसूक्ष्मरूपेण विद्यमानत्वात् वेदस्य प्रामुख्यं सर्वे स्वीकुर्वत्येव। मदीया तु दृढेयं धारणा वेदविषये एवं वर्तते यत् यो हि पुरुषः रागद्वेषेर्ष्यादिदुर्गुणरहितेन तपोपूतेन वेदमहापुरुषैकनिष्ठमनसा 'वेदस्य' अध्ययनाध्यापनयजनं करोति ऋषिर्भवति, ऋषिर्भूत्वा अस्मिन् ब्रह्माण्डे यावन्त्यः विद्याः वर्तन्ते तावतां सर्वासां विद्यानां ज्ञाता सपद्येव सञ्जायते। एतादृशः स वेदः चतुर्धा विभक्तः व्यासेन ऋक्यजुःसामाथर्वेतिरूपेण, नैव सः पञ्चम इति। 'पञ्चमी विद्या' इति कथनेन वेदस्य सम्यग्तया ज्ञानं अनेकविधविद्याज्ञानद्वारैव भवति वेदानां ज्ञाने प्रथमं मुख्यं कारणं साक्षाद् वेदा एव वर्तन्ते। तेषां ज्ञानस्य आवश्यकत्वात्, किन्तु यावत् साहित्यशास्त्रान्तर्गतालङ्कारछन्दःरीतिगुणरसादीनां बोधो न भवति तावत् वेदस्य सम्यग् ज्ञानं न भवति अतः चतुर्दशविद्यासु चत्वारः वेदाः षडङ्गानि आयान्ति। तत्र 'साहित्यस्य' षडङ्गापेक्षयापि प्रामुख्यं भवति अतः 'साहित्यस्य' वेद एव अन्तर्भावः न तु वेदातिरिक्त इति राजशेखरस्य आशयः।

साहित्यस्य सन्दर्भे बहवः विद्वान्सः एवं विचारयन्ति यत् वेदार्थनिर्णये 'षडङ्गानाम्' उपकारकत्वमस्ति षडङ्गेषु साहित्यस्य नाम उद्धृतं नास्त्यतो साहित्यस्य प्रामुख्यन्नास्ति यथा व्याकरणादिशास्त्राणामतः साहित्यशास्त्रस्य न्यूनत्वं प्रतिपादयन्ति।

एतस्मिन् सन्दर्भे चिन्तनस्य आवश्यकता अस्ति यत् कस्यचित् पुरुषस्य महत्त्वं केवलैः तस्याङ्गैरेव भवति वा किमपि तत्र अन्यं प्रधानतत्त्वं भवति येन विना सर्वेषामपि अङ्गानाम् अत्यन्तसुदृढसुन्दरमनोहराणामपि नैरर्थक्यं भवति, यथा कोऽपि पुरुषः सुन्दरः, मनोहरः परिपुष्टाङ्गो वर्तते, किन्तु तस्य प्राणा एव न सन्ति किं स इङ्गितुं, चेष्टितुं, चलितुं वक्तुं वा प्रभवति। परन्तु यदा पुरुषः यद् तत्त्वं प्राप्य पश्यति जिघ्रति स्पृशति-चलति-नृत्यति मनोहरो भवति, तस्यैव तत्त्वस्य प्राधान्यं वर्तते। वेदेभ्यः यदि छन्दोऽलङ्काररीतिरसगुणादयः निष्काश्यन्ते चेत् किं तत्र अवशिष्टं भविष्यति वेदेषु सन्त्येव साहित्यशास्त्र-समाविष्टात्यन्तिकमहत्त्वपूर्णतत्त्वानि यदनुसारं गानेन पठनेन, अभिनयेन मनुष्याः किं प्रकृतिः प्रफुल्ला भवति जडा अपि चेतना इव व्यवहरन्ति। सन्ति एतादृशानि उदाहरणानि यथा कोऽपि सामवेदस्य एतादृशः गायकः आसीत् स पण्डितसभायां सामवेदस्य एतादृशं गानं प्रास्तौत् येन गानेन सभामध्ये एकं लघुलौहद्रव्यं प्रभावितं सत् पृथिवीभागात् किञ्चित् उत्थाय नृत्यत् आसीत्। स पण्डितः एव सभाजनानां मध्ये उद्घोषणां कृतवान् आसीत् यद् मम सामगानेन जडोऽपि चेतनवत् व्यवहर्तुं शक्नोति, एतादृशस्य गानस्य कला तु साहित्यशास्त्रद्वारैव प्राप्तुं शक्यते, अतः साहित्यस्य महत्त्वं गौरवान्वितं वर्तते। अतः 'साहित्यम्' पञ्चमी विद्या इति कथनस्य तात्पर्यं भवति यत् चतुर्णां वेदानां प्राणभूता या विद्या सा विद्या पञ्चमीसाहित्यविद्या। साहित्यं न वेदातिरिक्तं किन्तु वेदः एव। अतः षडङ्गापेक्षयापि तस्य प्राधान्यमस्ति। लखनऊपरिसरस्य साहित्यविभागः 'साहित्यसमाख्यां' शोधपत्रिकां प्रकाशयति तदर्थं महान् धन्यवादः। वर्धतां साहित्यं सर्वेषां महते उपकाराय। ॐ कल्याणमस्तु!

(प्रो. सुरेन्द्रपाठकः)
प्र. प्राचार्यः

# सम्पादकीयम्

साहित्यसमाख्याभिधाना संस्कृतसाहित्याधारिता वार्षिकशोधपत्रिका द्वितीयाङ्कमारोहति। प्रथमाङ्कगतं कमपि भूमिकावाक्यमत्र स्मरामि। तद्यथा- ''लोकगता समस्या काव्येनोत्थापिता समाधानाय कल्पते। समस्यात्मकस्य लोकस्य काव्ये यदुपस्थापनं तत्समाधानात्मकं सदेव किमप्यपूर्ववस्तुत्वेन काव्यमिति कथ्यते। लोकस्य तदिदं काव्योन्मुखीकरणं पुनस्तस्मादेव रमणीयमित्युच्यते। प्रकारान्तरेण काव्यगता रमणीयता लोकसमस्यासमाधानपरा भूत्वैव सहृदयजनमनः प्रीतये भवति'' इति। वस्तुतः साहित्यविषयमवलम्ब्य प्रकाशमानायाः पत्रिकायाः दायित्वं बहुभरं भवति। विषयवस्तुनः सन्नद्धता क्रमबद्धता च मन्ये शनैः शनैरागमिष्यति। कालोचितः प्रयासस्तु करणीय एव।

अस्मिन्नङ्के 48 संख्याकाः लेखाः शोधलेखाश्च संस्कृतहिन्द्याङ्ग्लभाषाक्रमेण सन्ति। लेखकेषु प्रो. रेवाप्रसाद-द्विवेदिनः पत्रद्वयं काव्यशास्त्रीयपरम्परायाः सम्यगालोचने ध्यानमाकर्षति। प्रो. अभिराजराजेन्द्रमिश्रो यत्र काव्यशास्त्रपरम्परायाम-र्वाचीनकाव्यशास्त्रं प्रतिष्ठापयितुं सन्नह्यति, तत्रैव प्रो. राधावल्लभत्रिपाठी काव्यपरम्परायामर्वाचीनकाव्यं समुपस्तोतुं प्रभवति। प्रो. सी. राजेन्द्रन्, आचार्यकमलेशझाश्च क्रमशः काव्ये काव्यकारणे च शैवागमदर्शनं दर्शयतः। प्रो. ओम्प्रकाशपाण्डेयो यत्र काव्ये लोकचिन्तनं चिनोति, तत्रैव प्रो. बृजेशकुमारशुक्लः पातञ्जलयोगे महाकवेः कालिदासस्य साक्षितां प्रदर्शयति। प्रो. मिथिलाप्रसादत्रिपाठी साहित्यस्य सचेतनतां यथा साधयति, तथैव भातखण्डेसङ्गीतसमविश्वविद्यालयस्य कुलपतिवर्या पण्डिता श्रुतिसडोलीकरकाटकरमहोदया साहित्ये साङ्गीतिकं साह्यं प्रदर्शयति। प्रो. रहसविहारी द्विवेदी आतङ्कवादनिर्मूलने वाल्मीकिरामायणस्य समग्रतां यद्वदति तदतीव सामयिकम्। डॉ. कपूरः प्राच्ये पाश्चात्ये च काव्यशास्त्रे भाषाबलं वस्तुबलं च सहैव प्रदर्शयति। इत्येवं बहुविधलेखसंवलिते साहित्यसमाख्याया एतस्मिन्नङ्के ग्राह्यं वस्तु पदे पदे वर्तते।

साहित्ये सङ्गीतस्य स्वारस्यं स्वीकृत्य ''सङ्गीसप्तपदिका'' नाम काचिदज्ञातप्राया कृतिरत्र सानुवादं प्रकाशिता क्रियते। अलिविलासिसंल्लापे नाम महनीयकाव्येऽलङ्कारप्रयोगं प्रदर्शयन्ती प्रो. रमाकान्तपाण्डेयस्य गङ्गासंस्कृतटीका चाप्यत्र शताधिकश्लोकेषु प्रकाशमानीयते। प्रो. शैलकुमार्याः भगवद्भक्तिपरं लेखं द्रढयितुमेव मन्येऽत्र गोस्वामिविट्ठलनाथस्य सन्दर्भः कुतश्चिदाहृतः। बौद्धसाहित्यमपि कतिपयलेखेषु सम्यगेव परामृष्टम्।

लेखसङ्ग्रहः कठिनतरं कार्यं भवति। सम्पादने तु ततोऽपि काठिन्यम्। तथापि कार्यसंस्कृतिः परिपालनीया भवति। साहित्यजगति कृतं कर्म मानवसमाजे नूनमेव प्रतिफलतीति विश्वासो वर्धताम्। राष्ट्रियसंस्कृतसंस्थानस्य वित्तसाहाय्येन साहित्यसमाख्याया अग्रिमोऽप्यङ्कः प्रकाशमेष्यतीति दृढं विश्वसिमि। प्रस्तुताङ्के लेखकादीनां समेषामपि धन्यवादं करोमि।

**-सम्पादकः**

# विषयानुक्रमणिका

# सनातनगुरोः पत्रकद्वयम्

**■ सम्पादकः**

साहित्यसमाख्यायै पत्रद्वयं प्रेषितं सनातनाचार्यैः श्रीमद्भिः प्रो. रेवाप्रसादद्विवेदिभिः। तत्र प्रथमं पत्रं ''को वा सार्वः'' इति नाम्ना, द्वितीयस्य च पत्रकस्य शीर्षकं ''नूतनं काव्यशास्त्र'' मिति। इदं हि पत्रद्वयं प्रकाशमानां पत्रिकामिमां निजाभिराशीर्भिः सभाजयितुं तैर्लिखितमिति परं प्रमोदस्थानम्। प्रथमं पत्रं तावदेवं वर्तते-

को वा सार्वः

– रेवाप्रसादो द्विवेदी

निध्यायन्तु विद्वांसः को वा सार्व इति।
ननु कस्यायं प्रयोगः?
भामहस्य भामहालङ्कारापरनाम्नि काव्यालङ्कारे [illegible] मङ्गले-
प्रणम्य सार्वं सर्वज्ञं मनोवाक्कायकर्मभिः।
काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते॥ १.१॥ इति।
सार्वमिति पदं व्युत्पादयति स्वयं भामह एव—
हितप्रकारो णौ च सर्वशब्दात् प्रयुज्यते॥ ५.३॥ इति
सर्वशब्दात् 'सर्वपुरुषाभ्यां णढञौ' [पा.सू. ५.१.१०] इति
सूत्रेण णे प्रत्यये कृते णस्य लोपाद् वृद्धौ जातायां 'सार्व'
इति प्रयोगः सर्वहितार्थः। सर्वज्ञ एतेन विशेष्यते। सर्वज्ञः
शिवबुद्धयोः इति कोशात् प्रणम्यत्वेन प्राप्नुयाद् [illegible]
[illegible] तावत् सर्वहितत्वमिति निध्येयम्। शिवः प्रायेण वैदिक
[illegible] तस्य स न सार्वः, वैदिकेषु वेदपाठाय स्त्रीशूद्रौ
[illegible]
[illegible] नुमन्तेव मान्यः। बुद्धः पुनर्वर्ण
[illegible] प्रसिद्धो सर्वप्रियोऽवतारः। तत्र सार्वत्वे
नास्ति किमपि बाधकमिति 'सार्व' शब्दस्य सन्निधेः सर्वज्ञ
शब्दोऽत्र शिवमर्थं परित्यज्य केवलं बुद्धमेव परामृशति।
एतेन सिद्धं यद् रक्रिलगोमिनस्य सूनुर्भामहो बौद्ध एव
आसीदिति।
एतस्य तर्कस्य [illegible] विश्वासस्य साधका अन्येऽपि
विशेषा भामहे सन्ति। [illegible] काव्यगुणानां द्वि-
संख्याकत्वम्। तेन च वैदिकागमविरोधः। प्रसिद्धं हि वैदिके
साहित्यशास्त्रे काव्यगुणानां दशत्वम्। आह च [illegible] भरतमुनि-
[illegible]—
१ श्लेषः २ प्रसादः ३ समता ४ माधुर्यं ५ सुकुमारता।
६ अर्थव्यक्तिः ७ उदारत्वं ८ ओजः ९ कान्तिः १० समाधयः॥ इति
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः। [काव्यादर्शः १.४१]

२

भामहालङ्कारे पुनः प्रसादो माधुर्यञ्चेति द्वावेव गुणौ। [illegible]। एतयोरेव लभ्येते तत्र लक्षणोदाहृती। तथा हि-

माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥२.१॥

श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते।
आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ॥ इति

अत्र माधुर्येणैव समं प्रसादस्यापि लक्षणम्। सहैव ओजसोऽप्युच्यते-

केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि॥२.२॥

किमत्र वृत्तम्?
[illegible] वा दण्डिप्रोक्तानां गुणानां [illegible] [illegible] साहित्यागमयोर्विच्छेदः। किमित्येवं प्रवृत्तिः? नान्यदत्र कारणं भवेद् ऋते बौद्धात् प्रत्यक्षवादात्। माधुर्यं स्फुटमनुभूयते इति। तत्र नानुपपत्तिः। प्रसादेऽप्येवमेव। ओजसि पुनः प्रतिपादनापेक्षेति तत्र [illegible], तथापि भामहो जानाति केचन तदपि गुणत्वेनाङ्गीकुर्वन्ति इति।

शाब्दिकाः स्फोटवादिनः। भामहस्य कथितम्- 'शपथैरपि चादेयं वचो न स्फोटवादिनाम्' [६.१२] इति।

ध्वनिवादिभिः सार्वे भामह एव स्वीकृतः। गुणविषये भामह [illegible]।

पण्डितराजेन पुनर्ध्वनिवादिनो निरस्य गुणानां संख्यायां त्रैगुण्यस्य (अस्मत्पक्षे) प्रत्याख्याने प्रमाणीकृतम्, यदि गुणा मन्यन्ते तर्हि विंशतिरपि मान्याः, [illegible] रसगङ्गाधरे [illegible]। मध्ये कुन्तकादिभिरपि गुणा भिन्नाः स्वीकृताः, [illegible] साहित्ये गुणविषये।

०६.[illegible] —रेवाप्रसाद द्विवे.

–इत्येवं काव्यशास्त्रीयमेवेदं पत्रमस्ति। भरतमुनेर्नाट्यशास्त्रादनन्तरं काव्यशास्त्रस्य प्रथमः पुरोधा भामहाचार्यो निजकृतौ काव्यालङ्कारे 'सार्वं' प्रणमति। पत्रानुसारं सार्व इत्ययं शब्दो यदि सर्वज्ञ इत्यस्य शब्दस्य विशेषणतया प्रयुक्तस्तर्हि सर्वहितकारी सर्वज्ञस्तत्र प्रणम्यते। सार्वो वा सर्वज्ञो वेति द्वावपि शब्दौ शिवबुद्धयोर्वाचकाविति विदुषां मतिः। किन्तु पत्रे शिवः 'सार्व' इति न स्वीक्रियते। तत्कथमिति बोद्धुं न पारयामः। वैदिकपरामर्शस्तत्र किमर्थं बाधको भविष्यति? स्त्रीशूद्रयोर्वेदपाठे निषिद्धे सत्यपि स्त्रीशूद्रातिरिक्तेनाधिकारिणा कृतेन वेदपाठेन स्त्रीशूद्रयोरपि हितं सम्भवत्येव। साहित्यिकस्वभावानुरोधेन बौद्धवैदिकयोर्मध्ये सामञ्जस्यं स्थापयितुं यतमान एष भामहो बुद्धं शिवं चेति द्वयमपि प्रणमतु नाम।

काव्यगुणविषयेऽपि वैदिकागमिकयोः समुदारः सम्बन्धो न परिहीयेत। काश्मीरशैवागमस्त्रिकदर्शने विश्वसिति। तस्मादेव मन्ये दशगुणास्त्रिषु गुणेष्वन्तर्भाविताः। ध्वनिवादिनां गुणत्रयत्वं भामहालङ्कारस्य कारणादेव सम्भवति। ध्वनिवादिनां गुणत्रयत्वं भामहस्य य एतावानविश्वासस्तत्रापि कारणेन भाव्यम्। वैयाकरणाः शब्दनित्यत्ववादिनः, साहित्यिकाश्च व्यावहारिकेषु शब्देषु विश्वसन्ति। साहित्यशास्त्रं स्वात्मनि विश्वासं जनयितुं व्याकरणानुकूलं स्फोटवादं स्वयमेव विरुध्नाति। ध्वनिवादिनां स्फोटसमर्थनं तिरस्कृतवाच्यत्वेन सम्भवति। गुरुवर्याणां द्वितीयं पत्रकं पुनरेवंविधं वर्तते–

नूतनं काव्यशास्त्रम्

काव्यलक्षणम्

सुन्दरो विकल्पः काव्यम्।

काव्यधामानि

चत्वार्येव तानि।

काव्यकल्पाः पञ्च भवन्ति काव्यस्य-

–इदं पत्रमपि काव्यशास्त्रीयमेव। पत्रेऽस्मिन् नूतनं काव्यशास्त्रं त्रिधा विभक्तं– काव्यलक्षणं काव्यधामानि काव्यकल्पाश्चेति। काव्यलक्षणे शब्दार्थयोर्ग्रहणं न कृतम्। काव्यमत्र चित्तवृत्तिविशेषतया सम्भवति। रीतिसम्प्रदाये यथा वैदर्भी गौडी पाञ्चाली लाटी चेति चतस्रो रीतयस्तथैवात्र काशी काञ्ची शारदा धारा चेति काव्यविद्यायाश्चत्वारि धामानि। काव्यकल्पेषु दोषहानेन प्रथमः, गुणाधानेन द्वितीयः, अस्फुटालङ्कारेण तृतीयः, पर्याप्तिपरैरलम्भावात्मकैरलङ्कारैश्चतुर्थः, चतुर्णां च समाहारेण पञ्चमः कल्प इति। तदेतदभिनवं काव्यशास्त्रं भवदीयं काव्यशास्त्रीयं ग्रन्थद्वयमाधारीकृत्य प्रवर्तते काव्यालङ्कारकारिका साहित्यालङ्कारश्चेति।

# अर्वाचीनसंस्कृतकाव्यशास्त्रम्

■ प्रो. अभिराजराजेन्द्रमिश्रः

केषाञ्चित् हृदयेषु शीर्षकमिदं विस्मयमप्युत्पादयेत्। कथमिति? किं काव्यशास्त्रस्याप्यर्वाचीनत्वं सम्भवतीति कृत्वा। तत्रेदमेव तावत्समाधानं यत्काव्यप्रकारे परिवर्तिते सति काव्यशास्त्रमपि परिवर्तत एव। यतो हि काव्यं तच्छास्त्रञ्चेत्युभयमप्यन्योऽन्याश्रितम्। अतएवैकतरस्मिन् परिवर्तिते सत्यन्यस्य परिवर्तनं सर्वथा शक्यमेव।

प्राचीनं काव्यशास्त्रं प्रायशो नाट्यशास्त्रमूलकमेव। तत्रैवेदम्प्रथमतया काव्य-नाट्यालङ्कार-रस-प्रवृत्ति(रीति)-गुण-वृत्ति-लक्षणादीनां चर्चा समवाप्यते। किञ्च, नाट्यशास्त्रकारः स्पष्टतया काव्यनाट्यशब्दौ पर्यायभूतौ प्रयुनक्ति। एवं प्रतीयते यत् तज्जीवनकाले उभयोः पार्थक्यं स्थापितं नाऽसीत्। अत एव भरतः क्वचिन्नाट्यरसशब्दं व्यवहरति क्वचित्पुनः काव्यरसशब्दम्। परन्त्वभिप्रायस्तस्य भवत्येक एव।

भरताऽनन्तरं सर्वप्रथममाचार्यभामह एव पृथक् काव्यशास्त्रं प्रारभते। काव्यालङ्कारनाम्नि ग्रन्थेऽस्मिन् काव्यलक्षणं गुणोऽलङ्कारः अन्ये च ते विषया निरूपिता दृश्यन्ते येषां दृढा स्थापना परवर्तिनि काव्यशास्त्रवाङ्मये जाता। अत्राऽचार्यः काव्यं लक्षयन् कथयति शब्दार्थौ काव्यमिति। पश्चाच्चेयमेव परिभाषा दण्डिरुद्रटकुन्तकमम्मटविश्वनाथजगन्नाथग्रन्थेषूत्तरोत्तरं संस्कृता संशोधितोपबृंहिता च परिलक्ष्यते। एवमेव काव्यप्रयोजन-काव्यहेतु-काव्यभेद-काव्यार्थप्रकार-गुण-वृत्ति-रीति-महाकाव्यनाटकादिलक्षणप्रसङ्गा अपि प्रत्याचार्यं विपरिवर्तिताः संवर्धिताश्च दृश्यन्ते।

वस्तुतः शास्त्रं भवति प्रयोगस्य (व्यवहारस्य वा) नियामकात्। अत एव प्रतियुगीनं शास्त्रं स्वयुगीनप्रयोगान् सम्यक्परीक्ष्यैव नियमान् सृजति। महाकाव्यानां नायकाः प्रायेण देवा राजवंशोत्पन्नाः राजर्षय एवाऽभूवन्। तां प्रवृत्तिं दृष्ट्वैव लक्षणकारेण विन्यस्तम्- तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः।। एकवंशभवा भूपाः कुलजा बहवोऽपि वा।

अत्र साहित्यदर्पणोक्ते लक्षणे पूर्ववर्तिमहाकाव्यानां नायकव्यवस्था साध्ववलोकयितुं शक्यते। कुमारसम्भवनायक-शिवः सुरः। किरातार्जुनीयनायको युधिष्ठिरः सद्वंशः क्षत्रियः। रघुवंशनायकाः दिलीपरघ्वजदशरथरामादिकाः एकवंशभवाः बहवो भूपाः। परन्तु महाकाव्यस्य यानीमानि वैशिष्ट्यानि साहित्यदर्पणकारेण प्रोक्तानि तान्येव पूर्ववर्तिकाव्यशास्त्रीयग्रन्थेषु नासन्। नूतनं किञ्चित्काव्यादर्शे आसीत्। ततोऽपि नूतनं किञ्चिद् रुद्रटालङ्कारे आसीत्। ततोऽपि किञ्चिन्नूतनं वक्रोक्ति- जीविते आसीत्। ततोऽप्यधिकं नूतनं किञ्चित्काव्यप्रकाशे पर्यलक्ष्यत। अन्ते च सर्वाधिकनूतनं समधिकञ्च साहित्यदर्पणे समदृश्यत।

एवं हि, काव्ययात्रेव काव्यशास्त्रयात्रापि मृदुमन्थरगत्याऽग्रेसरतीति सिद्धम्। तेन कथयितुं शक्यते यदिदानीन्तनं संस्कृतकाव्यशास्त्रं सर्वथा नवीनं परिवर्तितञ्च। तस्य नवीनत्वस्य परिवर्तनस्य च सन्ति बहूनि कारणानि। यथा हि, नेदानीं भूपाः शास्तारः। सर्वत्राऽपि प्रभवति लोकतन्त्रम्। लोक एव लोकं प्रशास्ति। कथाऽऽख्यायिकापद्धतिः क्षीणप्रायाऽधुना। कथानिकारुचयस्सञ्जाताः पाठकाः। बृहन्नाटकविरचनप्रदर्शनपरम्पराऽपि समाप्तप्राया। एकाङ्के लघुकलेवरे रुचिमन्तस्सर्वे। छन्दोऽपेक्षया मुक्तगीतेषु लोकगीतेषु वा सर्वेषां प्रीतिः। प्रागज्ञातप्राया अप्रयुक्ता वा वृत्तभेदाः सम्प्रति प्रयुज्यन्ते सीजो-तान्का-हाइकू-सानेटप्रभृतयः।

चिरकालं यावत् परिवर्तिते सत्यपि काव्यप्रकारे काव्यशास्त्रमपरिवर्तितमेव स्थितम्। परन्तु शनैः शनैस्तदपि परिवर्तनोन्मुखं जातम्। अयं प्रयत्नो व्यतीतशताब्द्या अष्टमे दशके प्रारब्धः। अस्मन्मित्रवर्येण राधावल्लभेन सागरविश्वविद्यालयीयसंस्कृतविभागेऽभिनवसंस्कृतकाव्यशास्त्रसम्भावनामुपलक्ष्य काचित् त्रिदिवसीया शोधसङ्गोष्ठी समायोजिता

याऽतितरां साफल्यमुपगता। ततोऽग्रेऽपि नैकाः सङ्गोष्ठ्यः संयोजिता अन्येषु विश्वविद्यालयेषु नूतनकाव्यशास्त्रमधिकृत्य। तस्या एव सङ्गोष्ठीपरम्परायाः परिणामोऽयं यदद्याभिनवं संस्कृतकाव्यशास्त्रमनेकाचार्येण कल्पितं सहृदयजनसमक्षं वरीवर्ति।

तत्राचार्यब्रह्मानन्दशर्मप्रणीतः काव्यसत्यालोकः आचार्यरेवाप्रसादद्विवेदिप्रणीता काव्यालङ्कारकारिका, आचार्याभिराजराजेन्द्रप्रणीतमभिराजयशोभूषणम्, आचार्यशिवज्युपाध्यायप्रणीतः साहित्यसन्दर्भः, आचार्यराधावल्लभ-त्रिपाठिप्रणीतमभिनवकाव्यालङ्कारसूत्रम् आचार्यरहसविहारिद्विवेदिप्रणीता नव्यकाव्यतत्त्वमीमांसेति ग्रन्था महीयन्ते।

एतानेव ग्रन्थान् ग्रन्थकारांश्चावलम्ब्य साम्प्रतिकसंस्कृतकाव्यशास्त्रस्य कानिचन प्रकरणानि समीक्ष्यन्ते। तत्र काव्यत्वे शब्दस्यार्थस्य वा पृथग् भूमिकामवलम्ब्य नव्या अपि पृथङ्मतयो दृश्यन्ते। शब्दार्थौ काव्यमित्यवोचदाचार्यभामहः षष्ठख्रिस्ताब्द एव। न केवलं शब्दः न केवलमर्थो वा काव्यं भवितुमर्हतीति ध्रुवम्। उभयोः समष्टिरेव काव्यम्। तदाह वक्रोक्तिजीवितकारः-

**शब्दार्थौ काव्यम्। वाचको वाच्यश्चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमिति विचित्रैवोक्तिः। तेन यत्केषाञ्चिन्मतं कविकौशलकल्पितकमनीयतातिशयः शब्द एव केवलं काव्यमिति, केषाञ्चिद्वाच्यमेव रचनावैचित्र्यचमत्कारकारि काव्यमिति पक्षद्वयमपि निरस्तं भवति। तस्माद्द्वयोरपि प्रतितिलमिव तैलं तद्विदाऽह्लादकारित्वं वर्तते, न पुनरेकस्मिन्निति।**

कुन्तकमतानन्तरं न किञ्चिदवशिष्यतेऽस्मिन्सन्दर्भे कथयितुम्। सत्यमेव शब्दार्थसमष्टिरेव भवति काव्यम्। यद्यप्याद्यास्तित्वं भवति शब्दस्यैव। परन्तु स एव शब्दो यावदर्थभावेन न विवर्तते, तावत् जगत्प्रक्रिया (लोकव्यवहारो) न प्रारभते। इदमेव शब्दार्थाद्वैतं प्रस्तौति वाक्यपदीयकारो भगवान् भर्तृहरिः-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**

यद्येवं, तर्हि कथं शब्दार्थयोरेकतरं प्रति दृश्यते सद्भावः काव्यलक्षणकाराणाम्?

**शब्दार्थोभयपक्षधरा** आचार्या मम्मटवाग्भटहेमचन्द्रविद्यानाथभोजदेवादिकाः वर्तन्ते। शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ काव्यमिति वाग्भटः काव्यानुशासने। अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यमिति हेमचन्द्रः। गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ गद्यपद्योभयमयं काव्यं काव्यविदो विदुरिति विद्यानाथः। तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति मम्मटः।

शब्दपक्षधराणामाचार्याणां पुनः शब्दस्यैव काव्यत्वे स्वारस्यम्। तद्यथा पण्डितराजो जगन्नाथः रमणीयार्थप्रतिपादकः शब्दः काव्यम्। शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलीति व्याहरन् दण्ड्यपि शब्दमात्रस्य काव्यत्वं प्रति प्रीतिं दर्शयति। परन्तु वाक्यं रसात्मकं काव्यमिति प्रतिपादयन् विश्वनाथः वाक्यार्थं प्रत्यनुरक्तो दृश्यते।

अर्वाचीनेष्वपि काव्यशास्त्रकारेषु सैव परम्पराऽवलोक्यते। तत्र ब्रह्मानन्दशर्मा शब्दार्थसमष्टिवादी। सत्यानुभूतिरेव काव्यस्यात्मेति तन्मतम्। काव्यगतं तत्सत्यं त्रिविधं भवति- प्रकृतिगतं प्राणगतं हृदयगतञ्च। प्राणगतसत्यमेवार्थिक- सत्यमप्युच्यते-

**प्राणा मूलं हि लोकस्य प्राणाश्चैतेऽर्थमाश्रिताः।**
**अर्थोन्मुखानि भूतानि अर्थस्यातः परा स्थितिः॥**

एवं हि, ब्रह्मानन्दः काव्येऽर्थस्य परां स्थितिं मन्यते। परन्त्वर्थोऽयं भवत्येव शब्दगम्यः शब्दानुस्यूतो वा। ततः शब्दोऽपि काव्यस्य भवति स्वरूपमेव। एवं हि, शब्दार्थोभयमेव भवति काव्यमिति प्रतिपादयति काव्यसत्यालोककारः।

परन्तु नेदं मन्यते आचार्यो रेवाप्रसादः। तन्मतेन तु काव्यं भवत्येव ज्ञानरूपम्। शब्दाश्च भवन्ति ज्ञानबाह्याः। अत एव शब्दानां ज्ञानरूपत्वाभावे तेषां काव्यस्वरूपताभावः स्वयमेव सिध्यति-

**काव्यस्य ज्ञानरूपत्वं शब्दत्वं नोपपद्यते।**
**शब्दस्य ज्ञानतायाञ्च शब्दतेव विनश्यति॥**

काव्ये काव्यप्रयुक्तशब्दानां स्थितिस्तावदेव तिष्ठत्यक्षुण्णा यावत्तेषामर्थज्ञानं न भवति। शब्दानामर्थज्ञाने जाते सत्येव काव्यं भवति ज्ञानरूपम्। तस्यां स्थितावर्थ एव ज्ञानरूपो महीयते। शब्दा भवन्त्येव ज्ञानबाह्याः। अनुभवसिद्धेयं स्थितिः। अत एव शब्देषु ज्ञानबाह्येषु सिद्धेषु अर्थ एव भवति काव्यमिति सनातनो रेवाप्रसादः।

तन्नेति भूयोऽप्याह ब्रह्मानन्दः। तन्मतं तच्छब्दैरेव प्रतिपाद्यते- शब्दस्यैकं कार्यमस्ति स्वोच्चारणरूपतया प्रस्तुतभावानुकूलस्य कठोरताकोमलतादिकस्य प्रस्तुतिः। अपरञ्च कार्यमस्ति अर्थद्योतकता। अस्मद्दृष्ट्या तु काव्ये प्रथमस्याप्युपयोगिता। द्वितीयस्य तु सा सर्वैरेव स्वीकार्या।

किञ्च, काव्येऽर्थद्योतनानन्तरं नहि शब्दस्य पृथग्भावोऽपितु काव्यानुभूतौ तस्य मुहुर्मुहुरुपस्थितिरिति नहि तस्य काव्याद्बहिर्भावः। शास्त्रे तु अर्थद्योतनानन्तरं शब्दस्य विराम इति नहि तत्रैतादृशी स्थितिः।

**काव्यस्य ज्ञानरूपत्वे वैमत्यं न कदाचन।**
**बाह्यत्वेन स्थितः शब्दः ज्ञानाकारं प्रपद्यते॥**
**शब्दस्य ज्ञानतायां हि शब्दो यदि विनश्यति।**
**अर्थस्य ज्ञानतायां हि नश्येदर्थ इति ध्रुवम्॥** -काव्यसत्यालोकः।

अभिराजराजेन्द्रोऽपि काव्यस्य शब्दार्थमयत्वं प्रत्येव निष्ठां प्रदर्श्य, सविशेषमर्थं प्रति स्वारस्यं प्रस्तौति। परन्तु तन्मतप्रतिपादनशैली काचिदन्यैव। शब्दोऽर्थो वा काव्यस्य ज्ञानरूपतायां बहिस्तिष्ठत्यन्तर्वेति प्रश्न एव विवादास्पदम्। उभयोः पक्षे विपक्षे च तुल्यतर्काः सम्भवन्तिं अत एव सा धोरण्येव त्याज्या।

यशोभूषणकारस्तर्कते यत्काव्ये प्रवृत्तिनिमित्तकं तत्त्वं किं भवति- शब्दोऽर्थो वा? स्वच्छन्दोच्छलदच्छकच्छ-कुहरच्छातेतराम्बुछटेति पद्ये कर्णशष्कुलीसुखयितृशब्दजातं शृण्वन्नपि अर्थज्ञानविरहितः पाठकः किं व्यवहारे प्रवर्तते? यद्यपि ध्वनिमाधुर्येण सुखयति तत्कर्णकुहरं पद्यमेतत्। तथाप्येऽमूक इवैव तिष्ठत्यसौ। कस्मात्? यतो हि पद्यप्रयुक्तानां तेषां शब्दानामभिप्रायमेवासौ न बुध्यति। अनेन शब्देनाऽयमर्थो बोध्य इतीश्वरेच्छारूपं शब्दार्थं यावदसौ नावगच्छति तावत् क्व व्यवहारप्रवृत्तिः? क्व कथासूत्रज्ञानम्? क्व पुनः काव्यप्रयुक्तगुणालङ्काररसादीनां वाऽपि ज्ञानम्। शब्दच्छलाऽर्थच्छलयोः क्वाऽनुभूतिः?

अत एव स्वानुभवसिद्धमिदं सत्यं यत्काव्यबन्धेऽर्थज्ञानं विना न किञ्चिदपि पुरस्सरति। अत एवोक्तं मया यशोभूषणे-

**शब्दार्थसाहिती काव्यं यद्यपीह सुनिश्चितम्।**
**परमार्थस्तथाप्यत्र प्रेक्षावद्भिर्निरूप्यताम्॥**
**काव्यप्रयुक्तशब्दानां केवलं पठनेन चेत्।**
**जायेत चित्तविश्रान्तिश्शब्दानां तर्हि काव्यता॥**
**किन्तु नैवं भवत्येव शब्दैश्चित्तं न रज्यते।**
**केवलं जायते तैस्तु श्रुतिरन्ध्रानुरञ्जनम्॥**
**काव्यप्रयुक्तशब्दानामप्यर्थावगमाहते ।**
**क्व नु सा चित्तविश्रान्तिः काव्यानन्दोऽप्यसौ कुतः॥**
**तस्मात्काव्यार्थ एवाऽसौ जायते परमार्थतः।**
**काव्यं तद्विग्रहो वापि प्रमाणं रसिकाः स्वयम्॥**

**ननु शब्दार्थौ सहितावेव काव्यम्। नाऽत्र काऽपि संशीतिः। न केवलं शब्दो न चाप्यर्थः काव्यमितरेतरवियोगाऽसहिष्णुत्वात्। तथापि व्यवहारदृष्ट्या शब्दप्रकटितार्थ एव काव्यम्। काव्यप्रयुक्त-**

**शब्दानामभिप्रायेऽवगत एव जायते काव्यानन्दः। अत एवाऽर्थसम्पदेव काव्यमित्यभिराजः।** -अभिराजयशोभूषणम्, पृ.सं.-184.

नन्वेतावताऽपि अर्थस्यैव काव्यत्वं सिध्यति यद् वाच्य एवार्थः सर्वत्र काव्यं न भवति। क्वचिल्लक्ष्य एवाऽर्थः क्वचित्पुनर्व्यङ्ग्य एवार्थः काव्यं चरितार्थयति।

आस्तां तावत्। प्राचां हि काव्यलक्षणानि ज्ञातान्येव। नव्यानां काव्यलक्षणानि पश्यन्तु सुधियः। तत्र कथयति ब्रह्मानन्दः शर्मा-

**शब्दार्थवर्तिसत्यस्य सुन्दरं प्रतिपादनम्।**
**काव्यस्य लक्षणं ज्ञेयं सत्यस्यात्र विशेषता॥**
**काव्ये सत्यानुभूतिर्या सा न हेया कदाचन।**
**इयमात्मा हि काव्यस्य इयमस्मिन् समीहिता॥**

काव्यालङ्कारकारिकाकार आचार्यरेवाप्रसादः काव्यं परिभाषते-

**आनन्दकोषस्योल्लासे लोकोत्तरविभावना।**
**अलङ्कृतार्थसंवित्तिः शाब्दी काव्यं प्रकीर्त्यते॥**

अभिनवकाव्यालङ्कारसूत्रकार आचार्यराधावल्लभस्तु प्रतिपादयति- लोकानुकीर्तनं काव्यम्। अनुकीर्तनं चतुर्विधम्। तेनाऽस्य पूर्णता। पूर्णता चालङ्कारः। तेन अलङ्कार एव काव्यमिति।

आचार्यरहसविहारिद्विवेदः काव्यं लक्षयति-

**सुहृदां हृदयाह्लादे लोकोद्बोधे च सङ्गता।**
**प्रज्ञावतः कवेः सद्वाक् काव्यमित्यभिधीयते॥**

आचार्यशिवजुपाध्यायः काव्यशब्दव्युत्पत्तिं विवृण्वानः काव्यं परिभाषते-

**कविकर्मतया ख्यातं काव्यं यत् कवृधातुजम्।**
**तत्स्वरूपमथैकान्तं काव्यत्वमिति सुस्थिरम्॥**
**निर्गलद्रसनिर्व्यूढं गुणालङ्कारसञ्चितम्।**
**निर्दुष्टं भावभूयिष्ठं काव्यसाहित्यमेव तत्॥**

किम्मयोक्तमिति प्रतिपादनात्प्राक् स्वोपज्ञकाव्यलक्षणदृष्टिमेव विशदीकर्तुं समीहे। तत्राऽवधेया इमे बिन्दवः:-

1. न मया कदापि चिन्तितं यद् विद्यमानेषु सत्स्वपि मम्मटविश्वनाथजगन्नाथकृतकाव्यलक्षणेषु कस्यचिदभिनवस्य काव्यलक्षणस्यापेक्षाऽथवौचित्यं वर्तते। अस्माकं सर्वेऽपि पूर्वसूरयोऽस्मदपेक्षया सहस्रगुणाधिकमहितप्रतिभावन्तस्त्रिकाल-दर्शिनश्चासन्।

2. मयेदमपि तावदनुभूतं यत्तेषां लक्षणानां मिथस्संयोजनं करणीयम्। तेषां मतसमन्वयः करणीयः। स्वोपज्ञे लक्षणे मया तदेव कृतम्। कापि नूतना काव्यपरिभाषा न मया दत्ताऽपितु प्राचामेव परिभाषाः सम्मेल्य कथितं मया-

**काव्यं लोकोत्तराख्यानं रसगर्भं स्वभावजम्।**
**परत्रेह च निर्व्याजं यशोऽवाप्तिप्रयोजनम्॥**

आख्यायते शब्दार्थसमष्ट्येत्याख्यानम्। अनेनाभामहान्मम्मटं यावच्छब्दार्थयोः काव्यत्वाङ्गीकरणस्याविच्छिन्नपरम्पराया अनुमोदनम्। यच्च महामहिमपण्डितराजैरुक्तं रमणीयार्थप्रतिपादकः शब्दः काव्यमिति तदपि व्याजान्तरेण

शब्दार्थसमेष्टेरेव काव्यत्वामङ्गीकरणम्। न तेनापि शब्दमात्रस्य काव्यत्वमङ्गीकृतम्। किञ्च, रमणीयार्थप्रतिपादनपरस्यापि शब्दस्याङ्गीकारे शब्दार्थावेव काव्यमिति स्फुटं भवति।

न कोऽप्येवंविधश्शब्दो योऽर्थविरहितः स्यात्। न चाऽप्यर्थः शब्दादृते सम्भवति। उभयोरविनाभावः। तदलं काव्यसङ्घटनाङ्गभूतयोः शब्दार्थयोरेकतरं प्रति स्वारस्यप्रदर्शनेन। वस्तुतः शब्दार्थावुभौ सम्भूयैव काव्यपदवीमारोहतो न पुनः पृथग्भूय। तथा च ध्वनिकार आनन्दवर्धनः- सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यत्वमिति।

तर्ह्यलं काव्यत्वप्रसङ्गे शब्दार्थयोरेकतरस्मिन् कस्मिन्नपि विवादजनयित्रीं प्रीतिं प्रदर्श्य। तस्मादुच्यते आख्यानमेव काव्यमिति। तत्किं यत्किमप्याख्यानं काव्यपदवाच्यमुताहो विशिष्टमेवेत्याशङ्क्याह लोकोत्तरमिति। अनेन काव्यत्वे रमणीयार्थत्वपक्षधरस्य रसगङ्गाधरकारस्य मन्तव्यानुमोदनं जायते।

तच्च लोकोत्तराख्यानं (काव्यं) भवति रससिद्धम्। सद्यः परनिर्वृतिकरेण रसेन प्रत्यङ्गानुविद्धमिति तात्पर्यम्। रससिद्धशब्दग्रहणेन वाक्यं रसात्मकं काव्यमिति स्थापनापराणां विश्वनाथमहापात्राणां भवति भावानुमोदनम्।

काव्यं तावत्स्वतः स्फूर्तं भावोच्छलनं किमपि। काव्यं न तावद् विमृश्य-विमृश्य, ध्यायं-ध्यायं शास्त्रमिव सायासं लिख्यते। प्राक्पश्चाद्वर्त्याग्रहविनिर्मुक्तमिदं भावोच्छलनं स्वतः स्फूर्तत्वाल्लोकोत्तरत्वाच्च भवत्येव स्वभावजम्। नेदं शास्त्रप्रभृतिवाङ्मयान्तरमिव कृत्रिमप्रयत्नसाध्यम्। काव्यस्य लोकोत्तरत्वं किन्नाम? तदुच्यते। सगुणत्वं रसाभिव्यञ्जकानां माधुर्यादिगुणानां साहचर्यम्। अदोषत्वं पदवाक्यरसादिदोषाणां मुख्यार्थहतिपर्यवसितानामभावः। निष्प्रयत्नाप्रयत्नरहिता स्वाभाविकी वाऽलङ्कृतिः। नवोन्मेषा नित्यस्फुरणा प्रज्ञा प्रतिभा। एतत्सर्वं सम्भूय काव्यलोकोत्तरत्वकारणम्।

सामान्यग्राम्यकथनापेक्षया काव्यमेभिरेव गुणैरतिरिच्यते। ग्राम्यकथनेषु वार्ताभूतेषु न भवन्ति माधुर्यादयो गुणाः, न भवन्ति हृदयावर्जकाः शब्दार्थालङ्काराः, न चापि सम्भवन्ति श्रुतिकटुनेयार्थादिदोषाणामभावाः। किञ्च न दृश्यते तत्र मनागपि प्रतिभासंस्पर्शविलासः। कथन्तु जायेत तर्हि काव्येतराऽभिव्यक्तौ लोकोत्तरत्वम्? एवं हि, काव्यस्य लोकोत्तराभिव्यक्तीभावे समेषामेव सगुणत्वाऽदोषत्वसालङ्कारत्वादिधर्माणां मम्मटाभिमतानां सद्भावोऽपेक्ष्यत इति वाग्देवतावतारस्य मम्मटाचार्यस्याप्यभिप्रायो गृहीत एव।

इदानीमर्वाचीनकाव्यलक्षणकाराणां काव्यप्रयोजनादिप्रकरणं समीक्ष्यते। तत्रोक्तं सनातनरेवाप्रसादेन-

**प्रयोजनं कवेः काव्ये नापि किञ्चन विद्यते।**
**चुङ्कृतौ कलविङ्कस्य यथा प्राभातिके क्षणे॥**

यशोभूषणकारेणाऽपि मम्मटप्रोक्तकाव्यप्रयोजनजातं समीक्षमाणेन सविस्तरं प्रतिपादितम्-

**न धनाय न पुण्याय व्यवहाराय नापि वा।**
**न च सद्यः सुखार्थाय काव्यं निर्मात्ययं कविः॥**
**वस्तुतस्तस्य कर्मैतत् संस्कारोत्थं स्वभावजम्।**
**यदकृत्वा क्षणं यावन्नासौ शमधिगच्छति॥**
**यथा नोत्पतितुं शक्तो भ्रमरो गुञ्जनादृते।**
**तथा कविरयं काव्यादृते शक्तो न जीवितुम्॥**
**काव्यमेतत्ततो मन्ये कविकर्म स्वभावजम्।**
**जन्मजन्मान्तराऽवाप्तदिव्यसंस्कारसत्फलम् ॥**
**यन्निसर्गाद् बहिर्भूतं तद् भवेत्सप्रयोजनम्।**
**निसर्गे क्व पुनस्तस्य चर्चाऽनास्थाविवर्धिनी॥**
**पश्यन्त्येव यदि प्राज्ञाः काव्यसृष्टौ प्रयोजनम्।**

परत्रेह च निर्व्याजं यशस्तन्मेऽभिरोचते॥
न च काव्येतरत्कृत्यं किमप्येतादृशं भुवि।
यदत्र परलोके च यशश्शाश्वतमर्जयेत्॥ -अभिराज॰, पृ.सं.-28

मुक्तिस्तस्य प्रयोजनम् (अभि॰ 2.2.1) इत्याह राधावल्लभः। भारतीयदर्शनोक्तमुक्त्यवधारणामनङ्गी- कुर्वन्नसौ काव्यप्रयोजनभूतायाः स्वाभिमतमुक्तेः स्वरूपमपि प्रतिपादयति। तत् सर्वं मूलग्रन्थादेवाध्येतव्यम्।

आचार्यो रहसविहार्यपि स्वाभिमतकाव्यप्रयोजनान्युपन्यस्यन् कथयति-

असन्तं मार्गमुत्सृज्य सन्तं गमयितुं जनम्।
हृदाह्लादिकया वाचा प्रज्ञावान् काव्यमङ्क्ते॥
कविकीर्तिपुरस्कारस्वान्तःसुखसमीहया ।
प्राक्कथावस्तुसंस्कारं सताञ्च चरिताङ्कनम्॥
नव्यकाव्यविधोन्मेषं व्यङ्ग्योक्तिं विकृतौ तथा।
राष्ट्रभक्तिं युगौचित्यं पर्यावरणचेतनाम्॥
राष्ट्रस्वातन्त्र्यवीराणां वृत्तञ्चाराध्यमीश्वरम्।
समुद्दिश्याधुना काव्यं कुर्वन्ति कवितल्लजाः॥

काव्यहेतुसन्दर्भे प्रायशस्सर्वेऽपि पूर्वसूरयः शक्तिव्युत्पत्त्यभ्यासपक्षधराः। तत्रापि शक्तिं प्रतिभा- प्रज्ञाऽपरपर्यायां प्रति समेषामनपायिनी श्रद्धाऽवलोक्यते। नव्येष्वपि सैव परिपाटी सन्दृश्यते। आचार्यो रेवाप्रसादो भणति नाट्यानुशासने रसभोगाख्यपञ्चमोन्मेषे-

सर्वेषामपि भावानां कलासु प्रतिभात्मता।
प्रातिभासिकसत्तात्मेत्युच्यतां दर्शनेषु सा॥

द्विवेदी रहसविहारी प्राक्तनमतमेव किञ्चित्परिवर्त्य प्रस्तौति-

काव्योपयोगिशब्दार्थोपस्थितिः प्रतिभामयी।
नैपुण्यं लोकशास्त्राणां विद्याज्ञानञ्च कारणम्॥

जागरितां प्रतिभामेव काव्यहेतुं मन्यते राधावल्लभः। मिश्रोऽभिराजराजेन्द्रोऽपि स्वमतं सविस्तरमुपन्यस्यति-

वस्तुतः काव्यप्रणयनहेतुर्द्विविधोऽङ्गीकरणीयः। अलौकिको लौकिकश्च। तत्राऽलौकिको हेतुर्दैवायत्तः। स हेतुरेव प्रज्ञा-प्रतिभा-शक्तिप्रभृतिपदवाच्यः। द्वितीयश्च लौकिको हेतुर्व्युत्पत्त्यभ्यासयुगलसमन्वितः प्रयत्नसाध्यः। एतौ द्वौ पुनः प्रतिभाया एव संस्कारकौ, न पुनः काव्यहेतू सर्वतन्त्रस्वतन्त्रौ। अनयोरभावेऽपि लोकोत्तरचमत्काकारि वाग्वैदग्ध ीमण्डितं काव्यं प्रतिभामात्रबलेन समुद्भावयितुं शक्यम्। परन्तु प्रतिभाया अभावे काव्यं न जातु प्रसरेत्, प्रसृतं वोपहसनीयं स्यात्। वस्तुतो नवनवोन्मेषवती प्रतिभैव कवित्वबीजम्। किञ्च,

प्रज्ञा बीजं कवित्वस्य शक्तिरूपा चिरन्तनी।
जन्मजन्मान्तरोपात्तसंस्कारप्रसवाऽमला ॥
मृत्तिकाजलवायूनां सद्भावेऽपि यथाऽङ्कुरः।
बीजेऽसति धरागर्भे नैव जातु प्ररोहति॥
तथैवाऽचरितेऽभ्यासे भूयो भूयोऽप्यनारतम्।
लब्धेऽपि शास्त्रपाण्डित्ये शतशाखेऽतिविस्तृते॥

**प्रज्ञां विना कवित्वस्य बीजं नैव प्ररोहति।**
**सत्यमेतद्दृषद्रेखाकल्पमूह्यं मनीषिभिः।।** –अभिराजयशो॰, पृ.सं.–35

काव्यलक्षणप्रयोजनहेत्वनन्तरमिदानीं काव्यविभाजनप्रकरणं निरूप्यते। प्राचां लक्षणकारणां विषये विदितवेदितव्या एव सर्वे। प्रायेण व्यञ्जनावादिन आचार्या उत्तममध्यमाधमवर्गीकरणपक्षधराः। भामहदण्डिभ्यां तु भाषादिदृष्ट्याऽपि काव्यविभाजनं प्रस्तुतम्। नव्येषु लक्षणकारेषु कतिपय एव वर्गीकरणोल्लेखं कुर्वन्ति। आचार्यो राधावल्लभः प्राचामेव मतमनुवदति काव्यस्योत्तममध्यमाधमभेदान् स्वीकृत्य। परन्तु अभिराजयशोभूषणकारः प्रस्तौति किञ्चिदभिनवं विलक्षणं च काव्यवर्गीकरणम्। तदभिमतवर्गीकरणे सन्दृश्यते काऽपि साधीयसी तर्कसङ्गता दृष्टिरपि। मूलग्रन्थादेव तन्मतमुदाह्रियते यथायथम्–

**काव्यं सहृदयास्वाद्यं कोविदास्वाद्यमेव च।**
**लोकास्वाद्यमिति ख्यातं त्रिविधं रोचते मम।।**
**सृष्टिस्सारस्वती पूता प्रोच्यते यदि वाऽधमा।**
**मध्यमा चेति तन्मन्ये वाङ्मयं गौरवं हतम्।।**
**व्यङ्ग्यार्थावगमे शक्ता यतस्सहृदया बुधाः।**
**पण्डिताश्चापि लक्ष्यार्थे वाच्ये लोकाः समादृताः।।**
**ततस्सहृदयास्वाद्यमाद्यं काव्यविभाजनम्।**
**भाति प्रीततमं हृद्यं स्फुरद्व्यङ्ग्यार्थजीवितम्।।**
**उत्तमं यदि चेदं स्याद्यदि वाऽप्युत्तमोत्तमम्।**
**न तत्र काचिदापत्तिर्वैषम्यं स्त मतस्य वा।।**

आचार्याभिराजकृते विभाजने न काव्यानां त्रिविधानां पौर्वापर्यप्रसङ्गो न चापि प्रवराऽवरप्रश्नः। वस्तुतो भिन्नरुचिर्हि लोकः। यस्य पाठकस्य यादृग्विधे काव्यप्रकारे सन्तुष्टिश्चित्तविश्रान्तिर्वा स एव काव्यप्रकारस्तत्कृते उत्तम इति। सहृदयानां कृते प्रतिभोल्लसितं, कोविदानां कृते पाण्डितीमण्डितं, लोकानाञ्च कृते ललितस्वभावोक्त्यादिसंवलितं काव्यं रोचते। तन्नाऽत्र प्रवराऽवरसंस्पर्शः कल्पनीयः। अत एव भणत्याचार्यः,

**कामं सहृदयास्वाद्यं काव्यं व्यङ्ग्यार्थमण्डितम्।**
**तथैव कोविदास्वाद्यं पाण्डितीपरिपाकजम्।।**
**लोकास्वादवती नूनं कवितानर्तकी नवा।**
**स्वभावोक्त्या रसज्ञानां चित्तमाकृष्य नृत्यति।।**
**या वक्त्राऽतिशयोदात्तैर्वर्णनैर्गुणगुम्फितैः।**
**लोकं रञ्जयति प्राज्यं कविता सा मता मम।।**
**शारदासत्कृपावाप्ता नवाऽभिप्रायमेदुरा।**
**अक्लिष्टपदबन्धाढ्या लोकसंस्पर्शचिन्मयी।।**
**लोकास्वाद्यापि कविता संवेदनमनोरमा।**
**गाहते हृदयं गाढं पाठकानामनुत्तमा।।** –अभिराजयशो॰, पृ.सं.–59.

■ पत्रसङ्केतः– पूर्वकुलपतिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, सनराइज–विला, लोअर–समर–हिल, शिमला।

# साम्प्रतिकसंस्कृतसाहित्यस्योपलब्धयः, नवप्रवृत्तयश्च

■ प्रो. राधावल्लभत्रिपाठी

साम्प्रतिके काले संस्कृतस्य नवाभ्युदयो जातः। अयं कालः वस्तुतः संस्कृतस्य कृते नवीनसम्भावनानां नवोन्मेषस्य च कालः वर्त्तते। संस्कृतम् आत्मानं पुनराविष्करोति, भूमण्डले पुनश्च अवतरति। वस्तुतस्तु संस्कृतं प्रत्येकं युगे आत्मानं नवीकरोति स्म। परन्तु साम्प्रतिके समये संस्कृतं यथा नवीनैः कलेवरैः नवनवैः रूपान्तरैः आत्मानमभिव्यनक्ति, तत् सर्वथा अभूतपूर्वम् एव। संस्कृतस्यायम् असाधारणो नवोन्मेषः स्वातन्त्र्योत्तरे संस्कृतसाहित्ये सविशेषं प्रतीतिपथं याति।

आधुनिकसंस्कृतसाहित्यसन्दर्भसूच्याः मम सम्पादकत्वे प्रथमं संस्करणं राष्ट्रियसंस्कृतसंस्थानतः 2002 तमे वर्षे प्रकाशमियाय। तत्र ऊनविंशे विंशे च शतके विरचिताः प्रकाशिताश्च 2098 मौलिकसंस्कृतकृतयः सूच्यां समावेशिताः। 2012तमे वर्षे जनवरीमासे नवीनं द्वितीयं संस्करणम् अस्या सूच्याः प्रकाशमगात्, यत्र ऊनविंशशतकस्योत्तरार्धात् 2011 वर्षं यावत् विरचितं प्रकाशितं च साहित्यं समावेशितम्। अस्मिन् संस्करणे साकल्येन चत्वारिंशदुत्तरपञ्चसहस्रं (5040) प्रविष्टयः सन्ति।

यदि वैदिककालात् स्वतन्त्रताप्राप्तिपूर्वं यावद् विरचितस्य संस्कृतसाहित्यस्य काचन परिपूर्णा सूची निर्मीयेत, तर्हि तस्यामपि सूच्यां एतावन्तो ग्रन्थाः कदाचिन्न स्युः यावन्तो नवीना मौलिकग्रन्थाः संस्कृते केवलं विगतपञ्चषष्टिवर्षेषु विरचिताः प्रकाश्यतां च प्रयाताः।

संस्कृतं अखिलभारतीया अन्ताराष्ट्रिया च भाषा वर्तते। अस्य महादेशस्य प्रत्येकं कोणे प्रत्येकं प्रदेशे प्रत्येकं जनपदे संस्कृतस्य कवयः पण्डिताः लेखका वा निवसन्ति। सहस्राधिकाः सुधियः सुकवयः स्वातन्त्र्योत्तरे भारते भव्यया भारत्या संस्कृतस्य सारस्वतं भाण्डागारं संवर्धयामासुः संवर्धयन्ति च। स्थालीपुलाकन्यायेन केषाञ्चित् कवीनामवदानमधिकृत्य साम्प्रतिकसंस्कृतसाहित्यस्य कासाञ्चन नवीनप्रवृत्तीनां च विषये अस्मिन् लेखे चर्चा विधीयते।

विंशशतकस्य संस्कृतसाहित्यकारेषु राव इत्युपाह्वा पण्डिता क्षमादेवी, वेङ्कटराघवन्, जग्गुबकुलभूषणः, महालिङ्गशास्त्री, दत्तदीनेशचन्द्रः, वीरेन्द्रकुमारभट्टाचार्यः, मेधाव्रतः, रतिनाथझा, रामचन्द्रगजाननकरमलकरशास्त्री, बटुकनाथशास्त्रीखिस्ते, बच्चूलालावस्थी एवमन्ये च बहवः। रेवाप्रसादद्विवेदाभिराजराजेन्द्रमिश्रसदृक्षाः बहवोऽद्यापि संस्कृते साहित्यरचनायां संलग्नाः सन्ति। अस्मिन् विगते शतके ये महान्तो रचनाकाराः संस्कृतसाहित्यनभसि नवनक्षत्राणीव द्युतिं वितेनुस्तेषु केचन मम स्मृतिपथमायान्तः सन्ति वासुदेवद्विवेदी (1913-2004) मुनिर्महाप्रज्ञः गोविन्दचन्द्रपाण्डेयश्च।

वासुदेवद्विवेदिनो पञ्चषष्टिः ग्रन्थाः संस्कृते प्रकाशं याताः। तस्य उज्ज्वलायाः मेधाया निदर्शनं वर्तते 'अद्यापि' इति 2004तमे वर्षे तस्य दिवङ्गमनानानन्तरं प्रकाशितं महाकाव्यम्। अत्र संस्मरणं, यात्रावृत्तानि भूगोलवर्णनं चेति नानाविधाः समावेशिताः। द्विवेदिवर्याणां विचाराः, चिन्तनं, समकालिकप्रसङ्गेषु तदीयाः प्रतिक्रियाः, संस्कृतप्रचारविषयककार्यक्रमाः इति बहु अस्मिन् विश्वकोशात्मके काव्यग्रन्थे समावेशमवाप। ग्रन्थारम्भे वन्दनायां सुकरात-ग्यारदाने-ब्रूनो-गैलीलियो-डानकाल्विन-जानविक्लिफ-जानहस-प्रभृतयो नवीना ऋषयो नमोवाचा प्रशंसिताः। डार्विन-फ्रायड-मार्क्स-काण्टादीनपि ऋषीनेव मन्यमानो महाकविः श्रमिकानपि वन्दते-

> **यं घोरखातमवलोक्य खनिप्रदेशे**
> **अद्यापि भीतहृदयं परिकम्पते मे।**
> **तत्रैव ते मृतिसुखे निजमर्पयित्वा**
> **श्राम्यन्ति ते परमसाहसिका नमस्याः॥** (अद्यापि, पृ.सं.-3)

आचार्यमहाप्रज्ञः (1920-2010) मुनिनथमल इति नाम्ना नानाग्रन्थान् प्रणिन्ये। तस्य संस्कृतकाव्यानां सङ्ग्रहः 'प्रकृतिविहार:' तदीयनिधनानन्तरमेव 2010तमे वर्षे प्रकाशितः। अत्र विविधविषयाश्रिताः 318 कविताः सन्ति।

**निद्रे दरिद्रानपि पश्य किञ्चिन्निर्वाससो ये निवसन्ति नित्यम्।**
**किं शीतभीता धनिनोऽनुयासि न वेत्सि भीता हि जडा भवन्ति॥**
**आलोकधन्या अपि सन्ति केचित् आलोकभीता अपि सन्ति केचित्।**
**आलोकमुग्धा अपि सन्ति केचिदालोकदक्षा विरला भवन्ति॥**

अन्येषु महनीयेषु कविषु श्रीनिवासशास्त्री, रामकरणशर्मा, जगन्नाथपाठकाः, परमानन्दशास्त्री, रमाकान्तशुक्लः, अभिराजराजेन्द्रमिश्रः, कलानाथशास्त्री, हरिरामाचार्य इत्यादयः सन्ति। एतेषु गोविन्दचन्द्रपाण्डेयस्य पद्यरचना हृद्याऽनवद्या, अस्य तेजस्विनीं सारस्वतसाधनां सा व्यनक्ति। पाण्डेयेन वासुकीकृता स्वकीया वाणी, मन्दरीकृता प्रज्ञा मथितश्च चेतनाया विराण्महासागरः निस्सारितानि च काव्यमौक्तिकानि। आत्मनो रचनाप्रक्रियां निरूपयता अनेन सुकविना स्वयमुक्तम्-

**वाणी वासुकितामधत्त सहसा स्वापायमानस्य मे**
**प्रज्ञा मन्दररूपिणी समभवच्चेतोदधिं मथ्नती।**
**इत्याकार-विवर्तकौतुकरस-प्रेक्षेरितोऽचिन्तयं**
**किं रत्नेषु लभेय कालगरलं किं वाऽमृतं संविदः॥**

काश्मीरदेशस्य सुषमा अनेन सारस्वता दृशा निर्वर्ण्य निरूपिता। तत्र अनन्यसामान्यं लावण्यं दारिद्र्यं चापि हृदयविदारकं समं निभालितम्। तथाहि-

**प्रावारानौर्णधूम्रान् दधति बहुविधान् मस्तके वेष्टनानि**
**शीतारक्ताः कपोले स्वतनुमुपहिताः कण्डिकाः सेवमानाः।**
**आस्ये हास्यं दधाना हृदयनयनगामार्तिमावेदयन्तो**
**भूस्वर्गेऽप्यत्र देशे प्रकृतिसुषमिते हन्त दारिद्र्यदीनाः॥** (-भागीरथी, पृ.सं.-139)

पाण्डेयवर्यस्य जीवनानुभवाः गहनाः पर्यवेक्षणं च सूक्ष्मम्। खलपूः इति काव्ये रमणीयं हृद्यं च चित्रं सम्मार्जकस्य असौ न्यरूपयत्-

**वाष्पप्रेरितयानसीत्कृतिचलत्सम्मर्दकोलाहले**
**सामग्रीनतभारिकावलिमिलत्सम्भ्रान्तयात्रिव्रजे।**
**पार्श्वावस्थितकान्तया प्रमुदितं संलापमाकल्पयन्**
**सङ्क्षोभं खलपूरुपेक्ष्य निरतः सम्मार्जनीबन्धने॥** (-भागीरथी, पृ.सं.-4)

सरस्वत्याः सौम्य आराधकः साधकः कविः श्रीरामकरणशर्मा विगतेभ्यः पञ्चविंशतिवर्षेभ्यः प्रतिवर्षं प्रायः सङ्कलनमेकं सुरभारतीमन्दिराजिरेऽर्पयति। अस्य सीमा, रयीश इति उपन्यासद्वयम्, मदालसा काव्यम्, (1955, प्रथमसर्गः), शिवशुकीयम्, सन्ध्या, पाथेयशतकम्, वीणा, दीपिका (1991), सर्वमङ्गला, मानसी (2000), गगनवाणी (1998), वन्दना (2011), राका (2004), कविता (2006), सुधर्मा, करुणा, शेमुषी (2009), सर्वंसहा (2010), मानसी, सुमनोलता, सिनीवाली चेत्यादीनि काव्यसङ्कलनानि प्राकाश्यं गतानि।

रामकरणशर्मणः कवितायामाहितं उदात्तत्त्वं विलसति। अयं चेतनाया ऊर्ध्वारोहणाय शब्दानां निःश्रेणीं कामपि निर्माति, विरचयति चात्मानं निःशेषीकृत्य समर्पणस्य स्वकीये काव्ये कामपि महतीं भूमिकाम्, अनुभावयति च आनन्त्यं चेतनायाः। आकाशमधिरोहति अस्य काव्यभूमिः।

**आकाशोऽहं विशालः शकलविरहितः शून्यशून्योऽप्यनन्तः**
**क्षोणीनां नृत्यभूमिस्तरणिविधुबुधाङ्गारकैर्दीप्यमानः।**
**सर्वेषामेव नित्यं सुगम इह ततः सर्वतोऽहं प्रसन्नः**
**क्षुद्रैरेभिः कपालैर्घट, किमिति ममानन्ततामाच्छिनत्सि॥** (-सन्ध्या, पृ.सं.-87)

इत्यन्योक्त्या अयमाकाशकविरिति विरुदेनालङ्कर्तुं शक्यः आतपत्रभारविरिव, घण्टामाघ इव वा।

विंशशताब्दी येषां संस्कृतकवीनां प्रकृष्टया काव्यसाधनया महीयते, तेषु अन्यतमो वर्तते जगन्नाथपाठकः। साहित्योपवने नवपवनसञ्चारचतुरेण जगन्नाथपाठकेन क्वचिद् ओमरखय्यामायितम्, क्वचिच्च गालिबायितम्। विद्यानिवासमिश्रवर्याणां शब्दावलीं श्रयन्नहं वक्तुमर्हामि यन्निखिलस्य मार्दवस्य निखिलस्य निःशेषीकरणभावस्य निखिलस्य चात्मसवनभावस्य किमपि अनुष्ठानं रचयति अस्य कविता। ईरानकाव्यगलितं भारतदर्शनसुधारसोद्वलितं, गालिबचषकोच्छलितं वितरति मधु पाठकीया कवितारमणी। अस्य निर्दूषणासु गुणवतीषु मनोहरासु आर्यास्वपि अद्यापि धुन्वन्ति शिरांसि सहृदयाः। पूर्वं क्वचिदयं काव्यजगति कापिशायिनीं वितरति स्म, परस्तात् संस्कृतसाहित्यसौधस्य नवीनां विच्छित्तिवातायनीं उदघाटयत्, अनन्तरं आर्यासहस्रारामे अरमयत् रसिकान्।

रामजीठाकुरः (1935-2012) वर्षस्य साहित्याकादेमीपुरस्कारेण सभाजितः। अस्य रचनासु 'प्रेमरहस्यम्' (2003) खण्डकाव्यं निसर्गस्य मनुष्यस्य च सम्बन्धं अतितरां संवेदनशीलया दृशा साक्षात्करोति। उपभोक्तृवादं मनुष्यस्य स्वार्थलिप्सां च कविरिह प्रत्यादिशति। वृक्षोच्छेदनस्य विरोधे जायमानमान्दोलनमत्र विषयीकृतम्। 'गोविन्दचरितामृते' (2005) रामजीठाकुरेण गोविन्दठक्कुरस्य जीवनचरितं वर्णितम्। नवीनाः छन्दःप्रयोगा अपि इह विहिताः। 2000वर्षे प्रकाशित 'आर्याविलासः' ठाकुरस्य 346 आर्याणां सङ्ग्रहः। अत्र स्वच्छन्दतावादः, अन्तर्मुखित्वं उक्तिवैशिष्ट्यं च विलसन्ति। निरीहतायामुदात्तता विच्छुरिता। तथाहि-

**मामपि पश्य मुरारे**
**क्षिप्तं पादाहतं च मार्गेऽस्मिन्।**
**मर्दितमपि प्रसूनं**
**पवनसुयोगात् कदापि गच्छेत् त्वाम्॥**

साम्प्रतिकेषु तेजस्विकविषु इदम्प्रथमतया गणनापथमवतरति सनातनो द्विवेदी रेवाप्रसादः। न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुण इति आनन्दवर्धनोक्तिं चरितार्थयन्ती अस्य कविता जीवनस्य जगतः भारतीयपरम्पराणां आख्यानानां विश्वेतिवृत्तानां च विपुलान् विविधान् पक्षान् समुन्मीलयति, व्यनक्ति कल्पनापाटवं समीक्षायाश्च सौष्ठवम्। अयं क्वचित् शकटारस्य स्मरणपुरस्सरं नेल्सनमण्डेलावर्यं महिम्ना मण्डयति, क्वचित् सप्तर्षिकाङ्ग्रेसप्रभृतिभिः कृतिभिः नव्यभारतस्य भव्याम् आयतिं परामृशति। उत्तरसीताचरिते प्रतिभाप्रकर्षं प्रकटीकृत्य स्वातन्त्र्यसम्भवे महाकाव्ये विस्तीर्णमैतिह्यं भारतस्य विवृण्वती कमपि शिखरं सारस्वतसाधनाया आरूढा एतदीया कविता नवीने कुमारविजयकाव्ये। हरिहरावदाने अस्य वाचां स्फितिः हृद्या-

**पाण्डितस्य परा स्थिती रसिकतोत्कर्षस्य रासोत्सवो**
**नेत्रोन्मीलनसद्व्रतस्य पृथुता श्रौतस्थितेः सौभगम्।**
**कान्तासम्मितदेशना प्रभुसुहृत्सम्भावनापद्ययोः**
**स्वच्छाच्छोदसरः कथा हरिहरानन्दप्रभोर्द्योतते॥** (18)

अलीगढवास्तव्यः परमानन्दशास्त्री क्वचिल्ललितनिबन्धैः क्वचिदतितरां कमनीयाभिर्गज़लगीतिभिः क्वचिद्दूतकाव्यैः क्वचिच्च खण्डकाव्यैः विपुलं कवितासंसारं ससर्ज। सघनाः अनुभूतयः, विरलैव कापि वैदग्धी, सूक्ष्माणि संवेदनानि

भाषाया विलक्षता च श्लक्ष्णता च, भावानां मसृणता, युगस्य धमनीनां स्पन्दनग्रहणमिति एतेषां विशेषानां दुर्लभः समवायो वरीवर्ति सरस्वत्याः परमानन्दः परमानन्दशास्त्री। जनविजयमहाकाव्ये अनेन आपातकालस्य विभीषिकां समर्मदारणं यथायथं चित्रिता साहित्ये। कृशकायस्य सर्वतः समुपेक्षितस्य मुख्याया धारायाः निस्सार्य परिपार्श्वे विनिक्षिप्तस्यास्य कवेः पश्यन्तु असाधारणं साहसम्। यथार्थवादस्य समुज्ज्वल आदर्शोऽनेन प्रस्तुतीकृतः। षष्टिप्रायाणि सन्ति अस्य संस्कृते स्वोपज्ञानि पुस्तकानि। प्रत्येकमस्य कृतिः नवीनां काममपि परिकल्पनां प्रस्तौति। एकविंशशतकस्य प्रथमे वर्षे अस्य मन्थनं नाम खण्डकाव्यं प्राकाश्यमायातम्। संस्कृते समकालिकतायाः सम्भावनाः यथा परमानन्देन शास्त्रिणा आविष्कृतास्ताः अन्यैरस्पृष्टा एव। मन्थने शाकुन्तलीयं पात्रजगत् आधुनिकभावबोधसंवलितं विधाय युगानुरूपं नारीमनोविज्ञानं स्त्रियाः वेदनां तदीयमन्तःसङ्घर्षं च विशद्य अभिव्यानक् कविरयम्।

आरानगर्या हृदयहारः भोजपुरीगीतकारः 'मोहमय्यां' चलचित्रेषु विहितस्वोपज्ञगीतसञ्चारः श्रीरामनाथपाठकः 'प्रणयी' यथा कवितावनितां यादृशे प्रणयपथे निनाय न तथा अन्यः। नवगीतविधा प्रणयिनः कर्तृत्वेन संस्कृते उर्वरिता।

अथ संसारमरुभुवं यथा स्वल्पैरपि प्रबन्धायमानैः पद्यैः निर्झरैरिव सरसं सिञ्चति स्म अमरुकः कविस्तथैव संख्यादृष्ट्या स्वल्पीयसीभिरपि हृदयहारिणीभिः स्वकीयगीतिभिः युगवेदनां समर्मदारणमनुभावयन्, अन्तःसंसारं समुन्मीलयन् बाह्यजगदपि समं विभावयन् श्रीनिवासो रथः-

**विज्ञाननौका समानीयते ज्ञानगङ्गा विलुप्तेति न ज्ञायते।**
**संस्कृतोद्यानदूर्वादरिद्रीकृता निष्कुटीषु स्वयं कण्चकिन्याहृता॥**

इत्येतादृश्यो अस्य कति कति गीतयो संस्कृतजगति यूनां वृद्धानां कण्ठेभ्यः पुनः पुनरावर्तिताः, रसिकानां हृत्तन्त्रीषु च मुहुर्मुहुर्जुगुञ्जुः।

भारतसन्देशः (दूतकाव्यम्) मत्कुणायनम्, महापुरुषचरितावलिः (जीवनचरितानि), लौहपुरुषावदानम् (महाकाव्यम्), श्रीगुरुरविदासशतकम्, साक्षात्कारः (भाणः), स्वातन्त्र्यसुखम्, हूणपराजयनाटकम् इत्यादिविविध-विधासु विरचिताभी रचनाभिः समपोषयत् समकालिकं संस्कृतसाहित्यं शिवप्रसादो भरद्वाजः। अस्य वचनावलीनां परिष्कृतिः, सौष्ठवादिकानि च कमपि मानदण्डं संस्कृतरचयितुः स्थापयन्ति।

अस्मिन्नेव स्वातन्त्र्योत्तरे काले अर्वाचीनसंस्कृतसाहित्यपताकां दिक्षु विदिक्षु उत्स्फालयन् रमाकान्तशुक्लः सारस्वसौधस्य कविसदसि उत्कृष्टां पीठिकां प्राप। भाति मे भारतम्, भारतजनताहम्, जयमातृभूमे-सर्वशुक्ला-सर्वशुक्लोत्तरा इत्यादिकाव्यसङ्कलनानि रूपकाणि नभोवाणीरूपकाणि च प्राकाशयत्। ओजोगुणोऽस्य कवितां प्रगुणयति, परिकरालङ्कारप्रयोगे प्रकृष्टं पाटवमयं प्रकटीकरोति। अतः परिकरकविरिति विरुदोऽस्मै क्वचिन्मयैवादीयत।

**संसारेऽपि समग्रे परितः स्वीयं करं प्रसारयन्नु।**
**परिकरमसौ प्रयुङ्क्ते साधुः काव्ये च साधु तथा॥**
**भारतभूमिभविष्यं रक्षितुमयं विनिबद्धपरिकरश्च।**
**परिकरकविरिति पदवीं शुक्लः कविरिह च लब्धुमर्हः॥**

अभिराजराजेन्द्रमिश्रस्य षष्टिप्रायाः सरससंस्कृतप्रबन्धाः प्रकाशितस्तेषु एकैकं तदीयायाः कीर्तेरक्षयः स्तम्भो वरीवर्तीति न संशीतिः। तेन सर्वथा सम्पन्नतरः समजनि सुरसरस्वत्याः साहित्यभाण्डागारः। तत्र अरण्यानी (1999), संस्कृतशतकम् (1999), अभिराजसहस्रकम् (1999), मृगाङ्कदूतम् (2003), चर्चरी (2004) इति खण्डकाव्यानि; मधुपर्णी (2000), कौमारम् (2001), मत्तवारणी (2002) इति च गीतसङ्कलनानि; दशाधिकानि एकाङ्कनाट्यसङ्कलनानि, नाट्यनवग्रहम् (1999) इति नव एव नवानां नाट्यानां सङ्ग्रहः (1999), प्रमद्वरा, विद्योत्तमा - प्रशान्तराघवम्, लीलाभोजराजम् (2011) इत्यादीनि सम्पूर्णरूपकाणि, इक्षुगन्धा, राङ्गडा, चित्रपर्णी (2001), छिन्नमस्ता (2010) इति लघुकथानां सङ्ग्रहः, समीक्षासौरभम् (2004) इति समीक्षाग्रन्थः अभिराजयशोभूषणम् इति च अंशतः प्रकाशितः काव्यशास्त्रग्रन्थ उल्लेखमर्हन्ति।

अनवरतं प्रतिपदं प्रगुणयति महाकविरयं स्वीयां काव्ययात्राम्। समधिकतरं प्रौढिमानं प्रकर्षं च गाहमानं दरीदृश्यतेऽस्य कृतित्वम्। कवितासु क्वचिदयं प्रत्याख्यानपरुषः, क्वचिच्च परमकरुणामयः, क्वचिदयं निकामतैलं चुच्यन्तीं राजधानीं निरूपयति, क्वचित् पामराणां पर्णशालाः विलोकयति। अनेन मत्तवारण्या प्रत्याख्याता मदान्धाः, रचिता मोहभङ्गस्य भूमिका, उत्थापिताश्च प्रत्याख्यानपरुषाः स्वराः। अस्य प्रत्येकं गीतिर्महावाक्यमाना वर्तते, मनोमथननिस्सृता वेदना अस्य गीतिषु विच्छुरिता, तथैव अस्य कथासु सामाजिकी चेतना भारतीयमध्यवर्गीयसमाजस्य समस्या मानवीयरागात्मकसम्बन्धानां च ऊष्मा विशिष्य विलसति। अभिराजो भारतीय-पौराणिकाख्यानानां प्रयोगं समकालिकविसङ्गतिबोधाय विलक्षणया रीत्या करोति-

**त्वामपि न कौशिकोऽसौ चाण्डालतां नयेत्।**
**सत्यं विचिन्त्य भाषय बन्धो शनैः शनैः॥** (-मत्तवारणी, पृ.सं.-38)

कालिदासीया उक्तय एतस्य कवितासु नवीनं भावबोधं प्रकटयन्त्य उन्मिषन्ति, अन्यच्छायायोनेः काव्यस्य च समुज्ज्वलं निदर्शनं प्रस्तुन्वन्ति। तथाहि-

**अज्ञातहृत्सु वैरीभवति स्मरोत्सवः।**
**हृदयं ततस्समर्पय बन्धो शनैः शनैः॥**(-मत्तवारणी, पृ.सं.-38)

अत्र शाकुन्तलप्रसङ्गो नवयुगानुरूपं परिणतः कमपि चमत्कारमातनोति। तथैव-

**जडानां को नु लाभो मम बृहत्कथया मदान्धानां**
**गुणाढ्योऽहं पिशाचानेव सदयं श्रावयिष्यामि॥**(-मत्तवारणी, पृ.सं.-28)

**काममेरण्डकल्पास्तरूयन्ति ते**
**कीर्णदूर्वा वयं नो भवामो वृथा॥** (-मत्तवारणी)

आधुनिकसाहित्ये स्वच्छन्दतावाद इत्यभिधीयमानं प्रस्थानं समुल्लसति सर्वंकषं सर्वदैव सततं काव्ययात्रायामभिराजस्य। तेनासौ निरर्थकवचोवितानप्रथनपरं पाण्डित्यं न्यक्करोतितराम्, निष्कलुषं च भावसौन्दर्यं बहुमन्यते। आत्ममन्थनोद्गतं जीवनदर्शनमेवासौ वृणोति, न पुस्तकीयं पाण्डित्यम्। अतश्च शुष्कपाण्डित्यं न्यकुर्वन्नाह-

**सम्पूर्णनग्नशिशवो ननु पामराणां**
**भिक्षाटिनां गलिकघोणजलप्रवाहाः।**
**स्वैरं हसन्त इव लक्ष्यपतेः समृद्धिं**
**निघ्नन्ति पल्वलजले शफरान् प्रहृष्टाः॥** (-अरण्यानी, पृ.सं.-61)

राजेन्द्रमिश्रो मुहुर्मुहुः पामराणां पल्लीषु भ्रमति। के सन्ति एते पामराः? एते पामराः पापा न सन्ति एते पददलिताः निम्नवर्गीयाः सन्ति।

**प्राणतन्त्रीस्फुरत्काकलीकौतुकैः**
**पामराणां कुटीरे स्थितं मन्मनः॥**
**स्नातं नो चेद् दैन्यशीताम्बुपूरे**
**को लाभस्ते जाह्नवीस्नानपुण्यैः।**
**दृष्टं नो चेत् पामराणां कुटीरं**
**को लाभस्ते सन्निसर्गावलोकैः॥** (-अरण्यानी, पृ.सं.-80)

**ते प्रसन्ना यथा स्वीयमेघागमे**
**मोदमाना वयं स्वे निदाघे तथा।**
**ते रमन्ते सदा सम्पदामुत्सवैः**
**राधतेऽस्मन्मनः पामराणां कथा।।**

**परितोऽपि पामराणां तृणशालिका इमाः**
**होलानलं समिन्धय बन्धो शनैः शनैः।।**

अम्बिकादत्तव्यासेन शिवराजविषये उपन्यासस्य यः प्रशस्तः पन्थाः विनिर्मितः, यं च मुनिर्मेधाव्रतः स्वकीयेन कुमुदिनीचन्द्रेण व्यद्योतयत्, यत्र सूर्यप्रभा किं वा वैभवपिशाच इत्यादिभिः प्रगल्भगद्यमण्डितैः श्रीनिवासः शास्त्री सूर्यप्रभां प्रकटीचकार, यत्र आनन्दवर्धनो रत्नपारखी कुसुमलक्ष्मीं व्यकासयत् तत्र स्वकीयैः नवलनवलैरुपन्यासै- राधुनिकतायाः पदक्षेपं चकार केशवचन्द्रदाशः। अस्य उपन्यासेषु कवितासु च आधुनिकभावबोधः अस्तित्ववाददर्शनं चेतनाप्रवाहरीतिश्च विशिष्य विलसति। एकविंशशतकस्य अस्मिन्नेव द्वितीये शतके प्रकाशितैः मदुपज्ञैः त्रिभिरुपन्यासैः संस्कृतोपन्यासः नवीनमेव पार्श्वपरिवर्तनं चकार इति मन्ये।

कल्पवृक्ष इति नाट्यसङ्ग्रहे संस्कृतस्य नवोन्मेषप्रतीकभूतो हर्षदेवो माधवः, केशवचन्द्रो दाशश्चापि चमत्करोति कथासाहित्ये नवप्रयोगैः। सत्यमेव जागरितप्रतिभाया कमपि चमत्कारं वितनोति हर्षदेवमाधवः। अयं कविताकामिनीं सुधासिन्धोर्मध्ये अवगाहयति, मानसं नैमिषारण्ये भ्रमयति। मनसो नैमिषारण्ये (2003), तव स्पर्शे स्पर्शे (2004) ऋषेः क्षुब्धे चेतसि (2004) इति नैका रचना प्रकाशिता अभूवन्। 'कल्पवृक्षं' विरच्य माधवेन संस्कृतकाव्योद्याने कश्चन अभूतपूर्व एव कल्पवृक्षो रोपितः। अयमस्य नाट्यसङ्ग्रहः। अस्य रचनासु संस्कृते पूर्वमप्रयुक्ताः शिजोताङ्काहायकूप्रभृतयो वैदेशिकाः काव्यप्रकाराः परावास्तववादः (सुर्रियलिज्म) उत्तराधुनिकतावादः वैश्विकी चेतना इत्येते अनन्यसामान्या विशेषा जाग्रति। लसन्ति 'कल्पवृक्ष' शीर्षकेनैव पञ्चरूपकाणि, कामधेनुः वर्तमानमिति च रूपकद्वयम्। एतेषु रूपकेषु कल्पवृक्षस्य प्रतीकद्वारेणोद्घाटिता वर्तमानकालिकी विसङ्गतिः, भारतीय-प्रज्ञा, सनातनी जीवनदृष्टिः, नूतननाट्यविधानम्, नवीनरङ्गपरिकल्पना च। एतेषु रूपकेषु दार्शनिकोऽवबोधः, चिन्तनम्, क्रान्तदर्शिप्रज्ञा च विद्यते।

अनेन अनुद्धाता आयामा आलोकिताः अक्षुण्णा दिश उद्घाटिताः। मूको रामगिरिर्भूत्वा इत्युपन्यासे अनेन अन्तर्बाह्यजगतोः सामञ्जस्यं व्यधायि। प्रकाशोपनिषदि मन्त्रोपनिषदि नानृषिः कविरित्युक्त ऋषिश्च किल दर्शनादिति भट्टतौतवचश्चरितार्थीकृतम्। किं बहुना-

**अमन्दानन्दस्रोतःप्रवह इव निर्बाधविपुलः**
**सुधासिन्धोर्मध्ये प्लव इव तरङ्गच्छुरणः।**
**प्रकाशस्यालोको रणरणकसंवेदनमिदं**
**चमत्कारो भासामुपनिषदि यन्माधवकृतिः।।**

"तव स्पर्शे स्पर्शे" इत्यस्मिन् सङ्ग्रहे तिब्बतीयप्रणयगीतम् ग़ज़लगीतानि च नवीनं किमपि योजयन्ति माधवस्य काव्ययात्रायाम्। "ऋषेः क्षुब्धे चेतसि" इति अस्मिन्नेव वर्षे (2004) प्रकाशिते अष्टादशे स्वकाव्यसङ्कलने माधवः स्मारयति यत् क्षोभोऽपि रस इति निरूपितोऽभिनवगुप्तात् प्राक्तनैराचार्यैः, यत्र श्रूयते "मन्दिरघण्टनादः। सीम्नः पारे खे/ शतघ्नीशब्दः।"

केशवचन्द्रदाशस्य तिलोत्तमा इत्युपन्यासः 1980-82 वर्षयोः सुधर्मेति दैनिके धारावाहिकं प्रकाशितः, पुस्तकाकारं च प्रकाश्यतां गतः। निम्नपृथिवी (2001) इति सङ्कलने वैदिकोऽध्यात्मबोधोऽनेन पुनः प्रतिष्ठापितः। शून्यनाभिरिति कथासङ्ग्रहः नवीनं प्रस्थानं रचयति तस्य कथायात्रायाः। अत्र सैव सरलता च वक्रता च, सैव भङ्गिमा गद्यस्य ततोऽपि निर्बाधः उत्कलिकाप्रायाणां चूर्णपदानां च प्रवाहः किन्तु विषयवस्तु यथैव सरलं तथैव निगूढम्।

सम्भावनागर्भं वर्तते केशवचन्द्रीयं रचनाविश्वम्। अयं च्विपण्डित:, प्रायो वाक्येषु अभूततद्भावार्थां च्विप्रत्ययमयीं पदावलीं प्रयुञ्जानो सम्भावनां समग्राया: सृष्टेरुन्मीलनयति। अन्धस्रोत (2004) इति तदीये नवीनतमे काव्यसङ्कलनेऽनुभूयन्ते कवेरस्य सर्वाण्यपीमानि वैशिष्ट्यानि। अत एवैतादृशनां नूतनपरिकल्पनामनोहराणां यूनां च रचना: भावयता साम्प्रतिकसंस्कृतसाहित्यं लक्षयता मयोक्तं स्पन्दो यौवनगतो नवो नवश्चेति।

वाराणस्यां जीवनस्यावसानवेलायां निवासं विहितवतां अस्मद्गुरुचरणानां रामज्युपाध्यायानां द्वौ उपन्यासौ नैकानि रूपकाणि च स्वातन्त्र्योत्तरे काले प्रकाशितानि। तेषु सीताभ्युदयम्, कैकेयीविजयम्, अशोकविजयम्, नन्दगौतमीयं शम्बूकचरितञ्च परिचाययन्ति अतीतवृत्तान्तानामादर्शप्रवणा व्याख्या संरम्भेण।

कथनिकासु कलानाथशास्त्रिण: कथानकवल्ली तदीयां समाजदृष्टिम् अनाविलां गद्यसृष्टिं च परिचाययति। अस्मिन्नेव स्वातन्त्र्योत्तरकाले दीक्षितपुष्पा अग्निशिखाया स्फुल्लिङ्गान् आविष्कृतवती। मिश्रोपाह्वो विन्ध्येश्वरीप्रसादो मिश्रयति सपरिष्कारं प्रकटीकृतवान् व्रजभाषामाधुरीं स्वीये संस्कृतपद्यनिकुम्बरे, अभिव्यानक् च पारम्परिकीं प्रज्ञां प्रज्ञाम्, साकूतं परामर्शं सोत्प्रासं च आधुनिकीं विडम्बनाम्। हरिराममिश्रो स्वगीतेषु अजस्रं मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीं प्रावाहयत्। त्रिपाठी भास्कराचार्यो वक्रोक्तिविच्छित्तीनां चमत्कारमाततान। अयं साकेतसौरभं नाम रामायणोपजीवितं महाकाव्यं व्यरचयत्। अवतार-संस्कार-सङ्कल्प-सहकारोद्योग- विक्रमाभिषेकदिग्विजयसंज्ञैरष्टभि: सर्गै: समन्वितमिदं नवीनां परिकल्पनां योजयति पुराणकथायाम्। (साकेतसौरभस्य भूमिका : भास्कराचार्यत्रिपाठी, अर्वाचीनसंस्कृतम्, 24/4, पृ.सं.-10-12)। प्राचां रीत्या गद्यपद्यनिबन्धनदक्ष: कविरियं स्वोपज्ञं साकेतसौरभे रिङ्गो हाइकू इति छन्द: प्रस्तावयति।

एतेषु वर्षेषु दृक्पत्रिकाया जीवातुभूतो संस्कृतोद्यानमाली वनमाली विश्वालो विश्वासं पुपोष रचनाया: सातत्येन। तदीयं कथाकर्तृत्वं च कवित्वं च परस्परेण स्पृहणीयशोभम्। 'नीरवस्वनम्' (1998) समतीत्य प्रखरं मुखरीभूता तदीया बुभुक्षा (2001), यत्र संस्कृतकथनिका कथञ्चित् स्खलन्ती पुनरग्रे पदं च ददतीवावलोक्यते। विविधभावनागर्भा आधुनिकसमाजस्य रीतिनीतिनिरूपणसम्पन्ना: इमा: कथा: आधुनिक- साहित्यसमृद्धिं परिचाययन्ति। यात्रेति काव्यसङ्कलनेन वनमालिनो विश्वालस्य काव्ययात्रा क्वचिन्नतोन्नतेषु अवस्थानकेषु स्थीयते, क्वचिच्चाग्रत: गम्यते। 'जगन्नाथचरितम्' कथाजगति अस्य नवीनं चङ्क्रमणम्। अत्रानुभूयते लोककथानां रस:, समं च विश्वबोध संवलितो भक्तिभाव:। अनन्तरं च जिजीविषायां पुनरपि अग्रेसरा आस्ते तदीया कथानैपुणी।

कथाकारेषु 'अनाघ्रातं पुष्पम्' प्रस्तूय प्रशस्यमित्र: शास्त्री 'आषाढस्य प्रथमदिवसे' (2001) इत्यस्मिन् कथासङ्ग्रहे समकालिकजटिलजीवनस्य तानं च वानं च महता वितानेन विरचयति। प्रमोदकुमारनायकस्य लघुकथासङ्कलनं कथासप्तति: तथैव व्यङ्ग्यकथासङ्ग्रहश्च स्वर्गादपि गरीयसीति 2003तमे वर्ष एव प्रकाश्यतां गते सम्पदानन्दमिश्र: हास्यमञ्जर्याम् (2001) लघुहास्यकथानां छटां वितनोति।

अस्मिन्नेव स्वातन्त्र्योत्तरे काले अस्य जनस्यापि संस्कृते मौलिकप्रबन्धानां पञ्चविंशति: प्रकाशमवाप। तेषु 'तण्डुलप्रस्थीयम्' नाम दशाङ्कं प्रकरणं लोककथाया दार्शनिकीं, मनोवैज्ञानिकीं, सामाजिकीं च भूमिमुद्घाटयन् 1999तमे वर्षे प्रकाशितम्, 'विक्रमचरितम्' नाम अभिनवं गद्यगुम्फितमाख्यानं पञ्चतन्त्रादिषु व्यवहृतां निदर्शनां नाम विधां समाश्रयद् नूतनाया: पशुकथाया आधुनिकराजनैतिकप्रसङ्गे मर्म स्फोरयत् 2000वर्षे प्रकाशितम्, तस्मिन्नेव च वर्षे 'सम्प्लवो' नाम जीवनानुभूतीनां सम्प्लवात्मकतां निदर्शयन् समागत: काव्यसङ्ग्रह:। 'लहरीदशक'स्य च द्वितीयं संस्करणं 2003तमे क्रैस्तवाब्दे गोचरीभूतम्। सम्प्लववर्जं सर्वेऽपि त्रयो ग्रन्था हिन्दीभाषानुवादसहितं प्रकाशिता:। अभिनवशुकसारिका च मे सद्य:प्रकाशिता अभिनव-कल्पनाढ्या कथारचना।

साम्प्रतिके संस्कृतसाहित्ये चिरन्तनमूल्यै: संवलितं जागर्ति बच्चूलालावस्थिनो गज़लवैभवम्। एकत: प्रौढानां प्रज्ञा साधकानां साधना समग्रयति संस्कृतसाहित्यस्य अभिनवं परिदृश्यम्, अपरत उत्तिष्ठति जागर्ति यूनां नवस्पन्दनं नवश्च संरम्भ:। एतादृशेषु रचनाकारेषु उल्लेखमर्हति जनार्दनप्रसादो मणि:, प्रवीण: पण्ड्या, नारायणदाशश्च। नारायणदाशस्य उपन्यास: 'वह्निवलय:' कथासङ्ग्रहश्च 'हत्याकारी क:' इति पुस्तकद्वयं 2002-3 वर्षयो: प्रकाश्यतां गतम्। अस्य लघुकथानां सङ्ग्रह: 'गङ्गे च यमुने चैव' (2002) कथासाहित्ये किमपि सोपानम्।

स्वातन्त्र्योत्तरे संस्कृतसाहित्ये नवयौवनं सम्प्रति समुच्छलति, नूतनविन्यासं विधातुमुत्कायते, रूढिवादिनश्च सभ्रूभङ्गं नासिकाविकूणनपुरस्सरं प्रेक्षन्त एतं नवयौवनसमुन्मेषम्। परन्तु प्रौढा अपि न न अस्पृष्टा अनेन यूनां नवप्रयोगचातुर्येण। भागीरथिर्नन्द: भारतीयगणतन्त्रमिति काव्ये (2001) भारतीयं यथार्थं साक्षात्कुरुते।

स्वातन्त्र्योत्तरे भारते संस्कृतं समाजस्य मुख्याया धाराया बहिष्कृतं क्वचिच्च न्यक्कृतम्, क्वचिच्च बलात् परिपार्श्वे नीतमपि समुल्लसत्येव नवपरिकल्पनाभि:, तथैव पर:शतं सन्ति संस्कृते अपेक्षिता: अनभिज्ञाता: मूकसाधका इव सरस्वतीसमाराधनसंलग्ना साहित्यकारा येषां नामानि न सङ्गोष्ठीषु शोश्रूयन्ते, न च येषां यशोदुन्दभेर्डिण्डिमनादो ध्वन्यते साम्प्रतिके साहित्यघण्टापथे। अस्यामेव एकविंशशताब्द्यां श्यामानन्दरचनावलिं प्रकाश्य किशोरनाथझामहोदयेन विंशशतकस्य विस्मृतप्राय: कश्चन महान् संस्कृतसाहित्यकार: शवाधान्या: बहिर्निस्सार्य इव पुनरुज्जीवित:। एतादृशा विस्मृता: पर:शतं सन्ति महान्तो रचनाकारा ये ऊनविंशशतके विंशशतके वा साहित्यनभसि नूतननक्षत्रसमकक्षा आविर्भूता: अद्वितीयां च स्वकीयां प्रभां विकीर्य अस्तं प्रयाता:। अस्माकं सर्वेषां संस्कृताभिमानिनां विशिष्य यूनाम् अनुसन्धातॄणामेतद् दायित्वं यत् ते एतादृशानां पुनरुद्धारं कुर्यु:। तेषु एषम: साहित्याकादेमीपुरस्कारेण सभाजित: काव्यप्रदीपकर्तुर्गोविन्दठक्कुरस्य कश्चिद् वंशज: रामजीठक्कुर: वैदेहीपदाङ्कम्, राधाविरहम्, बाणेश्वरीचरितम्, प्रेमरहस्यम्, मातृस्तन्यम्, गोविन्दचरितामृतम्, आर्याविलास इति स्वकीयै: प्रकाशितै: काव्यै: स्वकीयां मौनसारस्वतसाधनां प्रगुणीकृतवान्। तथैव बङ्गप्रदेशस्य हुतात्मन: सूर्यसेनस्य चरितं शतश्लोकै: विरचितं रामशङ्करेण अवस्थिना, अजीजनबाई (2008) इति वेश्याया अनुपमदेशभक्तिगाथा अनेन प्रस्तुता एकाशीत्युत्तरशतश्लोकै: (2010) अस्य वनदेवी इति बृहत्कायं महाकाव्यमपि।

दिल्लीवास्तव्य: 'अभिनवकाव्यशास्त्रम्' इति प्रशस्तस्य ग्रन्थस्य कर्ता नवावतार: संस्कृतसारस्वतसाधनाया: अवतरे इत्युपाह्व: शङ्करदेव: अपि एतादृशेष्वेव महनीयेषु महाकविषु अग्रगण्य:, ये आत्मप्रचारात् पृथग्भूता: कण्ठनिकृन्तनशीलायां आधुनिकजीवनस्य स्पर्धायां भागमगृह्णाना स्वातन्त:सुखाय सरस्वत्यास्तोषाय अनवेक्षितप्रचारा:। जीवनमुक्तकम् इति काव्यं अवतरेर्यस्य महनीया रचना, तथैव नारीविमर्शस्य विलक्षणमुदाहरणं तदीयं नारीगीतमिति काव्यम्।

सम्प्रति स्वातन्त्र्योत्तरसंस्कृतसाहित्यस्य कासाञ्चन प्रवृत्तीनां चर्चां कर्तुमुत्सहे।

1. स्वातन्त्र्योत्तरे काले ये रचनाकारा: संस्कृते कवयन्ति गद्यं वा रचयन्ति, तेषां मन:सु अनच्छिष्टपूर्वमनास्वादितरसं च नवीनं किमपि रचयाम इति भावो जागर्ति। अत एव नैके ग्रन्थकारा: संस्कृते विरचितस्य स्वकीयपुस्तकस्य शीर्षके अभिनव इति नवीन इति विशेषणं स्वयमेव योजयित्वा स्वरचनाया नामकरणेनापि तस्या: नावीन्यं घोषयन्तो दृश्यन्ते स्वातन्त्र्योत्तरे काले। त्रिंशत्प्रायाणां पुस्तकानां नामसु अभिनव इति पूर्वपदस्य प्रयोगो मया लक्षित: तद्यथा- अभिनवकथानिकुञ्ज: (शिवदत्तशर्मचतुर्वेदी), अभिनवकवितानिकुञ्ज: (केशवशर्मा), अभिनवकाव्यम् (जन्मेजयविद्यालङ्कार:), अभिनवकाव्यशास्त्रम् (शंकरदेव: 'अवतरे'), अभिनवकाव्यालङ्कारसूत्रम् (प्रो. राधावल्लभत्रिपाठी), अभिनवगीताञ्जलि: (केशवशर्मा), अभिनवचिन्तनम् (कैलासनाथद्विवेदी), अभिनवनाट्यपञ्चकम् (शिवप्रसादभारद्वाज:), अभिनवनीतिकथा: (देवीनाथमिश्र:), अभिनवमेघदूतम् (वसन्तत्र्यम्बकशेवडे), अभिनवरागगोविन्दम्, नूतनगीतसङ्ग्रह: (शिवप्रसादभारद्वाज:), अभिनववासवदत्ता (श्रीवट्टिपल्लिनरकण्ठीरवशास्त्रिणा), अभिनववीणा काव्यसङ्ग्रह:, (लक्ष्मणसिंहअग्रवाल:), अभिनवशारीरकसंहिता (अनूदितम्, प्रो. दिनकरगोविन्दथत्ते), अभिनवशुकसाप्तिका (कथा, प्रो. राधावल्लभत्रिपाठी), अभिनवसंस्कृतकथा (लघुकथा, नारायणशास्त्री काङ्कर:), अभिनवसंस्कृतनाट्यमञ्जरी (अनन्तगोपालदेशपाण्डे), अभिनवसंस्कृतसुभाषितसप्तशती (नारायणशास्त्री काङ्कर:), अभिनवसीतारावणसंवादझरी (काव्यम्, बच्चुसुब्बरायगुप्त:); अभिनवहनुमन्नाटकम् इत्यादीनि।

2. नायकस्य अवधारणा परिवर्तिता, दिव्या नायका: भवन्तु, महाकुलसम्भवा: धीरोदात्ता: राजानो वा नायका: प्रबन्धस्य इति आग्रह: प्रथमं शिथिलीकृत: अनन्तरं च विमुक्त:। गान्धिनमधिकृत्य पर:शतं प्रबन्धा: प्रणीता:, स्वयमपि स्वतन्त्रतासङ्ग्रामसेनानी: तप:पूतेषु युगपुरुषेषु अग्रगण्य: माधवहरिअणेमहोदय: द्वादशसहस्रपद्येषु तिलकयशोर्णव इति प्रबन्धं प्रणिणाय। स्वातन्त्र्योत्तरे काले विशेषत: ये समाजस्य निम्नवर्गेषु जनिं लब्धवन्त:। राष्ट्रोद्धार-कर्तारो नेतारो वा अभूवन् महात्मानस्तानधिकृत्य महाकाव्यानि काव्यानि वा बहूनि प्रणीतानि। पद्मशास्त्री लेनिनामृते महाकाव्ये रूसदेशस्य क्रान्तिकारिणो लेनिनस्य चरित्रं निबद्धवान्। बहव: संस्कृतकवय: आधुनिकानां ऋषिकल्पानां महापुरुषाणां जीवनं विषयीचक्रु: रचनासु। रमणोदयमहाकाव्ये विश्वनाथशास्त्री रमणस्य

महर्षेश्चरितं वर्णयामास। चिन्मयानन्दचरितम् रामकृष्णवारियरवर्यस्य गते वर्षे प्रकाशितम्। रविदासचरितं निबबन्ध शिवप्रसादो भारद्वाजः। अम्बेडकरविषये महाकाव्यद्वयं प्रकाश्यतां गतम्, एकं बलदेवसिंहस्य अपरं प्रभाशंकरजोशिवर्यस्य। वसवेश्वरमधिकृत्य महाकाव्यम्, गुरुघासीदासचरितम्, सतनामिगौरवम् इत्यादीनि महाकाव्यानि संस्कृते दलितवर्गीयनायकान् प्रतिष्ठापयन्ति। घासीदासचरितम् हीरालालशुक्लस्य सतनामिगौरवम् इति मिथिलाप्रसादस्य त्रिपाठिनश्च वर्तते।

3. प्रबन्धकाव्यपात्रमण्डल्यां पुरुषाणां वर्चस्वमपि क्वचित् क्वचित् ह्रसितम्। इदानीं नायिकाप्रधानानि महाकाव्यानि कथाः उपन्यासा वा बहुधा विरच्यन्ते। यथा झाँसीश्वरीचरितम् सुबोधचन्द्रपन्तस्य, मीरालहरी क्षमादेव्याः ममैव अभिनवशुकसारिका वा। तत्र न केवलम् नायकस्य स्थाने काचन स्त्री वर्तते, वर्चस्वमपि तदीयमेव। स्वयम्प्रकाशशर्मा भक्तसिंहचरिते सरदारभगतसिंहस्य क्रान्तिभावपावितं विलक्षणं चरितं निबध्नाति। पूर्णचन्द्रशास्त्री अपराजितावधूरिति महाकाव्ये निम्नवर्गीयां काञ्चन महिलां स्वप्रबन्धस्य नायिकां निरूपयति।

4. दलितचेतना साम्प्रतिके संस्कृतसाहित्ये जजागार। उमाशंकरशर्मा त्रिपाठी अस्पृश्यान्तर्निवेदितमिति अत्यन्तं मार्मिकं काव्यं प्रणिनाय। अवस्करग्रहणम् इति काव्यं सुब्रह्मण्यशर्मणः विष्ठावाहकान् अन्त्यजान् विषयीकृत्य प्रणीतम्।

5. भारतस्य पुनर्निर्माणचेतना स्वातन्त्र्योत्तरे संस्कृतसाहित्ये कामपि विच्छित्तिं विकासयति। स्वतन्त्रताप्राप्तेरनन्तरं भारतस्य नवनिर्माणं भविष्यतीत्याकाङ्क्षया बहुभिः कविभिर्नवीनभारतमधिकृत्य स्वकीयं मनीषितं चिन्तितं आकाङ्क्षितं च काव्येषु व्यक्तिपथमुपनीतम्। रमाकान्तशुक्लस्य काव्यानि अत्र निदर्शनम्। वे. राघवन्महोदयेन पुनरुन्मेषः इति नाटकं विरच्य अत्र काचन दिग् दर्शिता। राधामोहनउपाध्यायेन भारतविजयकाव्ये आ वैदिककालात् पोखरणविस्फोटप्रयोगवर्षाच्च भारतस्य ऐतिह्यमनया दृशा विशदीकृतम्। रमेशचन्द्रः नवभारतपुराणम् रचयामास।

6. मोहभङ्गस्य अभिव्यक्तिः- अथ प्रजातन्त्रविधयः विसङ्गतिः याताः, नेतारो भ्रष्टाचारकदाचारपङ्के निमग्नाः दरिद्रा समधिकतरं दरिद्रीकृताः, एताभिः स्थितिभिः मोहभङ्गस्य भावः प्रादुर्भूतः, तेन सह क्वचिन्निराशा क्वचिच्च युयुत्सा विच्छुरिता यो हरिदत्तपालीवालो निर्भयः परतन्त्रे भारते सहि-

**अटलक्रान्तेर्गायत गीतं प्रलयताण्डवं मण्डयत**
**शान्तं गगनं विक्षोभयत द्विषतां हृदयं कम्पयत।**
**स्वतन्त्रतासम्मदमदमत्ता बलिवेदीवर्त्माध्वन्या रे**
**कथं न वो बिभियाद् वोऽरिजनः शिरसा धृतमृतिशीर्षण्या रे**
**अद्य निराशायामाशायाः पुनरपि सञ्चारम्**
**बन्दिनो भङ्क्तः कारागारम्**

तथा च-

**यद्यस्ति जीवितव्यं क्राम्याम् देहलीं तत्**
**यद्यस्ति वर्तितव्यं क्राम्याम देहलीं तत्**

इत्यादीनि बहूनि ओजस्विन्या स्फुरन्त्या पदावल्या सन्दृब्धानि गीतानि प्रणिनाय, स एव हरिदत्तपालीवालः-

**स्वमातृमूर्धखण्डनं स्वतन्त्रतात्मकः शिशुः**
**विधाय हाऽवतीर्णवान् समुत्सवं वितीर्णवान्**
**अनाप्य हा तटं तरौ तु कर्णधार ईयिवान्**
**अनेकधा प्रवातवातबाधनं समेयिवान्**
**पपात पातकायुतैर्युतोऽमरेन्द्रिसद्मनि**

**सुपुण्यवांश्च रौरवे किमेयमस्ति लक्ष्यता**
**स्वराज्यमागतं सुराजता परन्तु नागता॥**

तथापि जिजीविषां तु न जहाति संस्कृतकविः- ग्रामा विपर्यासं गताः तथापि तेषु निवासाय अयम् उत्सहते एव-

**दुःखाकरोति दृष्ट्वा ग्रामटिका भारतस्य मां यदपि।**
**अस्यामुषितुं तदपि प्रकाममाकाङ्क्षते चेतः॥** (-ग्रामटिका, जगन्नाथपाठकः)
**सर्वं तन्त्रमाकुलं जातम्।**
**जनता पिष्टा कुत्सितचक्रे सहते शतघातम्॥** (-हा पिष्टा जनता -हरिदत्तशर्मा)
**माननीयनेतृणां चरणध्वनयः श्रूयन्ते**
**तदा**
**समाधिः शनैः शनैर्ब्रवीति**
**हे राम! हे राम! इति।** (-राजघाटे, हर्षदेवमाधवः)
**बुद्धस्य भिक्षापात्रे**
**निमज्जितमस्ति**
**अणुबाम्बदग्धं नगरम्।** (-नगरम्, हर्षदेवमाधवः)

7. अपरा प्रवृत्तिः स्वातन्त्र्योत्तरसाहित्ये वर्तते विडम्बनशैल्या नवावतारः। मोहभङ्गस्य भावे व्यक्तिपथमुपयाते तेन सह अभिव्यक्तिः रीतिरपि वा परिवर्तनं याता। बहुभी रचनाकारैर्विडम्बनशैली समाश्रिता। वे. राघववर्येण प्रतामरुद्रविजयम् विद्यानाथविडम्बनं नाम रूपकं रचयित्वा अत्र मानदण्डः प्रस्तुतः। वीरभद्रमिश्रसदृशाः प्रखरखरतरं प्रहरन्तः रघुवंशस्य विडम्बनां लघुवंशसदृशकाव्यानि रचयामासुः।

8. वैश्विकी चेतना सम्प्रति जागर्ति संस्कृतसाहित्ये। ओम्प्रकाशपाण्डेयः रसप्रियां पेरिसराजधानीं विवृणोति, सत्यव्रतः शास्त्री थाईदेशविलासं निदर्शयति।

9. शिजो-ताङअका-हायकू-सानेट्-प्रभृतिनवीनाः काव्यप्रकाराः ललितनिबन्धनभोवाणीरूपकाद्याश्च पूर्वतनैरस्पृष्टा अपि विधाः विलसन्ति साम्प्रतिके संस्कृतसाहित्ये।

10. मुक्तच्छन्दो नाम न नवीना विधा संस्कृते। छन्दसां बन्धनं त्रोटयित्वा सहजं प्रवहति केषाञ्चन काव्यधारा। त उपाददति मुक्तच्छन्दः। इदं च मुक्तच्छन्दो नाम न छन्दसोऽपाकरणम्, अपितु छन्दसो नवावतारः। छन्दस्तु शब्दे शब्देऽनुस्यूतम्, ''छन्दहीनो न शब्दोऽस्ति न च्छन्दः शब्दवर्जित''मिति भरतोक्तेः। पिङ्गलशास्त्रीयां नियमसरणिममनुसृत्य स्वतः स्वीयं च्छन्दो यत्र कवितां निर्मिमीते तत्र भवति मुक्तच्छन्दः। बहव इदानीं रचयन्ति मुक्तच्छन्दसि काव्यानि। तेषु अभिराजराजेन्द्रमिश्र-हर्षदेव-केशवचन्द्रादीनां मुक्तच्छन्दोरचना प्रशस्या। मुक्तककाव्यपरम्परायां हाइकू-शिजो-ताङ्का-बाउलगीति-तिब्बतगीति-मानचित्रकाव्य- प्रभृतयो विधा हर्षदेवमाधवस्य संरम्भेन संस्कृते कामपि अभिख्यां तन्वन्ति।

कथासाहित्ये नवीना विधा अतीतेषु त्रिचतुर्षु वर्षेषु समकालिके संस्कृतसाहित्ये उन्मेषं गताः। ता यथा- व्यङ्ग्यकथा, टुप्कथा स्पशकथा च। व्यङ्ग्यकथाया यादृशं विकसितं रूपं हिन्दीभाषाया हरिशङ्करपरसाईप्रभृतीनां कृतिषु लसति, न तथा संस्कृते विकासमाप। संस्कृतकथाकारै रच्यमानायामस्यां विधायामन्तःपातिन्यः कथाः प्रायः हास्यवार्तामात्रं भवन्ति। इच्छारामद्विवेदिनः हाहेति हास्यव्यङ्ग्यकथानां सङ्ग्रहः प्रकाशितः, तथैव समायाताः प्रशस्यमित्रशास्त्रिणोऽपि कथाः। 'उवाच कण्डुकल्याण' इति प्रमोदकुमारनायकस्य व्यङ्ग्यकथासङ्ग्रहोऽवश्यमिहोल्लेखमर्हति। स्पशकथां टुप्कथां चाधिकृत्य सम्यक् परिशीलनं विहितं वनमालिना विश्वालेन सागरिकायाः गद्यसाहित्यविशेषाङ्के। यात्रावृत्तानि स्वल्पानि दृश्यन्ते सम्प्रति संस्कृते। नवलकिशोरकाङ्करः कामपि विच्छित्तिं तनोति स्वकीये यात्राविलासनाम्नि गद्यच्छटाधाम्नि काव्ये। हरहरशर्मणो अर्यालस्य काव्यत्रिवेण्यां मुक्तिमन्दिरं

नाम पद्यात्मकं यात्रावृत्तं (2002) लसति। संस्कृतसम्भाषणप्रवीणो विश्वासो विश्वासं जनयति अमेरिकाप्रवासानुभवान् विवृण्वन् 'अपश्चिमः पश्चिमे' इति सरलनिश्छलगद्यगुम्फितेन यात्रावृत्तविवरणेन। दिगम्बरमहापात्रस्य रुषियाशतकम् (2003) पाश्चात्यसंस्कृतं (2003) चाप्युल्लेखनीये। नभोवाणीरूपकमिति नवा विधाऽपि बहुशः समादीयते संस्कृत-साहित्यकारैः। सद्यः प्रकाशितेषु तत्सङ्कलनेषु कान्तिगोरविरचितानां नभोवाणीरूपकाणां सङ्ग्रहः सागर इति संज्ञप्तः (2001) उल्लेखमर्हति। अस्मिन् सङ्कलने आधुनिकजीवनस्य चित्रणम्, लाटीयलोकगाथानां भावजगत्, क्वचित् सरित्सागरादीनां पात्रत्वे योजनाद् नूतना चरित्रसृष्टिश्चेति विशेषाः सन्ति। व्याकरणदृष्ट्या भाषा क्वचित् स्खलति। दैनन्दिनी अपि सर्वथा नवैव विधा। दिने दिने याति मदीयजीवितम् इति शीर्षकेण सत्यव्रतशास्त्रिणः आत्मानात्मानम् इति नाम्ना च मम दैनन्दिनी प्रकाशिता।

महाकाव्यस्य युगोऽतीतः, परन्तु महाकाव्यमेव सर्वाधिकं निबध्नन्तो दृश्यन्ते संस्कृतकवयः। यद्यपि प्रतिभाशालिभिः केचन सर्वथा नवा परिकल्पना नवयुगोचिता महाकाव्यस्य साधिता, यथा हर्षदेवमाधवेन बृहन्नलामहाकाव्ये। अन्यैः कैश्चित् तत्र नवीनं विषयवस्तु आहितम्, यथा रेवाप्रसादद्विवेदि-राजेन्द्रमिश्रादिभिः पुराकथानां समकालिकी व्याख्या, यथा वा परडीमल्लिकार्जुनेन वसवेश्वरं नायकीकृत्य विरचिते वसवेश्वरमहाकाव्ये अम्बिकादत्तशाण्डिल्येन वा चचवंशमहाकाव्ये। ततोऽपि साहसिकं वस्तु आधुनिक्या नार्याः ग्रामवधूट्या मनोदशां गहनं परिपश्यति दीक्षितपुष्पा-

**यत्क्षणेऽहं दुकूलैर्वृता ज्ञातिभि-**
**स्तत्क्षणं लौकिकज्ञानमाच्छादितम्।**
**अन्यपादानुगामिन्यहं कारिता**
**यन्त्रितं दामभिश्चित्तमेकं सखे॥**

गिरिजाशङ्करमिश्रश्च अपूर्वमेव प्रस्तौति सिकन्दराभियानकथां व्यथां भारतधरित्र्याः महागाथां च महामतेश्चाणक्यस्य प्रसन्नभारतमहाकाव्ये। अन्यासु भाषासु महाकाव्यस्य स्थानं उपन्यासेन गृहीतम्। तत्र न तथा प्रगल्भन्ते संस्कृतरचनाकाराः। स्वल्पा एव उल्लेखार्हा उपन्यासा दृष्टिपथमायान्ति। तद्यथा- कलानाथशास्त्रिणो "जीवनस्य पृष्ठद्वयम्", श्रीधरप्रसादसुधांशोः "श्रूयते हि" औदुम्बरकरवासुदेवस्य "प्रेमजालम्" केशवचन्द्रदाशस्य उपन्यासा वा।

11. बालसाहित्यं पृथग्रूपेण प्राचीनकाले प्रायो न विरचितं संस्कृते। नवीना प्रवृत्तिः बालसाहित्यरचनायाः वर्तते। तत्र दिगम्बरमहापात्रस्य ललितवङ्गम् हरिदत्तशर्मणो बालगीताली केशवचन्द्रदाशस्य बालोपन्यासः पताका च पताकायन्ते। सरलसंस्कृतसम्भाषकं नाम बालोपयोगिसंस्कृतसंवादसङ्कलनं दिगम्बरमहापात्रस्य रुचिकरनाट्यात्मकसंवादैः संस्कृतभाषाशिक्षणाय उपादेयः प्रयासः। अभिराजराजेन्द्रमिश्रस्य कौमारम् (2001) शिशुगीतसङ्ग्रहे चित्ताकर्षकानि रुचिररुचिराणि हृद्यानवद्यानि एकपञ्चाशद् बालगीतानि सन्ति। इच्छारामद्विवेदिनः किशोरगीतसङ्ग्रहः दूर्वापत्रिकाया एकस्मिन्नङ्के प्रकाशितः। संस्कृतभारतीतः प्रकाशितानि नवरूपकम्, बालकथामाला, शृण्वन्तु कथाम् एकाम्, शिशुसंस्कृतम्, सुगन्धः, पञ्चतन्त्रकथाः, गीतसंस्कृतम्, इदमित्थम् इत्यादीनि पुस्तकान्यपि उपादेयानि। नवीनबालसाहित्यरचनासु मार्जालस्य मुखं दृष्टमिति विश्वासस्य, कथाकौतुकञ्च केशवदेवस्य इत्यादीनि उदाहरणानि।

12. अनुवादानां समधिकतरं प्रणयनं प्रकाशनं च स्वागतार्हा नवा प्रवृत्तिः। गालिबकाव्यानुवादस्य जगन्नाथपाठकविहितस्य चर्चा पूर्वं कृतैव। अनुवादक्षेत्रे अस्य युगस्य महदुपलब्धिर्वर्तते प्रेमनारायणद्विवेदिनो रामचरितमानसस्यानुवादः। साईदासबाबाप्रणीतम् ओङ्कारविज्ञानम् अभिराजराजेन्द्रमिश्रेणानूदितमपि तथैव स्मरणार्हम्। आर. श्रीहरिणा तेलुगुभाषाया काव्यानां सरसाः हृदयङ्गमाः पद्यानुवादाः प्रस्तुताः। तदीयं फिरदोसीति काव्यं (2000) तथैव मनोहारि। प्रेमनारायणद्विवेदस्य तुलसीदासविरचिता कवितावली सविशेषमुल्लेखमर्हति। शिवसागरत्रिपाठी रामचन्द्रायणे (2002) सुन्दरकाण्डं रामचरितमानसगतमनुवदति। दीनदयालोपाध्यायस्य ऐतिहासिकम् उपन्यासं चन्द्रगुप्ताभिधमनूदिवती सरिताकृष्णशास्त्री (1998), माटुम्बुकुञ्जुकुट्टनस्य मलयालमबद्धमुपन्यासं महाप्रस्थानं नाम संस्कृतेऽनूद्य (2000) यशस्वी सञ्जातः भारतमुद्राकारः अशोकन्पुरुनाटुकरः। सर्वथा श्लाघनीय उपक्रमोऽकारि गोविन्दचन्द्रेण उद्गात्रा रमाकान्तरथस्य ओडियाभाषाया अजराममरां कृतिं श्रीराधां संस्कृतेन प्रस्तूय (2001)। रमाकान्तकवितासञ्चयनम् (2001) प्रस्तूय प्रमाणयति पुनरपि क्षीरोदचन्द्रदाशः संस्कृतेस्येतरभाषा-साहित्यानुभावनक्षमताम्। थामसग्रे महोदयस्य सुप्रसिद्धा आङ्ग्लकविता "श्मशाने रचितं शोकगीतम्"

अनूदिता रामदवेमहोदयेन (2001)। मोहम्मदकबीरस्य 'अमीना' इत्युपन्यासः रमाकान्तशुक्लेन साधु अनूदितः। भैरप्पावर्यस्य कन्नडभाषायां निबद्धं कथासाहित्यं रवीन्द्रसाहित्यं बहुधा संस्कृते अनुवादेषु प्राप्यते।

13. भाषायां नवा अभिव्यक्तयः प्रोक्तयः सूक्तयो वा, नूतनानां शब्दानां च समावेशः अपरो विशेषः। 2001तमे क्रैस्तवाब्दे संस्कृतभारत्या प्रकाशिते आङ्ग्लसंस्कृतशब्दकोशे सङ्कलिता बहवो नूतनाः शब्दाः। उपक्रमोऽयमग्रेसारितः। वास्पत्यामरकोशाप्टेकृतकोशान् श्रयति लघुकोशोऽयम्। तत्र मोनियरविलियम्सोऽपि यद्यग्रहीष्यत् तदा समग्रतरोऽभविष्यत् सङ्ग्रहः। तथाप्याधुनिकपरिस्थितीनां चित्रणाय शब्दाभावे स्खलद्गतयस्तरुणाः साहित्यकारा अनेन लाभान्विताः स्युः। अत्र क्वचित् सर्वथा नवीनाः शब्दा उपात्ताः, क्वचित् आधुनिकभाषासु नूतनेष्वर्थेषु प्रचलिताः संस्कृतशब्दाः सङ्कलिताः। तथाहि- अश्वेतवित्तम्, कृष्णाविपणिः, पुटितपत्रं, पत्रभार इत्यादयः। अन्यैश्च सर्वथा नवीनशब्दनिर्मितौ मन आहितम्। तद्यथा लेखापालः, अधिवक्ता, शपथपत्रम्, कार्यसूची, विमानपरिचारिका, विमानपत्तनम्, पुनरावेदनम्, ध्वनिमुद्रिका, निर्लेखनम्, निर्लेखनी इत्यादयः। क्वचित् नूतनाः शब्दा स्वयं निर्मिताः। यथा- सङ्केतध्वनिः, आपत्सङ्केतः, रुग्णवाहिका, सदनिका, शिक्षुः, क्रीडापटुः, उपशामकः, वायुवेगमापकम्, पिष्टकम्, रोधकः, अर्थसङ्कल्पः, कुड्मलरन्ध्रम्, अर्बुदरोगः, क्रीडाचक्रम्, तैलपः, गलन्तिका, पिचुः आपाकः, वाष्पस्थाली, शोध्यपत्रम्, विकिरणचिकित्सकः। क्वचित्तु संस्कृतेऽन्येष्वर्थेषु प्रचलिताः शब्दास्तत्सम्बद्धेषु नवीनेष्वर्थेषु योजिताः, अथवा विस्मृतप्रायाः शब्दाः प्रकृतार्थेषु पुनराविष्कृताः। तथाहि- अलिन्दः, कण्डोलः, कंसः, कपाटिका, प्रलेखः, पाञ्चालिका, अवकरकण्डोलः, प्रध्वंसकः, पृष्ठाङ्कनम्, पिहितपत्रम्, यन्त्रागारम्, पटलम्, पीठोपकरणम्, यानगृहम्, हस्तकोषः, प्रगततान्त्रिकम् इत्यादयः। आधुनिकवस्तूनां कृते नवीनाः शब्दा दूर्वायां प्रकाशितासु नैकासु रचनासु उपात्ताः। एरियर-चेक-ग्लास-प्रभृतयः शब्दाः आङ्ग्लभाषाया गृहीताः। केचन संस्कृतीकरणं विहितम्। यथा- स्टेशन इत्यस्य कृते आस्थानकम्, यार्ड इत्यस्य कृते गन्त्रालयः, रिक्शा इत्यस्य कृते त्रिचक्रिका, राजेन्द्रमिश्रेण सूटकेस इत्यस्य कृते पाथेयपिटकशब्दो व्यवहृतः, राधावल्लभेन सूतकेश इति। दूरभाष्यस्य श्रवणयन्त्रं प्रापकं भवति, विस्कुटं विषकूटः, समोसा समवसा जाता। किं बहुना-

**अभिनवमपि परिधानं नवमाभरणं सरस्वतीदेव्याः।**
**कायामपि च च्छायामाविष्कुर्वन्नवां च नवाम्॥**
**परिपाकः प्रज्ञायाः स्पन्दो यौवनगतो नवो नवश्च।**
**अनुवादो विश्वस्य रचनावचनावलीविशेषाणाम्॥**
**भवितव्यं तद् भारतभूमेः क्रान्तेस्तथा च सङ्क्रान्तेः।**
**आयतिगतिभिर्लसितं चित्रं सम्भावनामयं च॥**
**ऊर्जा वा लालित्यं दधदिह निखिलं तथा च गतिशीलम्।**
**स्वातन्त्र्योत्तरकाव्यं संस्कृतभाषागतं लसति॥**

■ पत्रसङ्केतः- पूर्वकुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्(मा.वि.वि.), नवदेहली।
21, लैण्डमार्क सिटी, निकट- भेल-संगम-सोसायटी,
भोपाल-462026.

# ध्वन्यालोकलोचने शैवदर्शनस्य प्रभावः

■ डॉ. सी. राजेन्द्रन्

अभिनवगुप्ताचार्यपादानां साहितीयशास्त्रग्रन्थेषु तिलकायमानं भवति लोचनाख्यं ध्वन्यालोकव्याख्यानम्। दार्शनिकोऽयमाचार्यः यस्य जीवितदर्शनस्य साहित्यदर्शनस्य च मिथः किमपि वैरुध्यं नाद्राक्षीत्। अथवा स्वस्य शैवाद्वैतदर्शनस्य किमपि स्फुरणमेव साहित्यचिन्ता इत्येवासीद् आचार्यस्य हृदयान्तर्गतम्। अतश्च नेदं आश्चर्यस्थानं यदाचार्यः कदाचित् तन्त्रालोकादिषु तन्त्रशास्त्रग्रन्थेषु साहित्यविद्यायाः सङ्केतान् एवं अभिनवभारत्यादिषु सौन्दर्यशास्त्रग्रन्थेषु शैवप्रत्यभिज्ञादीनां दर्शनानां तत्त्वानि च उपजीवति। शैवदर्शनस्य क्रम-काल-प्रत्यभिज्ञा- प्रकारत्रयभिन्नस्य परमाचार्यपदवीम् अभिषिक्तोऽयं महायोगी समस्तमपि प्रपञ्चजातं महामहेश्वरस्य सर्गक्रियायाः आविष्कारत्वेन मनुते स्म। अतश्च सर्वत्र शिवमयीमवस्थां प्रत्यभिज्ञातवतोऽस्य महाचिन्तकस्य सङ्कल्पे काव्यनाटकादीनामपि महत् स्थानमासीदिति विनिश्चेतुं शक्यते। अत एव 'काव्यालापांश्च वर्जयेत्' इत्यादीनां स्मृतिग्रन्थविधीनां अकर्तव्यतां अन्तर्ज्ञानेन उत्पश्यद्भिरेतैः स्वीयसाहित्यशास्त्रकृतिषु दार्शनिकतत्त्वानि उपोल्वलकयुक्तितया तेषु तेषु स्थानेषु प्रयुक्तानि वर्तन्ते। तथा हि षटत्रिंशदध्यायसम्पूर्णं नाट्यशास्त्रं व्याकुर्वन् आचार्यः एकैकमपि अध्यायं स्वस्याभिनवभारत्यां एकेन शिवतत्त्वेन व्याख्यातवान्।[1] इयमेव हि वार्ता वर्तते ध्वन्यालोकलोचनेऽपि। अभिनवगुप्ताचार्याणां ध्वन्यालोकलोचने शैवदर्शनस्य प्रभावः कीदृश इति पर्यालोच्यते निबन्धेऽस्मिन्।

ध्वन्यालोकस्यायं विशेषः यदस्य ग्रन्थतल्लजस्य कर्ता आनन्दवर्धनाचार्यः ग्रन्थेऽस्मिन् सर्वत्रापि विष्णुस्तुतिरूपमेव मङ्गलमातनोति। तथा हि ग्रन्थस्य मङ्गपद्यमिदम्।

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।।**[2]

अत्र नृहरिरूपमापन्नः भगवान् विष्णुः स्तुत्यतया आविष्क्रियते मङ्गलपद्ये। अन्यत्रापि ग्रन्थकारेण स्वीयं वैष्णवं दर्शनमित्थमाविष्कृतम्-

**या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा**
**दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।**
**ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं**
**श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम्।।**[3]

परन्तु व्याख्यानवेलायां अभिनवगुप्ताचार्येण समस्तमपि ध्वनिदर्शनं स्वस्यैव सौन्दर्यदर्शनस्य परमतत्त्वदर्शनस्य च पश्चात्तले प्रपञ्चितमस्ति। सर्वतन्त्रस्वतन्त्रोऽयं महामनीषी कुत्राऽपि किमपि वैरुद्धयं न पश्यतीत्येतदेव सम्यगवध ेयम्। स्वस्य तत्त्वज्ञानस्य आन्तरिकसत्ता अभिनवगुप्ताचार्येणैव महोपदेशविंशतिके इत्थं प्रत्यपादि-

**प्रपञ्चोत्तीर्णरुपाय नमस्ते विश्वमूर्तये।**
**सदानन्दप्रकाशाय स्वात्मनेऽभिन्नशक्तये।।**
**त्वं त्वमेवाहमेवाहं त्वमेवासि न चास्म्यहम्।**
**अहं त्वमित्युभौ न स्तः यत्र तस्मै नमो नमः।।**
**अन्तर्भेदे मया नित्यं त्वमात्मा च गवेषितः।**

न दृष्टस्त्वं न चैवाहं यच्च दृष्टं त्वमेव तत्॥
भवद्भक्तस्य संज्ञातभवरूपस्य मेऽधुना।
त्वामात्मरूपं सम्प्रेक्ष्य तुभ्यं मह्यं नमो नमः॥
अहं भेदानुकथया त्वद्भक्तिरसचर्वणात्।
सर्वमेकमिदं शान्तमिति वक्तुं च लज्जते॥
त्वत्स्वरूपे जृम्भमाणे त्वं चाहं चाऽखिलं जगत्।
जाते तस्य तिरोधाने न त्वं नाहं न वै जगत्॥
जाग्रत्स्वप्नसुषुप्त्याख्या धारयंश्च निजाः कलाः।
स्वेच्छया भासि नटवन्निष्कलोऽसि च तत्त्वतः॥
त्वत्प्रबोधात् प्रबोधोऽस्य त्वन्निद्रातो लयोऽस्य यत्।
अतस्त्वदात्मकं सर्वं विश्वं सदसदात्मकम्॥[4]

अत्र विश्वोत्तीर्णस्य अन्तर्यामिनश्च ईश्वरस्य विभूतिप्रकाराः स्पष्टतया व्यावर्णिताः। एतयैव दृष्ट्या आचार्यः काव्यनाट्यादिकमपि पश्यति।

ध्वन्यालोकस्य चत्वार उद्योताः सन्ति। एकैकस्याऽपि उद्योतस्यान्ते अभिनवगुप्ताचार्येण एकैकं शैवदर्शनतत्त्वमवलम्ब्य मङ्गलश्लोको विहितो वर्तते। तत्र प्रथमोद्योतान्ते अयं श्लोकः-

यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात्।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्॥[5]

अत्र प्रतिभारूपिणीं शिवशक्तिमेव स्तौति लोचनकारः। अनया हि शक्त्या सुप्तकल्पं जगत् उन्मीलितं प्रकाशते। इयं हि प्रतिभा शिवगता कवीनामपि अन्तःकरणं प्रकाशयतीति कश्मीरशैवदर्शनसङ्केतः अत्र स्मरणीयः। तथा हि महिमभट्टेन अधुना अनुपलब्धे तत्त्वोक्तिकोशाख्ये ग्रन्थे प्रतिभास्वरूपं इत्थं व्यावर्णितमासीदिति व्यक्तिविवेकपङ्क्तिभ्य एव अवगन्तुं शक्यम्-

रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः॥
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः॥[6]

आनन्दवर्धनाचार्येण अस्मिन्नेवोद्योते उक्तम्-

सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥[7]

अत्र अभिनवगुप्ताचार्येण 'अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा' इति प्रतिभायाः टीका कृता[8] या अस्मिन् मङ्गलश्लोके उन्मीलनशक्तिरूपेण प्रतिपादिता। इयमेव शक्तिः वाग्देवतायाः परावस्थां प्रकाशयतीति उत्तुङ्गोदयस्य कौमुदीरूपलोचनटीकातो ज्ञातुं शक्यते। तत्र हि "शिवाशब्देन विश्वसारभूतस्य परमात्मशब्दवाच्यस्य परमेश्वरस्य महीयसी शक्तिः। परादिशब्दभिधेया स्वयंप्रकाशद्वैतरूपा तदव्यतिरिक्तरूपतया तदीयकृत्यसर्वस्वनिर्वहणधुरन्धरा कापि देवताभिधीयते।"[9] इति विवरणं दत्तम्। प्रतिभाशब्दस्य इत्थं टिप्पणी रचिता कौमुदीकारेण-

"प्रतिभामिति विगलितविविधविषयोपरागकलितकालुष्यसतताविर्भवदतिविमलविततप्रकाशमात्ररूपामित्यर्थः। अथवा तां प्रसिद्धां शिवां रसावेशवैशद्यनिरवद्यसुन्दरतया सुभगां प्रतिभां कवीनां सहृदयानां च तद्वर्णनीयवस्तुनिष्ठां विशिष्टपुण्यपरिपाकलभ्यां

प्रज्ञाविशेषलक्षणां वन्दे। यस्या उन्मीलनयोगेनैव बहिस्तत्तादृशसन्तानापेक्षयैव प्रतिक्षणमेव नवनवतया विश्वमवभासते 'यथास्मै रोचते विश्वं तथेदं परिवर्तते' इत्युक्तेः।''[10] वस्तुतस्तु अत्र प्रतिभाशब्देन काव्यात्मभूतध्वनिस्वरूपमपि भङ्ग्यन्तरेण कटाक्षितमिति कौमुदीकाराणां मतम्।

ध्वन्यालोकलोचनस्य द्वितीयोद्योतपरिसमाप्तौ आचार्येण पश्यन्तीरूपायाः वाचः प्रकीर्तनं कृतमस्ति। तथा हि-

**प्राज्यं प्रोल्लासमात्रं सद्भेदेनासूत्र्यते यया।**
**वन्देऽभिनवगुप्तोऽहं पश्यन्तीं तामिदं जगत्॥[11]**

अत्र जगदवभासहेतुरूपा पश्यन्ती नाम शक्तिः सूचिता। अत्र च कारणं आनन्दवर्धनकृतं पूर्णं ध्वनिलक्षणमेव-

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।**
**यद् व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम्॥[12]**

अत्र च लोचनकारः अवभासस्याभासस्य च भेदं प्रदर्श्य इत्थं वदति- ''ध्वनिलक्षणं ध्वनेः स्वरूपं पूर्णम् अवभासनं वा ज्ञानं तद्ध्वनेर्लक्षणं प्रमाणम्, तच्च पूर्णं पूर्णध्वनिस्वरूपनिरूपकत्वात्। अथवा ज्ञानमेव ध्वनिलक्षणं, लक्षणस्य ज्ञानपरिच्छेद्यत्वात्। वृत्तावेवकारेण ततोऽन्यस्य चाभासकरूपत्वमेवेति सूचयता तदाभासविवेकहेतुभावो यः प्रक्रान्तः, स एव निर्वाहित इति शिवम्।''[13] एवं तृतीयोद्योतान्ते मध्यमारूपां वाचं प्रकीर्तयति आचार्यस्य मङ्गलश्लोकः-

**आसूत्रितानां भेदानां स्फुटतापत्तिदायिनीम्।**
**त्रिलोचनप्रियां वन्दे मध्यमां परमेश्वरीम्॥[14]**

अत्र सङ्गतिस्तु तृतीयोद्योते ध्वनेर्व्यञ्जकत्वविधया भेदाः प्रतिपादिताः इत्येषैवेति कटाक्षितम् आचार्येण-

**काव्यालोके प्रथां नीतान् ध्वनिभेदान् परामृशत्।**
**इदानीं लोचनं लोकान् कृतार्थान् संविधास्यति॥[15]**

चतुर्थोद्योते वैखरीरूपां चतुर्थावस्थां प्रपन्नां वाग्देवतां शक्तिरूपिणीं उपास्ते लोचनकारः। तदित्थम्-

**स्फुटीकृतार्थवैचित्र्यबहिः प्रसरदायिनीम्।**
**तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शिनीम्॥[16]**

एवं लोचनं समापयन् आचार्यः अद्वयावस्थां प्रतिपन्नः श्रोतॄणामपि तादृशीमवस्थामेव आशास्ते चरमपद्येन-

**वस्तुतः शिवमये हृदि स्फुटं सर्वतश्शिवमयं विराजते।**
**नाशिवं क्वचन कस्यचिद्वचः तेन वः शिवमयी दशा भवेद्॥[17]**

इत्थं चत्वारोऽपि उद्योताः शैवदर्शनसङ्केतानुसारेणैवाचार्येण व्याख्याताः।

यथा उद्योतान्तेषु प्रतिपाद्यवस्तुसमृद्धितया परा-पश्यन्ती-मध्यमा-वैखरीरूपेण स्थितायाः शक्तिरूपिण्याः वाचः स्तुतिः कृता तथैव उद्योतादिषु माहेश्वर्याः वन्दनमपि कृतमस्ति। अत्र इयांस्तु विशेषः। लोचनस्यारम्भे विहितं विख्यातं मङ्गलपद्यं न शक्तिस्तवरूपम्। अपितु कविसृष्टिप्राधान्येनोपन्यस्तं वर्तते। यथा-

**अपूर्वं यद्वस्तु प्रथयति विना कारणकलां**
**जगद्ग्रावप्रख्यं निजरसभरात्सारयति च।**
**क्रमात् प्रख्योपाख्याप्रसरसुभगं भासयति तत्**
**सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते॥[18]**

अत्र च ईश्वरसृष्टेः अपेक्षया कविसृष्टेर्माहात्म्यमेव सूचितमिति व्याचष्टे कौमुदीकारः। तदुक्तम्-

**आदावुत्कर्षशालित्वकथनेन नमस्कृतेः।**

अर्थाक्षेपमभिप्रेत्य नमस्कार्यतयोदितम्॥
नूतनं वस्तु चित्रं च हेतुलेशानपेक्षया।
कुर्वत् काव्यं जगत्सृष्टुरुत्कृष्टं तदतादृशम्॥
नीरसानि दृषत्साम्यमासेदूँषि निसर्गतः।
सकलान्यपि वस्तूनि सरसीकुरुते रसः॥
ततोऽप्यतादृशः स्त्रष्टुस्तत्तत्त्वं व्यतिरिच्यते।
कविप्रज्ञाभिधानात्मप्रख्योपाख्याक्रमोद्गमात्॥
अपूर्ववस्तुनिर्माणं सरसीकरणं तथा।
सुभगत्वेन चाभासः स्तूयते तत् समुच्चितम्॥
कविप्रौढोक्तिसिद्धार्थे काव्ये स्पष्टं प्रतीयते।
पूर्वसिद्धार्थकाव्ये तु सरसीकारभासने॥
सम्भाव्येते उभे एव वस्तुनः प्राक्प्रसिद्धितः।
इत्थं त्रिपाद्या तत्त्वस्य द्रुहिणाधिक्यवर्णनात्।
प्रसादोत्कर्षमत्यन्तमुक्ता विजयकर्तृता॥[19]

उत्तरत्र उद्योतेषु तावत् शक्तिरेव स्तूयते। तद्यथा-

या स्मर्यमाणा श्रेयांसि सूते ध्वंसयते रुजः।
तामभीष्टफलोदारकल्पवल्लीं स्तुवे शिवाम्॥[20]

एवम्-

स्मरामि स्मरसंहारलीलापाटवशालिनः।
प्रसह्य शम्भोर्देहार्धे हरन्तीं परमेश्वरीम्॥[21]
कृत्यपञ्चकनिर्वाहयोगेऽपि परमेश्वरः।
नान्योपकरणापेक्षो यया तां नौमि शाङ्करीम्॥[22]

इति च। इत्थं लोचने एकैकेष्वपि उद्योतेषु शक्तिस्वरूपप्रकीर्तकं मङ्गलं आदौ चान्ते च निबध्य आचार्यः स्वस्य शैवदर्शनस्य सिद्धान्तं ख्यापयति।

अन्यत्राऽपि बहुषु स्थलेषु आचार्यः ध्वनिसिद्धान्तानां प्रतिपादने शैवसिद्धान्तान् उपयुङ्क्ते। तथा हि महाकवेः उचितशब्दार्थयोजनायां यत्नः कार्य इति सिद्धान्तयन् आनन्दवर्धनाचार्यो वदति-

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥[23]

अत्र आचार्येण साभिप्रायं तु प्रत्यभिज्ञाशब्दः प्रयुक्त इति लोचनकाराणामाशयः। प्रत्यभिज्ञादर्शने ज्ञातस्याऽपि विशेषतो निरूपणमेव प्रत्यभिज्ञाशब्देनाऽभिधीयते। न तु तदेवेदमित्याकारकं ज्ञानम्। अत्र स्वीयपक्षस्थापनार्थं परमगुरूणामुत्पलदेवानां कंचन श्लोकमुद्धरति आचार्यः। अस्मिन् श्लोके ईश्वरप्रत्यभिज्ञायाः स्वरूपमुच्यते-

तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा।
लोकस्यैष तथानवेक्षितगुणः स्वात्माऽपि विश्वेश्वरो

**नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता॥**

अभिनवभारत्यामिव ध्वन्यालोकलोचनेऽपि अभिनवगुप्ताचार्येण शैवदर्शनप्रक्रियानुसारमेव ध्वनिसरणिर्निरूपिता। ध्वनिप्रतीति ग्राह्यस्थायिरूपस्य रसस्य प्रतीतिप्रकार: सङ्क्षेपेणैवात्र वर्णितो वर्तते। तत्र सर्वत्राऽपि आचार्यस्य प्रतिपादने शैवदर्शनस्यैव प्रभाव: प्रकटो भवतीति सुधीभि: ज्ञातुं शक्यते।

अभिनवगुप्ताचार्याणां गुरुणा भट्टतौतेन काव्यस्य शास्त्रस्य च मिथो भेद: एवंरीत्या प्रकटित:-

**द्वे वर्त्मनी गिरां देव्या: शास्त्रं च कविकर्म च**
**प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम्।**[24]

अतुल्या प्रज्ञा प्रतिभा च अभिनवगुप्ताचार्यं अनुजगृहतुरिति निर्विवादमिदम्। अत एव आचार्येण अलङ्कारशास्त्रे दार्शनिकी काचिद् नूतना सरणिराविष्कृता, यद्वशात् तेषामभिव्यक्तिदर्शनं काव्यशास्त्रे सिद्धान्तपदवीं अभिषिक्तमासीत्।

**सन्दर्भसङ्केत:-**

1. तथा चोक्तमभिनवभारत्याम्-
   षट्त्रिंशकात्मकजगद्गगनावभास-
   संविन्मरीचिचयचुम्बितबिम्बशोभम्।
   षट्त्रिंशकं भरतसूत्रमिदं विवृण्वन्
   वन्दे शिवं श्रुतितदर्थविवेकि धाम॥ -अभिनवभारती, सम्पा.-रविशङ्करनागर:, दिल्ली, पृ.सं.-37.
2. ध्वन्यालोक:, बालप्रियासंशोधनम् I.-1.
3. तत्रैव, पृ.सं.-508-509.
4. जी. टी. देशपाण्डेद्वारा उद्धृतम्, Abhinavgupta.
5. ध्वन्यालोक:, बालप्रियासंशोधनम्, लोचने, पृ.सं.-164.
6. व्यक्तिविवेक:, पं. रेवाप्रसादद्विवेदीकृतसंशोधनम्, पृ.सं.-452-453.
7. ध्वन्यालोक:, I.-6, पृ.सं.-91.
8. तत्रैव, पृ.सं.-92.
9. ध्वन्यालोकलोचनम्, केरलीयव्याख्या, सि. दाम् नीलकण्ठेन संशोधितम्, पृ.सं.-439.
10. तत्रैव।
11. ध्वन्यालोक:, बालप्रियासंशोधनम्, लोचने, पृ.सं.-287.
12. ध्वन्यालोक:, बालप्रियासंशोधनम्, लोचने, पृ.सं.-286.
13. तत्रैव, लोचने, पृ.सं.-286-287.
14. तत्रैव, लोचने, पृ.सं.-520.
15. तत्रैव।
16. तत्रैव, पृ.सं.-554.
17. तत्रैव, पृ.सं.-555.
18. तत्रैव, पृ.सं.-1.
19. ध्वन्यालोकलोचनं केरलीयव्याख्यानञ्च, पृ.सं.-41.
20. ध्वन्यालोक:, बालप्रियासंशोधनम्, लोचने, पृ.सं.-165.
21. तत्रैव, पृ.सं.-288.
22. तत्रैव, पृ.सं.-521.
23. तत्रैव, पृ.सं.-98.
24. प्रोफेसर ती. डान् श्रीकण्ठय्येन उद्धृतम्। तैश्च डॉ. राघवन् महाभागान् आधमर्ण्यं प्रकटितम्। दृश्यताम्- 'Imagination in Indian Poetics', in Raghvan & Nagendra, an introduction to Indian Poetics, Macmillan.

■ पत्रसङ्केत:- 28/1097, 'राजधानी', टी.पी. कुमारन् नायर रोड, चेवायूर, कालीकट-673017.
e-mail: rajenc@gmail.com

# स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्

■ प्रो. कमलेशझाः 'विद्यावाचस्पतिः'

सहस्त्रसूर्यकिरणाधिकशुद्धप्रकाशवान् ।
अपि त्वं सर्वभुवनव्यापकोऽपि न दृश्यसे॥
चपलमसि यदपि मानस तदपि श्लाघ्यसे यतो भजसे।
शरणानामपि शरणं त्रिभुवनगुरुमम्बिकाकान्तम्॥
भक्तानां भवदद्वैतसिद्ध्यै का नोपपत्तयः।
तदसिद्ध्यै निविष्टानां कानि नावरणानि वा॥
न ध्यायतो न जपतः स्याद्यस्याविधिपूर्वकम्।
एवमेव शिवाभासस्तं नुमो भक्तिशालिनम्॥
भेदाभेदमयी दृष्टिर्विद्याविद्यामयी प्रथा।
नौमि तां श्रीगुरोर्मूर्त्तिं स्वोर्मिरिव यया कृता॥
समुल्लसन्तु भगवन्! भवद्-भानुमरीचयः।
विकसत्वेष यावन्मे हृत्पद्मं पूजनाय ते॥

त्रिभुवनगुरोः भगवतः परशिवस्य सहस्त्रसूर्यकिरणाधिकशुद्धप्रकाशप्रख्यता चेद् भेदाभेदमयीं दृष्टिं विद्याविद्यामयीं प्रथां वा वितन्वत्याः प्रकाशप्राणेश्वर्याः स्पन्दमय्याः स्वातन्त्र्यशक्तेरुपाख्यता जयति। एकस्या अपि नीलसुखाद्यनन्तात्मतया सदा प्रसरन्त्याः शिवादिपृथ्व्यन्तसमस्तविश्वरूपेण प्रथमानाया निमेषमय्या अपि सदान्तर्मुखभास्वस्वरूपायाः निर्निमेषानुत्तरमहेश्वरमुखाभिमुखोन्मेषमय्या प्रकाशस्वाभाव्यश्रियमाबिभ्रत्याः नैकाः संज्ञा विलसन्ति विमर्शस्फूर्त्यूर्मिस्पन्दस्फारस्फुरणाद्याः।

अयमत्र प्रविवेकः- यथा अग्नेः स्वभाव औष्ण्यम्, तथा अनुत्तरमहेश्वरस्य स्वभावः अनुत्तरा महेश्वरी। अनयोरेवापरनाम्नापि प्रसिद्धिः शिवः शिवा इति। शास्त्रीयनाम्ना त्वेनयोः प्रसिद्धिः प्रकाशो विमर्श इति। शक्तिमान् शक्तिरिति चावधारणाद्द्वयी कामं राजतां वस्तुनस्त्वैक्यमेवेष्यते स्वभावस्य स्वभाविनोऽव्यतिरिक्तत्वात्। शिवस्य स्वभाविनः शक्तिः स्वभावः एवासत्यपि पञ्चधा व्याख्यायते, परिच्छिन्नसामर्थ्याञ्चितायां बुद्धौ सङ्क्रमयितुम्। सत्यप्यैक्ये, स्वभावे आधेयता स्वभाविनि तु अधिकरणता व्यवह्रियते शिवे शक्तिः, वह्नौ दाहः ऊष्मा वेति। पञ्चधा विभक्ता शक्तिः शिवे शक्तिमति आधेयतां बिभर्ति- चिद् आनन्दः इच्छा ज्ञानं क्रिया चेति। इमा एव पञ्चद्वारभूताः सन्ति शक्तयः शिवभावमनुप्रवेष्टुम् इति पञ्चविधानामासां शक्तीनां संज्ञा प्रथते शैवीमुखमिति। उन्मिषन्त्यां शक्तौ चिदानन्दविश्रान्तः शक्तिमान् संसारं न स्पृशतीति विश्वोत्तीर्ण इत्यभिधीयते निमिषन्त्यां त्वस्यामिच्छाद्वारेण ज्ञानक्रियाशक्त्योः विश्रान्तस्त्वेष विश्वमयो भात्यभिधीयते च। विश्वमयस्यास्य पशुता विश्वोत्तीर्णस्य तु पतिरूपता चेदुभयत्र सममेव स्पन्दमाना शक्तिः स्तुत्या जयति। अस्यां भगवतः विमर्शशक्तौ यस्यास्तित्वं भवति तस्यैव बहिरवभासनं नान्यस्य बहिरवभासतस्तस्यैव चितिविश्रमणं यद्विधीयते सा शक्तिर्विमर्श इत्यभिधीयते। विमर्शोऽस्मिन् निःसीमसामर्थ्यं विलसति तत एव त्वसौ बहिरवभासितं सङ्कल्पमात्रेण स्वस्मिन् विलाययति, स्वयमात्मानमपि बहिर्भावमण्डलतया प्रकाशयति, उभयोरेकात्मतां स्थापयति अथ चैकीकृतयोर्द्वयोरपि स्वरसतः न्यग्भावमाविष्कुरुते। यदुक्तमभिनवगुरुणा-

**विमर्शो हि सर्वंसहः परमपि आत्मीकरोति, आत्मानं परीकरोति, उभयमेकीकरोति, एकीकृतं द्वयमपि न्यग्भावयति- इत्येवं स्वभावः।** इति।[1]

यथा स्फटिकेन प्रकाशितेऽपि घटादौ विमर्शं विना स्फटिकस्य चैतन्यराहित्यं भवति, तत एव स्फटिकः जड इत्युच्यते। तथैव प्रकाशः स्वयम्प्रकाशश्च शिवः विमर्शं विना घटादिकमवभासयेच्चेत् स्फटिकोपमस्यास्य जडतैव

समापद्येत। तादृशचैतन्यस्याधाने बोधने वा सामर्थ्यं विमर्शात्मनः स्पन्दस्यैव विद्यते नान्यस्य। सोऽयं विमर्शस्वभावः शिवः प्रकाशः प्रख्या इत्याख्यायते। यत्र सिद्धान्ते निर्विमर्शः प्रकाशः परमार्थतया अङ्गीक्रियते तत्र परमार्थस्य जडप्रायेतेव समापद्यते। यदुक्तम् उत्पलदेवेन-

**स्वभावमवभास्य विमर्शं विदुरन्यथा।**
**प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः।।** इति।[2]

स्पदि किञ्चिच्चलने इति धातोर्निष्पन्नः स्पन्दशब्दः, स्वतन्त्रस्फुरणम् अर्थम् अवबोधयति। नहि एतादृशमहिम्ना जुष्टं स्पन्दं विना संविद्रूपस्य भगवतः शिवस्य जगत्प्रकाशकर्तृत्वं सम्भवति। यथा सागरस्यास्तित्वम् ऊर्मिं विना नेष्यते तथा विमर्शशक्तिं विना बोधाब्धिशिवमहेश्वरस्य संविद्रूपता न सङ्घटते। अन्यथा निर्बोधः जगत्प्रपञ्चः समापद्यते। यथोक्तम् अभिनवगुरुणा-

**किञ्चिच्चलनमेतावदनन्यस्फुरणं हि यत्।**
**ऊर्मिरेषा विबोधाब्धेर्न संविदनया विना।।** इति।3

अयमत्र निष्कर्षः- संविन्महेश्वरः सततस्पन्दमय्या विमर्शशक्त्या स्वभावभूतया स्वं विश्वोत्तीर्णं विश्वमयं वा सर्वमपि भावं अहमित्येवं परामृशति। यथोक्तं जयरथेन-

**इदमेव संविदः संवित्त्वं यत्- सर्वम् आमृशतीति।**[4]

विमर्शशक्तिरेषा भगवतः श्लाघनीया स्फुरत्ता महासत्ता देशकालादिभासिका यतस्तदेषा परिच्छेदकथाशून्या भवनकर्तृतां सर्वक्रियासु स्वातन्त्र्यं धत्ते। सारभूता सेयं महेश्वरस्य हृदयमित्युच्यते। इयमेव प्रतिभाशब्देन परमार्थसर्वस्वं सहृदयैः बुधैर्निभृतं स्तूयते महार्थधामभूता स्फूर्तिः। यथोक्तम्-

**सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।**
**सैषा सारतया प्रोक्ता हृदयं परमेष्ठिना।।** इति।[5]

प्रतिभामेनां पश्यतो महेश्वरस्य आत्मप्रच्छादनम् आत्मनः प्राकट्यं वा स्वच्छन्दं यद्वत् प्रसरति तद्वत् विद्युद्गत्या अक्रमे क्रमस्य क्रमे चाक्रमस्य अवभासनमयी क्रीडा सततं सम्प्रवर्तमानास्य स्तूयते। यत् किञ्चन आभ्यन्तरं, बाह्यम्, कल्पनाप्रसूतं गगनकुसुमादि वा सर्वमपि देशकालादिजननतत्संयोजनादिना समवभासयन्ती स्वयमपरिच्छिन्नेयं संविद् तन्मयी तद्विलक्षणा च सती प्रमा प्रमातृप्रमाणप्रमेयकलनां सूते। यदुक्तम्-

**एष प्रकाशरूप आत्मा स्वच्छन्दो ढौकयति निजरूपम्।**
**पुनः प्रकटयति झटित्यथ क्रमवशादेष परमार्थेन शिवरसम्।** इति।[6]

सत्ता च भवनकर्तृता सर्वक्रियासु स्वातन्त्र्यम् इति।[7] सा च खपुष्पादिकमपि व्याप्नोति। इति च।[8]

**अत एषा स्थिता संविदन्तर्बाह्योभयात्मना।**
**स्वयं निर्भास्य तत्रान्यद् भासयन्तीव भासते।।** इति च।[9]

भगवतः स्वातन्त्र्यशक्तिः प्रतिभास्फूर्त्यादिशब्दैर्व्यपदेश्या विश्वोत्तीर्णभूमिं निर्माति चेद् मायापदे भेदावभासजनितमायात्वेन गर्भीकृतभावविभागा बह्वीषु शक्तिषु विभज्यमाना च शिवादिधरणीप्रान्तां नीलसुखाद्यनन्तरूपां वा संज्ञामात्मसात् कुरुते। सङ्कल्पात्मिकां गतिं स्पन्दसंज्ञिकां शक्तिमेनां व्याख्यातुमिवाचार्यैरुन्मेषनिमेषशब्दौ गृहीतौ, याभ्यामुपचाराद् इच्छा(भागवती) प्रबोध्यते। अस्याः भगवत्या उन्मेषः अन्तर्मुखस्पन्द इत्युच्यते निमेषस्तु बहिर्मुखस्पन्द इति। यथोक्तम्-

**तस्मात् संवित्त्वमेवैतत् स्वातन्त्र्यं यत्तदप्यलम्।**
**विविच्यमानं बह्वीषु पर्यवस्यति शक्तिषु।।** इति।[10]
**माया नाम च देवस्य शक्तिरव्यतिरेकिणी।**
**भेदावभासस्वातन्त्र्यं तथाहि स तया कृतः।।** इति।[11]

उन्मेषनिमेषशब्दाभ्यां तदुपचरितवृत्तिभ्याम् इच्छामात्रमेकं शङ्करसम्बन्धि प्रतिपाद्यते, स च तस्य नित्यो धर्मः स्वभावभूतः, तस्य उन्मेषनिमेषशब्दवाच्यत्वं द्वित्वं चोपचाराद् इति।[12] 'शिवदशामेकां मुक्त्वा मायाशक्तिः सर्वत्र कृतपदा' इति च।[13]

सेयं स्वातन्त्र्यशक्तिः विश्वप्रसृतये इच्छात्मतां बिभर्ति। सा चेच्छाद्वैरूप्यमाविष्कुरुते ज्ञानशक्तिः क्रियाशक्तिश्च। अनन्तरं यावद्विश्ववस्तुस्वरूपाया अस्या अनन्तशक्तिरूपता शास्त्रेषु प्रतिपाद्यते सुनिभृतं विवेच्यतेऽपि च। ज्ञानशक्तिः वाचकात्मना वर्णमन्त्रपदरूपेण प्रसरति क्रियाशक्तिस्तु वाच्यात्मना कलातत्त्वभुवनरूपेणेति स्वातन्त्र्यशक्तिरेव भवानी विश्वोत्तीर्णस्य विश्ववपुष्ट्वमाविष्कुरुते सम्मान्या साधकानाम्। यावद्विश्ववस्तुस्वरूपाणामासां शक्तीनां तु समुदायः शक्तिचक्रमित्यभिधीयते। तस्य विभवामोदजृम्भणा भरिताकारा सततोदिता समष्टिशक्तिर्भैरवी यत्राश्रिता विलसति स भैरवो महेश्वरः शैवीमुखप्रवेशनेन साधकानां सदाचार्याणां स्वस्वरूपतया सुष्ठु प्रत्यभिज्ञातः सुप्रापो भवति। यदुक्तम्-

**या सा शक्तिर्जगद्धातुः कथिता समवायिनी।**
**इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते।।** इति[14]
**एवं सैषा द्विरूपापि पुनर्भेदैरनेकताम्।**
**अर्थोपाधिवशाद् याति चिन्तामणिरिवेश्वरी।।** इति।[15]
**अन्तःस्वानुभवानन्दा विकल्पोन्मुक्तगोचरा।**
**याऽवस्था भरिताकारा भैरवी भैरवात्मनः।।** इति[16]
**शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना।**
**तदाऽसौ शिवरूपी स्याच्छैवीमुखमिहोच्यते।।** इति च।[17]

तदेवं सर्वजन्तूनां स्वात्मभूतः कर्ता ज्ञाता च महेश्वरः आदिसिद्धः विश्वरूपः अहमिदमित्याकारद्वय- परामर्शी समुच्छलच्चैतन्यस्वभावो विलसति। अनन्तशक्तेरप्यस्य शक्तिपञ्चकं प्रधानीभूतमास्ते- चिद्, आनन्दः, इच्छा, ज्ञानं क्रिया चेति। तत्र चिदानन्दशक्ती महेश्वरस्य स्वरूपभूते भवतः। इच्छा, ज्ञानं क्रिया चेति शक्तित्रयमेव जगत्सृष्ट्यादौ उपयुज्यते। तन्त्रासारकृतः स्वातन्त्र्यम् आनन्दशक्तिरिति चमत्कारम् इच्छाशक्तिरिति प्रकाशरूपतां चिच्छक्तिरिति आमर्शं ज्ञानशक्तिरिति सर्वाकृतियोगित्वम् क्रियाशक्तिरिति वदन्ति। यदुक्तम्- तस्य च स्वातन्त्र्यम् आनन्दशक्तिः, तच्चमत्कारः इच्छाशक्तिः, प्रकाशरूपता चिच्छक्तिः, आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिः इति।[18] सोऽयं महेश्वरः स्वातन्त्र्येण आत्मानं सङ्कुचितमाभासयति स्वातन्त्र्याभिन्नया मायाशक्त्या स्वमहिम्नि स्थितः अप्रच्युतस्वभावः अणून् संसारिणः उत्पादयति। तदेतत् तिरोधानकृत्यं निग्रहसंज्ञयापि संवेद्यते। महेश्वर एव तु शक्तिसमाराधनमुखेनोपासितः स्वरूपभूतान् अणून् अनवच्छिन्नस्वरूपप्रकाशनेनानुगृह्णाति चेद् एषोऽनुग्रहनामा कृत्यविशेषस्तस्य प्रथते सृष्टिस्थितिप्रलयनिग्रहानुग्रहेषु श्लाघ्यतमो धन्यः। यथोक्तम्-

**चिरात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्।।** इति।[19]
**सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।**
**सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः।।**
**मुहुर्मुहुरविश्रान्तस्त्रैलोक्यं कल्पनाशतैः।**
**कल्पयन्नपि कोऽप्येको निर्विशेषो जयत्यजः।।** इति।
**एवमस्य स्वतन्त्रस्य निजशक्त्युपभेदिनः।**
**स्वात्मगाः सृष्टिसंहाराः स्वरूपत्वेन संस्थिताः।।** इति।[20]
**स एव सर्वभूतानां स्वभावः परमेश्वरः।**
**भावजातं हि तस्यैव शक्तिरीश्वरतामयी।।** इति च।[21]

शक्तेः शिवादेव्याः प्रकारान्तरेण त्रिविधो महिमा गीयते। परमेश्वरस्य या शक्तिः शिवादिधरणीप्रान्तम् अविकल्पसंविन्मात्रतया बिभर्ति, पश्यति भासयति च सा श्रीपरा शक्तिः। या पुनः जगदिदमशेषं दर्पणहस्त्यादिवद् भेदाभेदाभ्यां संबिभर्ति सा श्रीपरापरा शक्तिः कीर्त्यते। या तु सम्पूर्णं जगत् परस्परविविक्तात्मना भेदेनैव पश्यति भासयति च सा श्रीमदपरा शक्तिर्जयति। आचार्योऽभिनवः तामिमां शक्तिं प्रतिभाशब्दितां काव्यशास्त्रोद्गमभूमिं सम्मन्वानः श्रीवेदतन्त्रश्रुतिवन्द्यां तां शैवागमदर्शनोद्गमभूमिमिव ततोऽप्यधिकतरामिव वा समर्च्यामभिवादयति चेत्तदभिन्नमिन्दुकलावतंसमपि स्तौति। तद्यथा-

यदुन्मीलनशक्त्यैव विश्वमुन्मीलितं क्षणात्।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्।। इति।[22]
यस्तन्मयान् हृदयसंवदनक्रमेण द्राक्चित्रशक्तिगणभूमिविभागभागी।
हर्षोल्लसत्परविकारजुषः करोति वन्देतमां तमहमिन्दुकलावतंसम्।।
तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा।
लोकस्यैव तथा नवेक्षितगुणस्यात्मापि विश्वेश्वरो
नैवालं निजवैभवाय तदिदं तत्प्रत्यभिज्ञोदिता।। इति।[23]

गणपतिं श्रीरघुनाथगुणगणान्वितरामेतिद्वयक्षरनामजपिनं लडयन्तीं श्रीसुन्दरेश्वरलालितान्तःकरणां क्षीरभवानीमभिवादये तदीयशरणागतः तच्चरणारविन्दयोः प्रपत्तिमन्विच्छुः श्रीशिवगुरोरनुग्रहपात्रतामश्नुवानो नम्रीभवानि च।।

जयति जनमरिष्टादुद्धरन्ती भवानी
जयति निजविभूतिव्याप्तविश्वः स्मरारिः।
जयति च गजवक्त्रः सोऽत्र यस्य प्रसादाद्-
उपरमति समस्तो विघ्नवर्गोपसर्गः।
देवि प्रपन्नवरदे गुणगौरि गौरि!
यद् गौरियं परिमितं स्त्रवतीह किञ्चित्।
तत्स्वामिने समुचिते समये सुपाक-
माकूतवेदिनि निवेदयितुं प्रसीद।।
यस्यां च सत्यामहमेव भामि सर्वात्मना सर्वविकल्पहीनः।
यत्नैरलभ्यामतिदुर्लभां तां श्रीसद्गुरोर्नौमि दयार्द्रदृष्टिम्।।

**सन्दर्भसङ्केतः-**


1. ई. प्रत्यभिज्ञाविमर्शिनी, 1/5/13.
2. ईश्वरप्रत्यभिज्ञा, 1/5/11.
3. श्रीतन्त्रालोकः, 4/184.
4. श्रीत. विवरणम्, 4/214.
5. ईश्वरप्रत्यभिज्ञा, 1/5/14.
6. तन्त्रसारः, पृ.सं.-7.
7. ई. प्र. विमर्शिनी, 1/5/14.
8. तदेव, 1/5/14.
9. श्रीतन्त्रालोकः, 4/147.
10. तदेव, 1/160.
11. तदेव, 1/150.
12. स्पन्दवि., पृ.सं.-4.
13. तदेव, पृ.सं.-6.
14. मा.वि., 3/5.
15. तदेव, 3/8.
16. विज्ञानभैरवम्, 15.
17. तदेव, श्लोकः-20.
18. तन्त्रसारः, पृ.सं.-6.
19. ईश्वरप्रत्यभिज्ञा, 1/5/7.
20. बोधपञ्चदशिका।
21. तदेव।
22. ध्वन्यालोकलोचनम्, प्रथमाननस्य अन्तमङ्गलपद्यम्।
23. अभिनवश्लोकः।


■ पत्रसङ्केतः- धर्मागमविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालयः, वाराणसी-05

# संस्कृतसाहित्ये लोकचिन्तनम्
## ( सदुक्तिकर्णामृतस्य विशिष्टसन्दर्भे )

■ प्रो. ओम्प्रकाशपाण्डेयः

कुण्ठत्वमेव कविता महतां कवीनां
सामन्त-सेवन-परम्परया प्रयाति।
प्रत्यग्रभावमुपयाति पुनश्च सा नः
सामान्यलोकगतजीवनवर्णनाभिः॥1॥
वैदग्ध्यमत्र परिचाययितुं महान्तः।
काव्यप्रबन्धसरणिं कवयः श्रयन्ते।
एकेन तत्तु रसनिर्झरमुक्तकेन
पद्येन मुक्तककवयस्तु निदर्शयन्ते॥2॥
क्लिश्नाति तावदिह काव्यकला कवीनां
शास्त्रप्रबन्धपरिपालनशृङ्खलायाम्॥3॥
काव्याम्बुधिः सहृदयैस्तु समादरेण
विद्वद्भिरेव मथितः परितोषबुद्ध्या।
निर्मन्थनात् कलितमत्र कवीश्वराणां
पेयं सदुक्तिवचनामृततत्त्वमेतत्॥4॥

संस्कृतसाहित्ये द्विविधा परम्परा समानान्तरतो गतिमयी दृश्यते। तत्राद्या तावदभिजातभूयिष्ठा, या प्रबन्धकाव्येषु पल्लविता, द्वितीया तु लोकमूला, या वैदिकमन्त्रसंहिताभ्यः प्रादुर्भूय मुक्तककाव्ये परिपुष्टा बभूव। प्रार्थयते कश्चन ऋषिर्बाह्वृच्यसंहितायां यद् देवास्तमेव जनं स्वानुग्रहेण परिपालयन्तु यः श्रमेण शिरसि काष्ठभारं वहन् स्वेदक्लिन्नवपुर्विराजते।

**'यस्त इध्मं जभरत् सिष्विदानो मूर्धानं वा ततपते त्वाया'** (-ऋ.सं., 4/2/6)।

कालान्तरादियँल्लोकनिष्ठ-परम्परा प्रायेण प्रबन्धकाव्येषु धूमाच्छन्ना प्रतिभाति। महाकाव्येषु नायकतां नायिकतां वाऽवाप्तुं त एव शक्नुवन्ति ये वा याः वा सद्वंशजाता नराः देवा वा क्षत्रिया वा भवेयुर्यथोक्तं ह्याचार्यविश्वनाथकविराजमहाभागैः-

**सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।**
**सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥**
**एकवंशभवा भूपाः कुलजा बहवोऽपि वा।** (-सा.द., 6/315-16)

प्रबन्धा अभिधाया अक्षयभाण्डारा बभूवुः। प्रतीयमानोऽर्थस्तत्र दुर्लभो जातः। येषु महाकाव्येषु सज्जन-प्रशंसा दुर्जन-निन्दा वा पात्राणां चरित्र-चित्रणैः समावेश्याऽऽसीत् तयोरभिधानमारम्भ एवाभिधयाऽऽरब्धम्। नगर-दुर्ग-प्राकारवर्णनेषु स्वभावोक्ति-बाहुल्यमदर्शि। श्लेषाऽऽश्लेषैरेव महाकवय आत्मनो धन्यान् मन्यन्ते स्म। प्रतीयमानोऽर्थस्तु तत्र दुर्लभ एव जातः। खड्गबन्धादीनां चित्रबन्धानां चमत्कारप्रदर्शनेष्वेव तेषां कौशलं प्रकटीबभूव। यमकादीनां शब्दालङ्काराणाञ्चमत्कारनैपुण्यमेव कवीनां परममुद्दिष्टमभूत्। दण्डकानां दण्डकारण्यानीवाजायन्त महाकाव्यानि। महाकाव्यान्तर्गताया अस्याः प्रवृत्तेः प्रतिक्रियाऽपि सञ्जाता निसर्गसिद्धा। महाकाव्येभ्यो विमुखा बभूवुः सहृदयाः सामान्यतश्च। मुक्तककाव्यानि निरन्तरमधिकाधिकं हृद्यानि जातानि। शनैः शनैः संस्कृत-साहित्ये महाकाव्यानां प्राधान्यं क्षीणम्। ख्रीष्टस्य सप्तम्या अष्टम्या वा शताब्द्या अनन्तरं

संस्कृतकाव्ये मुक्तककविताया नवो युगारम्भः। अद्य यावत् संस्कृते यद्यपि महाकाव्यानि प्रणीयन्ते, तेषु निःसंशयमनेकानि हृद्यान्यपि सन्ति, किन्तु तानि वस्तुतोऽपवादस्वरूपाण्येव विलसन्ति–नास्ति तेषां यतः प्राधान्यम्।

सहृदयहृदयसंवादभाजा कविशिरोमणिनाऽमरुकेन, तस्यान्यैश्च बहुभिः सहधर्मशीलैः सहचरैर्हि सुकविभिरियन्ति सरसानि, हृद्यानि, ललितानि च मुक्तकानि प्रणीतानि, यैः काव्यजगति युगान्तरः सञ्जातः। शिथिलीबभूव तैश्चार्याणाम्महाकाव्यानुरागबन्धः। स्थूलकलेवराणि महाकाव्यानि प्रणीयैव सुकीर्तिभाजो भवन्ति कविवर्या इति विश्वासो विगलितः। एकोऽपि मुक्तकश्लोकश्चमत्कारसृष्टौ प्रभवतीति स्पष्टमुद्घुष्टमग्निपुराणे- 'मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम्' (अ.पु., 337/36)। ध्वनिप्रतिष्ठापकपरमाचार्यैरानन्दवर्धन- महाभागैरप्यमरुकस्य मुक्तकश्लोकाः रसनिष्पत्तौ प्रबन्धसदृशा एवं सुक्ष्मा निरूपिताः– 'अमरुकस्य कवेर्मुक्तकाःशृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव' (–ध्वन्यालोकात्)। परिणामतो महानगरेभ्य आरभ्य ग्राम–ग्रामान्तरस्थैरसंख्यातैर्लोककविभिरतिरमणीयानि मुक्तकानि पद्यानि रचितानि। 'मुक्तके कवयोऽनन्ता' इति लोकोक्तिः प्रसिद्धैव। किन्तु लब्धगौरवाणामेषां मुक्तकपद्यानां प्रसारस्तु कथं भवेदिति समस्यापि समुत्पन्ना। अस्याः समाधानाय विविधानां सुभाषितसङ्ग्रहाणां सङ्कलियतारः सम्पादकाश्चाग्रेसराः बभूवुः। तैरतिपरिश्रमेण महताध्यवसायेन च सम्पादकैः धिया श्रद्धयापि हि दूर–दूरान्तरस्थानां कवीनां पद्यानि सङ्कलय्य सुसम्पादितानि। ततः पूर्वं प्रायेणैतेषां पद्यानामीदृशी स्थितिरेवासीत् यादृशी कविराजराजशेखरेण वर्णिता–

**एकस्य तिष्ठति कवेर्गृह एव काव्यमन्यस्य गच्छति सुहृद्भवनानि यावत्।**
**न्यस्याविदग्धवदनेषु पदानि शश्वत् कस्यापि सञ्चरति विश्वकुतूहलीव॥**

(–काव्यमीमांसायाश्चतुर्थाध्यायात्)

प्रतिभावतामपि कवीनां पद्यानि सञ्चारसाधनाभावान्नप्रसरन्ति। अमत्सरिणो ह्येते सम्पादका वस्तुतस्तत्त्वाभिनिवेशिन आसन्। काव्यमीमांसायां सहृदयभावकस्य ये गुणा अभ्युक्तास्ते सर्व एव दरीदृश्यन्ते सुभाषितसम्पादकेषु–

**शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः**
**सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः।**
**पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यतां**
**केषामवे कदाचिदेव सुधियां काव्यश्रमज्ञो जनः॥**

सूक्तिसङ्ग्रहाणामेते सङ्कलयितारो वस्तुतो लोककवीनामहैतुकबन्धवो, यथोक्तमेव तेन विदग्धप्रवरेण कविराजेन सहृदयाचार्येण च राजशेखरेण–

**स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च।**
**कवेर्भवति हि चित्रं किं हि तद् यन्न भावकः॥**
**काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना।**
**नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश॥**

इत्थं गुणग्राहकशिरोमणिभिः सङ्कलयितृभिः सम्पादितानां सुभाषितसङ्ग्रहाणां संस्कृतवाङ्मये वर्तते सुदीर्घा सुप्रशस्ता च परम्परा। एकादश्याः ख्रीष्टशताब्द्याः समारभ्य अद्यपर्यन्तमेतेषां सूक्तिसङ्ग्रहाणां सततं सम्पादनं बोभवीति। अस्मिन् सङ्कलनक्रमे विद्याकर–पण्डितेन सम्पादितः 'कवीन्द्रवचनसमुच्चय' प्राथम्यं भजते। अयमेवैकादश्यां शताब्द्यां सम्पादितः। अनन्तरं सोमेश्वरेण द्वादश्यां शताब्द्यां (1135ई.) 'अभिलषितार्थचिन्तामणिः' सम्पादिता। अस्यामेव शताब्द्यामनन्तयशोभाग्भिः गोवर्धनाचार्यैः 'आर्या सप्तशती' सम्पादिता। अतोऽन्येषु प्रसिद्धेषु सुभाषितसङ्कलनेषु केचन सन्त्येते समुल्लेखनीयाः सूक्तिसमुच्चयाः–

सुभाषितमुक्तावली (जल्हणसम्पादिता), सूक्तिरत्नाकरः (सिद्धचन्द्रगणिविहितः), सुभाषितसुधानिधिः (सायणाचार्यसम्पादिता), शार्ङ्गधरपद्धतिः, सूक्तिरत्नाकरः (सं.– कलिंगरायः), सुभाषितावलिः (सं.–श्रीवरः), सूक्तिमुक्तावली (सं.–सोमप्रभाचार्यः), सुभाषितरत्नसन्दोहः (अमितगतिः), पद्यावली (रूपगोस्वामिना सम्पादिता), सुभाषितहारावली (हरिकविना सम्पादिता), पद्यतरङ्गिणी (वज्रनाथसम्पादिता), पद्यवेणी (वेणीदत्तसम्पादिता), सूक्तिमालिका (सं.–नारोजिपण्डितः), पद्यरचना (लक्ष्मणभट्टः), बुधभूषणः (सं.–छत्रपतेः शिवराजस्यात्मजः शम्भुः), सुभाषितरत्नभाण्डागारः (सं.–शिवदत्तः),

संस्कृतसूक्तिरत्नाकरः (सं.-रामजी उपाध्यायः)। कैश्चन पाश्चात्यैरप्याधुनिकैर्विद्वद्भिः सुभाषितसङ्ग्रहाः सम्पादिताः सन्ति। तत्र लुड्विक स्टर्नबाखमहोदयैः सम्पादितानि पद्यसङ्कलनानि सुदीर्घाणि प्रशंसनीयानि च सन्ति।

तदेतेषु सर्वेषु सङ्ग्रहेषु 'सदुक्तिकर्णामृतम्' (श्रीधरदासेन सम्पादितं) कालक्रमतस्तुरीयम्मन्यते। अस्य सम्पादनं त्रयोदश्याः शताब्द्याः पञ्चमे वत्सरे सञ्जातम्। आदौ पुष्पिकायां तेन स्वयमेव स्वपरिचयः प्रदत्तोऽस्ति- तदनुसारमसौ वंगप्रदेशगतेन सेनवंशीयराज्ञा लक्ष्मणसेनेन सह सम्बद्ध आसीत्। तस्य राज्ञो महासामन्त आसीच्छ्रीवटुदासः तस्यैवात्मजोऽयं श्रीधरदासः स्वयमपि राज्ञो विश्वस्तसामन्तो बभूव।[1]

'सदुक्तिकर्णामृते' पञ्चप्रवाहाः सन्ति- अमरप्रवाहः,शृङ्गारप्रवाहः, चाटुप्रवाहः, अप्रदेशप्रवाहः, उच्चावचश्चेति। प्रत्येकप्रवाहो वीचिसु विभक्तो विलसति, यत्र वीचिसंख्या प्रवाहेषु विभिन्ना वर्तते। पञ्चपद्यानि सन्ति एकस्यां वीचौ। सुभाषितसङ्ग्रहेऽस्मिन् प्रायेणार्द्धसहस्रकवीनां 2338 संख्यातानि मनोहराणि पद्यानि सङ्कलितानि सन्ति। अनेकशतानि पद्यानि त्वज्ञातकर्तृकाण्यपि सन्ति। स्वभावतोऽत्र वङ्गीयकवीनां प्राधान्यम्। तेषामपि केषाञ्चिन्महाभागानां पद्यानि सुरक्षितानि सन्त्यत्र येषां प्रसिद्धिरपरेषु क्षेत्रेषु विराजते। एषु महर्षिपाणिनिरग्रगण्यो वर्तते, यस्य व्याकरण-विधातृत्वं विदितचरमेव समेषाम्। स किञ्चिज्जाम्बवतीजयमित्याख्यं काव्यमपि प्रणिनायेति जानन्तोऽपि वयं तस्य काव्यवैशिष्ट्यं न जानीमहे। तदस्त्यस्माकं सौभाग्यमेव यदस्मिन् सदुक्तिकर्णामृते तेषामपि पद्याष्टकं सुरक्षितं विद्यते। अत्र निवेदनीयमेतावदेव यदेभिः पद्यैः सुस्पष्टतरं प्रतिभाति महर्षिरयं न केवलं शुष्को महावैयाकरण एवासीदपितु कोमलहृदयः सरसान्तः करणश्च कविरप्यासीत्। एषां पद्यद्वये रजन्या नायिकारूपेण वर्णनं विद्यते-

**कह्लारस्पर्शगर्भैः शिशिरपरिचयात्कान्तिमद्भिः कराग्रैश्-**
**चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्त्रंसमाने रजन्याः।**
**अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिस्यन्दिनीभि**
**र्दूरारूढे प्रमोदे हसितमेव परिस्पष्टमाशासखीभिः॥**

तथा हि,

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि मोहाद्गलितं न लक्षितम्॥**[2]

पद्यत्रयमन्यदपि शृङ्गारमयीमनुभूतिमेवाभिव्यनक्ति।[3] किन्तु सदुक्तिकर्णामृतस्योच्चावचप्रवाहे समुपलब्धयोः द्वयोः पद्ययोर्महर्षिरयं वीभत्सरसाप्लावितं श्मशानवर्णनमप्यकरोत्। तयोरेकोऽत्र समुद्ध्रियते निदर्शनाय-

**चञ्चत्पक्षाभिघातज्वलितहुतवहप्रौढधाम्नश्चितायाः**
**क्रोडाद्व्याकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण।**
**सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं**
**पश्यान्तः प्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रवृद्धः॥**[4]

सदुक्तिकर्णामृते सङ्कलितेषु कविषु पञ्चाशत्कवय एव सुप्रसिद्धाः सन्ति। अवशिष्टाः प्रायेणापरिचिताः स्वल्पपरिचिता वा सन्ति। अचर्चितेषु कविषु बहवः कवयः स्वयुगे समाजे च निःसंशयं प्रत्यतिष्ठन्। उमापतिधरः, आचार्यो गोपीकः, जलचन्द्रः केशटाचार्यः, नरसिंहः, भवानन्दः, योगेश्वरः, शरणः, लक्ष्मीधरः, वैद्यगदाधरो हरिश्चैतेषां कविवर्याणां नामानि साम्प्रतं यद्यपि प्रायेणापरिचितान्येव प्रतिभान्ति, संस्कृतसाहित्यस्येतिहासग्रन्थेषु कामं तान्यनुल्लिखितान्यपि सन्तु किन्तु सदुक्तिकर्णामृतप्रभृतिषु सुभाषितसङ्ग्रहेषु तेषां यानि पद्यानि सङ्कलितानि सन्ति, तैः विशदं विभाति यदेतेषां काव्यानि सहृदयरसनासु नूनं नरीनृत्यन्ते स्म कदाचित्, यतो हि सुभाषित-सङ्ग्रहकाराः पद्यचयनक्रमे सुतरां सावधाना आसन्। सङ्कलनेषु तेषां समीक्ष्य सङ्ग्रहकारिता सुस्पष्टा। सामान्यतः स्वरचितकाव्ये सर्वेषामेवानुरागो निसर्गसिद्धो भवति, किन्त्वेते सम्पादकशिरोमणयस्तस्मादपि विमुक्ता बभूवुरिति सदुक्तिकर्णामृते स्वयं सङ्ग्रहकर्तुः श्रीधरदासस्य पद्याभावः प्रमाणीकरोति। सङ्कलितानां कवीनामनभिजात्यं तेषां नामभिरेव सिद्ध्यति-

सन्त्येतादृशानि कानिचिन्नामानि- कक्कोलः, कापालिकः, केवट्टपपीपः, केशटः, केशरकालीयनाथोकः, कोलाहलः, गोसोकः, चण्डालः, चण्डालचन्द्रः, चित्तपः, छित्तपः, डिम्बोकः, तैलपाटीयगाङ्गकः, दङ्कः, दनोकः, नग्नः,

नटगाङ्गोकः, नीलोकः, पापाकः, पुंसोकः, भवग्रामीणवाथोकः, भेरीभ्रमकः, मनोकः, राक्षसः लड्डूकः, वराहः, वल्लनः, वाच्छोकः, वाहूटः, वैतोकः, शालूकः, सेन्तुतः, सोल्लूकः, सेह्लोक इत्यादयः। केचनैतादृशा अपि लोककवयो येषां पद्यानि सुभाषितसङ्ग्रहेष्वेव रक्षितानि सन्ति। तेषां कानिचिदेतानि नामानि सन्ति- अंशुधरः, अचलः, अपिदेवः, अमृतदत्तः, आर्याविलासः, कर्णाट्देवः, कुलदेवः, कोकः, ग्रहेश्वरः, तिलचन्द्रः, पञ्चमेश्वरः, भृङ्गस्वामी, मनोविनोदः, शुभाङ्क इत्यादयः। अत्र कवयित्रीणां त्रयी विद्यते- भावदेवी, विकटनितम्बा, विद्या चेति। कवीनामनया बृहत्यानुक्रमण्या स्पष्टीभवति यत् संस्कृतभाषायान्तद्युगे समाजस्योच्चावचवर्गीयाः सर्वे रचनाकाराः सक्रिया आसन्। लोकजीवनस्य गहनानुभव एव, तेषां शेवधिः, सुभाषितेषु पिनद्धैषानुभूतिरेव गरीयसी।

देवानां देवीनाञ्च भारतीये लोकजीवने विद्यते शिखरस्थानम्महत्त्वञ्च। सदुक्तिकर्णामृतस्यामराख्ये प्रथमे प्रवाहे सन्ति तद्विषये भूयांसः श्लोकाः, किन्तु तेषु तेषां तासां वा केवला स्वभावोक्तिपरा स्तुतय एव न सन्ति-सन्ति तत्र देवस्वरूपाण्याधृत्य बहुविधा नवनवा उद्भावनाः। प्रसिद्धा अवधारणा अपि नूतनकल्पनापरिधानैर्विभूषिताः सन्त्यैन्द्रधनुरिव।

लोके ब्रह्मणश्चतुर्मुखत्वं सुप्रसिद्धम्। तत्र सर्वेषां मुखानां कीदृशी सार्थकतास्ति, इति मधु-कैटभवधप्रसङ्गपरेण पद्येनैकेन ज्ञायते-

**पायाद्वो मधुकैटभासुरवधे विष्णुप्रबोधोद्धुरो**
**धाता वक्त्रचतुष्टयं तु युगपद् यस्याभवत्सार्थकम्।**
**एकं स्तौति मुखं शिवामितरदप्यार्तं वरान् याचते**
**दैत्यो प्रत्यपरं वितर्जति हरत्यन्यच्छ्रियः सम्भ्रमम्।।**[6]

इयं मनोहारिणी रचना कविवसन्तदेवकृतास्ति। कविनोद्भावितं यदेकेन मुखेन चतुराननो विष्णोः प्रबोधनाय देवीं स्तौति, आत्मरक्षणाय द्वितीयेन प्रार्थयते, तृतीयेन मधुकैटभौ तर्जति, तुरीयेण चासौ लक्ष्म्या भयं दूरीकरोति।

कविभिर्भगवतः शिवस्य स्वरूप-परिकर-गणादिकान् समाश्रित्यपि नवनवोद्भावनाः समुत्थापिताः। शिवपार्वत्योः परस्परं हास-परिहासौ भारतीयदाम्पत्यजीवनस्य सहजोल्लासं व्यङ्क्तः। महेश्वरः स्वकीये गृहस्थजीवने वित्ताभावादर्थकार्श्याद् वा कानि-कानि काठिन्यान्यनुभवति-तद्विषये गणेशु चिन्ता,[6] तेषां पारस्परिकी स्पर्धा, बहुविधा आशंकाश्च कविभिः सोत्साहं पद्येषु निबद्धाः। तत्र निर्मलहास्यस्य सुमधुराः कणिकाः, स्नपयन्त्यस्माकं मनांसि। स्वसपत्न्योर्गङ्गा-चन्द्रकलयोर्विषये पार्वत्या मनोगता चिन्ता, चन्द्रकलायाश्च्युतेनामृतेन शिवस्य कण्ठस्थकपालानां पुनर्जीवनम्, ताण्डवनृत्यसमये गणानां कार्याधिक्यं सम्भ्रमश्च, शिवपार्वत्योः शृङ्गारप्रसङ्गाः, विरुद्धभावयोर्युगपदनुभूतिः, अर्द्धनारीश्वरस्वरूपम्, तद्गताः समस्याः, बहुविधानि विडम्बनानि, स्वामिकार्तिकेयस्य बाललीलाश्चेति कविभिः प्रायेण वर्णिताः। सुकवेः कक्कोलस्यैकस्मिन् मनोहारिणि पद्ये शिवपार्वत्यौः प्रथमा प्रणयलीलोपवर्णिता। शिवसदने विद्यमाना नवोढा पार्वती शिवस्य मस्तकस्थाच्चन्द्रमसः, कण्ठस्थान्नागाज् जटागताया गङ्गायाश्च भूयो भूयो लज्जते प्रणयारम्भे। शिवस्तामित्थं प्रबोधयते तदवसरे-

**बालः सुन्दरि! चन्द्रमाः स्रुतसुधाधाराभिराप्यायितो**
**निद्रामेति फणीश्वरः सुरधुनी रुद्धा जटामण्डले।**
**इत्थं मन्मथकेलिकौतुकविधौ व्रीडावतीं पार्वतीं**
**पायाद्वः प्रतिबोधयन्नववधूं चन्द्रार्धचूडामणिः।।**[7]

-सुन्दरि! चन्द्रस्तु बालक एवास्ति यः पीयूषं निपीय शयान आस्ते, नागराजोऽपि शेते, गङ्गा जटामण्डले निरुद्धास्ति तस्मात् रतिक्रीडायां त्वया सङ्कोचौ नैव कर्तव्यः।

शृङ्गारप्रवाहेऽपि मनोरमा उक्तयः सङ्कलिताः सन्ति। सुकवेर्योगेश्वरस्य पद्यमिदमुदाहार्यं यत्र कस्याश्चिद् विरहिण्याः कामसन्तापो निरूपितो वर्तते। इयती तीव्रतास्ति सन्तापस्य यत्तस्मिन् भूयानन्नपरिपाकः सम्भवति-

**एतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्योऽद्य न**
**स्निग्धेनापि जनेन दाहभयतः प्रस्थंपचः पाथसाम्।**
**निर्वीजीकृतचन्दनौषधविधौ तस्मिंश्चटात्कारिणो**
**लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्त्रजाम्।।**[8]

पारदेशिकेन पथिकेन सह प्रीतिर्ग्रामवधूनामपि विषयीभवति प्रायेण लोककाव्ये। सुकवेर्बलभद्रस्य पद्येऽस्मिन् काचिद् विदग्धा कमपि पथिकं निषेधति यद्यपि मुखेन रात्रिनिवासम्, किन्तु वस्तुतस्तस्या अयमेवाशयो यदस्या एव गृहं तस्मै रात्रिवासाय भृशमुपयुज्यते, यतो हि तत्र सर्वथा विजनस्थितिः वर्तते या तया सह सहवासाय पूर्णतयानुकूलास्ति-

**ग्रामान्ते वसतिर्ममातिविजने दूरप्रवासी पति-**
**र्गेहे देहवती जरेव जरती श्वश्रूर्द्वितीया परम्।**
**एतत्पान्थ! वृथा विडम्बयति मां बाल्यातिरिक्यं वयः**
**सूक्ष्मं वीक्षितुमक्षमेह जनता वासोऽन्यतश्चिन्त्यताम्।।'**

अत्र वाच्यार्थो निषेधरूपः किन्तु व्यङ्ग्यार्थस्तु विधिरूप एव विद्यते। विवाहोत्तरमपि जारजन्या रतिकामना यद्यपि विधिसम्मता नास्ति तथापि तदर्थमौत्सुक्यं लोककाव्ये बहुधा विषयीभूतं प्रतिभाति। कवयित्र्या विद्यायाः पद्येऽस्मिन् तादृशी जारजन्या सहवासकामनैव वर्णिताऽस्ति-

**दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि**
**प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।**
**एकाकिन्यपि यामि सत्वरमितः स्त्रोतस्तमालाकुलं**
**नीरन्ध्राःस्तनमालिखन्तु जरठच्छेदा नलग्रन्थयः।।** (-2/14/1)

वाच्यार्थानुसारतो नायिका स्वगृहस्य रक्षणार्थं प्रतिवेशिनीं निवेदयते यतो हि सा जलमानेतुं याति। जलस्त्रोतस्तु तमालवृक्षैर्व्याप्तं वर्तते, तत्र नलग्रन्थयोऽपि विद्यन्ते, ततस्तस्या स्तनयोस्तैः कृतानि क्षतान्यपि सम्भवन्ति। किन्तु व्यङ्ग्यार्थोऽत्र भिन्न एवास्ति। वस्तुतो नायिका स्वैरिणी वर्तते, या रमणायोपपतिसमीपे गन्तुमिच्छति। रमणोत्तराणि स्तनक्षतानि सम्भाव्यान्येव-तस्मात् सा पूर्वमेव तमालादीनां व्याजात् स्तनक्षतानां कारणान्तराणि निर्दिशति यथार्थकारणं निगूहयितुम्।

अमरप्रवाहान्तर्गतं भगवतः श्रीकृष्णस्यैतत्कथनमपि निगूढव्यङ्ग्यार्थगर्भं वर्तते यस्मिन्नसौ सर्वानन्यान् गोपबालान् सर्प-वानर-व्याघ्रभयैर्वृन्दावन-गमनात् विरतान् करोति, किन्तु नयनाकुञ्चनैर्भगवतीं राधिकामामन्त्रयते सखीभिः सह-

**व्यालाः सन्ति तमालवल्लिषु वृतं वृन्दावनं वानरै-**
**रुन्नक्रं यमुनाम्बु घोरवदनव्याघ्राः गिरेः सन्धयः।**
**इत्थं गोपकुमारकेषु वदतः कृष्णस्य तृष्णोत्तर-**
**स्मेराभीरवधूर्निषेधि नयनस्याकुञ्चनं पातु वः।।**

सदुक्तिकर्णामृते प्रतीयमानेन साकं क्वचित् स्वाभावोक्तिरपि रसिकानन्दं वितनोति। यथेच्छं मद्यं निपीय हलध रः कथं चेष्टते, तदस्य वर्णनं प्रीणाति नो मनांसि-

**भ-भ-भ्रमति मेदिनी ल-ल-लम्बते चन्द्रमाः**
**कृ-कृष्ण व-वद द्रुतं ह-ह-हसन्ति किं वृष्णयः।**
**शि-शीधु मु-मु-मुञ्च मे प-प-पानपात्रे स्थितं**
**मदस्खलितमालपन् हलधरः श्रियं वः क्रियात्।।** (-1/48/3)

निशीथकाले स्वकर्कटीक्षेत्रं रक्षन्त्याः कस्यश्चिद् ग्राम्यवध्वा वर्णनमपि वितरति पाठकेषु प्रमोदम्-

**मञ्चे रोमाञ्चिताङ्गी रतिमृदिततनोः कर्कटीवाटिकायाम्**
**कान्तस्याङ्के प्रमोदादुभयभुजपरिष्वङ्गकण्डे निलीना।**
**पादेन प्रेङ्खयन्ती मुखरयति मुहुः पामरी फेरवाणां**
**रात्रावुत्त्रासहेतोर्वृतिशिखरलतालम्बिनीं कम्बुमालाम्।।** (-2/21/4)

कान्तेन सह रमणकालेऽपि ग्रामवधूरियं क्षेत्ररक्षणचिन्तया व्याकुलेति वैवश्यमेवात्र विवक्षितम्। ग्राम्यस्त्रीणां सौन्दर्यवर्णने कवीनामेतेषां मनांसि भृशं रमन्त इति स्वस्तेषामेवोक्तिः-

**न तथा नागरस्त्रीणां विलासा रमयन्ति नः।**

यथा स्वभावमुग्धानि वृत्तानि ग्राम्ययोषिताम्।। (-2/21/3)

स्वभावोक्तिं विहाय यत्र-कुत्रचन नवानि परिवर्तनानि संलक्ष्यन्ते तेषां निरूपणं प्रतीकमाध्यमेन द्रष्टव्यम्। पद्यमेतत्सुकविना वैतोकेन प्रणीतमस्ति-

दृष्टा काञ्चनयष्टिरद्य नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतमेकपद्ममनिशं प्रोत्फुल्लमालोकितम्।
तत्रोभौ मधुपौ तथोपरि तयोरेकोऽष्टमीचन्द्रमास्
तस्याग्रे परिपुञ्जितेन तमसा नक्तन्दिवं स्थीयते।। (-2/4/3)

ऐतिहासिकदृशापि सदुक्तिकर्णामृते सङ्कलितानां पद्यानां यत्किञ्चन महत्त्वं वर्तते। हूणानामाक्रमणैः सन्त्रस्ता अपि केचन लोककवयस्तेषां सुन्दरीणां सौन्दर्यवर्णनं चक्रुः। अपराजितरक्षितेन कविना चन्द्रबिम्बो हूणतरुण्याः स्तननिभ एव साक्षात्कृतः-

'उद्दर्पहूणतरुणीरमणोपमर्द
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः' (-1/74/2)

उमापतिधरोऽपि कश्मीरप्रसङ्गे हूणाङ्गनानां सौन्दर्यं विस्मर्तुमक्षमः-

हूणीनां हरिणाङ्कपाण्डुमधुरश्रीभाजि गण्डस्थले
शोभां कामपि बिभ्रति प्रणिहिताः कश्मीरविच्छित्तयः।
अप्यासां स्तनमण्डले परिणमन्मालूरगौरे श्रियं
सन्धत्ते नवसान्ध्यरश्मि रुचिरं माञ्जिष्ठपट्टांशुकम्।। (-2/20/2)

इत्थमेतत् स्पष्टं प्रतीयते यन्मुक्तककाव्यगतं सौन्दर्यं विशिष्टतरमेवास्ति। वयं समासतः कथयितुमर्हामो यत्-

भक्तिर्विभाति नितराञ्च परानुरक्तिः
शक्तिः समुल्लसति कापि च सत्कवीनाम्।
यस्यां प्रसक्तिरपरा प्रिय-प्रेयसीना-
मुक्तिः सदुक्तिवचनामृतवर्तिनी सा।।1।।

दीप्त्या स्फुरन्त इह सन्ति न रत्नश्रेष्ठै-
र्विद्योतिताश्च मुकुटास्तु महीपतीनाम्।
आत्मप्रभोज्ज्वलविशिष्टगुणान् दधानः
कश्चित् कृषीवलजनश्च परञ्चकास्ति।।2।।

आभूषिताश्च विविधैर्हि महार्घरत्नै-
र्नैवात्र काश्चिदपि सन्ति महीमहिष्यः।
हेमन्तशैत्यमपसारयितुं शयाना
कान्ताङ्गमिच्छति च कापि वधूर्निशीथे।।3।।

उष्णीषमण्डितशिरोभिरलङ्कृताश्च
भान्त्यत्र राजकवयो नहि वावदूकाः।
संव्यञ्जयन्त इह नैजमनल्पभावं
सन्त्यत्र लोककवयो ननु वेदनाढ्याः।।4।।

आस्ते तदुक्तिवैचित्र्यमनल्पमत्र
नास्त्येव किञ्च किल कृत्रिमशब्दजालम्।
कैश्चिन्मितैर्हि सरलैरपि निश्छलैस्तैः
शब्दैर्व्यनक्ति कविरेव समर्थसिद्धः।।5।।

साधारणीकृतमसह्यसुखं न दुःखं
येनानुभूतमिह पर्णगृहान्तरेषु।
आत्मानुभूतिरहितस्य कवेर्विभूति-
र्लोकं न रञ्जयति नापि यशोधरैव॥6॥
श्लिष्टप्रयोगपटुरस्तु भवत्वसौ वा
व्युत्पत्तिबन्धुरिव शास्त्रपदाभिधाने।
लोकानुभूतिरहितस्य कवेर्हिकाव्ये
जीवातुरेव नहि तिष्ठति दीर्घकालम्॥7॥
न क्रीडितं शिशुजनेन सहैव येन
सम्मुग्धहासहसितानि न लोकितानि।
अप्यग्रणीर्निखिलशास्त्रधुरन्धराणां
काव्यं परं कवयितुं न ह्यसौ समर्थः॥8॥
आलोकितं न किल येन घटं वहन्त्या
वक्षोजयुग्ममपि चौर्यदृशा कदाचित्।
काव्यं निसर्गरमणीयमथापि बोद्धुं
नैव क्षमोऽयमिह कश्चन शास्त्रनिष्ठः॥9॥
व्याप्तानि सन्ति कमनीयसुभाषितानि
रथ्यासु तासु रस-रीतिविजृम्भितानि।
नेत्राणि यत्र नवयौवनजन्यप्रेम्णा
यूनामसंख्यवलयैस्तु समुच्छलन्ते॥10॥
निर्मीयते किमपि चित्रविचित्रकाव्यं
सञ्चारिभावविभवैरनुभावसिद्धम्।
रात्रौ च यत्र तरुणी पदमादधाना
मार्गे प्रियाभिसरणाय विशङ्कमाना॥11॥
गाढान्धकारमपनीय समाजमध्ये
निस्साररूढिमयजाड्यमपाकरिष्णुः।
कश्चिद् युवा लिखति किञ्च पराक्रमेण
काव्यं नवं स्वरुधिरेण च कालपत्रे॥12॥
काव्यं न तात! कुसुमास्तरणं सुखाय
नैवेदमस्ति रमणीयविलासलास्यम्।
काव्याम्बुजं विकसितासितपङ्कमध्ये
पीडा परा भवति यत्र च शोषणं वा॥13॥
वागाम्भृणी न मुदिताऽद्य मदोद्धतस्य
दम्भप्रवृत्तवचनेषु विजेतुरेव।
काव्यं स एव परिमाति पराजितोऽपि
प्रोत्थाय यः सुविजयाय च चेष्टमानः॥14॥
दृष्टस्त्वया मुहुरहो सुभटाट्टहासा
वादेषु हास्यमपि तत्र सुपण्डितानाम्।

दृष्टस्त्वया कथय तात! रुदन्नजस्त्रं
मिष्टान्नमाप्य सहसा स्मयते शिशुर्यः॥15॥
साध्व्यः स्त्रियः सुविदितास्तु पतिव्रताश्च
तासां प्रशस्तिवचनानि बहुश्रुतानि।
धन्या च किन्तु तरुणाय समर्पयन्ती
दीनाय नैजमखिलं गणिका च काचित्॥16॥
जानन्ति बौद्धमतमत्र सखे! भदन्ताः
ह्यास्ते न तत्र रुचिरेव कवेः कुलस्य।
सा वन्दनीयचरिता तरुणी सुजाता
दत्तं यया हि सुगताय सुपायसान्नम्॥17॥
काव्यं स्पृशत्यचिरमेव मनोऽस्मदीयं
यत्सौरभं वहति किञ्च सुमानुषस्य।
सृष्टं विहाय कविनाऽपि तदाभिजात्यम्
काव्यं सदैव जनमङ्गलमातनोति॥18॥

सन्दर्भसङ्केतः-

1. .....स श्रीलक्ष्मणसेन एकनृपतिर्मुक्तश्च जीवन्नभूत्।
तस्यासीत्प्रतिराजतद्धतमहासामन्तचूडामणि -
र्नाम्ना श्रीवटुदास इत्यनुपमप्रेमैकपात्रं सखा।
तापं सन्तमसं हरन्नहरहः कीर्तिं दधत्कौमुदीं
साक्षादक्षयसूनृतामृतमयः पूर्णः कलानां निधिः॥
श्रीमान् श्रीधरदास इत्यधिगुणाधारः स तस्माद-
भूदाकौमारमपारपौरुषपराधीनस्य यस्यानिशम्॥ (-सदुक्तिकर्णामृतम्, 1-3 पद्यानि)

2-4. सदुक्तिकर्णामृतम्, पद्यसं.- 411, 412, 563, 715, 1081, 2021, 2364-5 (ed. by S.C. Banerjea, 1965, Calcutta)।

5. सदुक्तिकर्णामृतम्, 1/1/3.

6. सेवां नो कुरुते करोति न कृषिं वाणिज्यमस्यास्ति नो पैत्र्यं नास्ति धनं न बान्धवबलं नैवास्ति कश्चिद् गुणः।
द्यूतस्त्रीव्यसनं न मुञ्चति तथापीशस्तदस्मात् फलम् किं मे स्यादिति चिन्तयन्निव कृशो भृङ्गी चिरं पातु वः॥
(-1/31/3)

पद्यमिदमज्ञातकर्तृकमस्ति। कवी नीलांग-भवानन्दावपि चिन्तामीदृशीं व्यङ्क्तः। अत्र भवानन्दस्य पद्यमिदं समुल्लेखनीयम्-
भिक्षाभोजिनि कृत्तिवाससि वसुप्राप्तिः कुतः स्यादिति, प्रागर्द्धं वपुषः स्वयं व्यसनिनी यस्याहरत्पार्वती।
तस्यार्द्धं कुपिता हठाद्यदि हरेन्मूर्ध्नि स्थिता जाह्नवी, हा! नाथ क्व तदेति दुःस्थहृदयो भृङ्गी चिरं शुष्यति॥ (-1/31/4)

7. सदुक्तिकर्णामृतम्, 1/6/3.

8. सदुक्तिकर्णामृतम्, 2/33/3.

9. सदुक्तिकर्णामृतम्, 2/15/1.

■ पत्रसङ्केतः- प्रोफेसर-एमेरिटस, संस्कृतविभागः, लखनऊविश्वविद्यालयः, लखनऊ।

# महाकवेः कालिदासस्य योगशास्त्रज्ञता

■ प्रो. बृजेशकुमारशुक्लः

महाकविः कालिदासो न केवलं कविरपितु स विभिन्नानां शास्त्राणां पण्डितोऽप्यासीदिति तन्महाकवेः काव्यानामवलोकनतया सुष्ठु ज्ञायते। कालिदासस्य काव्येषु नाटकेषु च काव्यशास्त्रम्, धर्मशास्त्रम्, वेदान्तादिदर्शनशास्त्रम्, योग- शास्त्रम्, तन्त्रागमशास्त्रम्, ज्योतिषशास्त्रम्, सामुद्रिकशास्त्रम्, कामशास्त्रम्, व्याकरणशास्त्रञ्चेत्यादिविषयाः प्रत्यक्षाऽप्रत्यक्षरूपेण समनुस्यूता वर्तन्ते। समये-समये विद्वद्भिरनेकशास्त्रविषयमुररीकृत्य कालिदासस्य काव्यादीनि समीक्षितानि। अत्र निबन्धे योगशास्त्रमधिकृत्य महाकवेः कालिदासस्य शास्त्रज्ञता प्रमाणपदवीमुपयास्यतीति तच्चिन्तनं विहितम्। रघुवंशादिमहाकाव्या- नामनुशीलनेन विशदीभवति यत्कालिदास एको योगी योगशास्त्रज्ञो वाऽऽसीत्। रघुवंशिनां राज्ञां वर्णनप्रसङ्गे 'योगेनान्ते तनुत्यजाम्'[1] इति कथयता कालिदासेन कविना योगशास्त्रं स्मृतम्। योग एव मोक्षप्राप्त्युपायोऽप्यस्ति। अत एव राजा रघुर्योगिभिः सह सान्निध्यं चकार-

**अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः।**[2]

योगसाधके मृते सति पिण्डादिदानाभावत्वं महाकविना कालिदासेन स्वीकृतम्-

**तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः।**[3]

x x x x

**न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः।**[4]

अनेन महाकवेः कालिदासस्य योगप्रियता तच्छास्त्रज्ञता च दरीदृश्यते। अत्र न केवलं महाकवेः काव्येषु योगशब्द-स्योल्लेखोऽपितु महर्षिणा पतञ्जलिना कृतस्य योगसूत्रस्य पारिभाषिकशब्दानामपि समुल्लेखः कालिदासकाव्येषु प्राप्यते। कविना कालिदासेनाऽष्टाङ्गयोगस्य परिचयः काव्येषु यत्र तत्र प्रत्तः। भगवता पतञ्जलिना यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यान- समाधयोऽष्टौ योगाङ्गानि प्रोक्तानि।[5] महाकविकालिदासस्य काव्येषु योगशास्त्रस्य विषयास्तदङ्गानि चाऽधोलिखितसन्दर्भेषु द्रष्टुं शक्यन्ते-

**1. यमनियमाः-**

अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहाः पञ्च यमा भवन्ति। यथोक्तम्-

**अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः।**[6]

एतेषां पञ्च यमानां पालनं रघुवंशीया राजानः कुर्वन्त्येव। एवमेव 'शौचसन्तोषतपःस्वाध्यायेश्वर- प्रणिधानानि नियमाः'[7] इति कथनेन पञ्च शौचादयो नियमा अपि रघुवंशजातैर्नृपैर्निषेविता एव। रघुंवशकाव्ये प्रारम्भ एव स कथयति- **त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्**[8] **आजन्मशुद्धानाम्**[9]**, शैशवेऽभ्यस्तविद्यानाम्**[10]**, वार्द्धके मुनिवृत्तीनाम्**[11] इत्यादिकथनैः कालिदासस्य सम्यक् प्रमाणीभवति यद् योगाङ्गानां यमनियमानां पालयितारो राजानो बभूवुः। 'योगश्चित्तवृत्तिनिरोधः'[12] इति योगसूत्रानुसारेण चित्तवृत्तीनां निरोध एव योगो भवितुमर्हति। तत्र नृपाणां मुनिवृत्तीनामिति कथनाच्चित्तवृत्तिनिरोधत्वमप्यत्र पर्यवस्यति। एवं यमनियमौ योगाङ्गौ कालिदासः सम्यक् जानातीति प्रमाणीभवति।

**2. आसनम्-**

योगस्य तृतीयमङ्गमासनमिति कथ्यते। योगसूत्रे खल्वासनस्य परिभाषां कुर्वन् पतञ्जलिः कथयति- 'स्थिरसुखमासनम्।'[13] येन योगी सुखपूर्वकं स्थिरत्वं लभते तदेवाऽऽसनमित्युच्यते। कालिदासेन दिलीपस्य गोसेवाप्रसङ्गे राज्ञो दिलीपस्याऽऽसनबन्धः समुदलेखि- 'निषेदुषीमासनबन्धधीरः'[14]। अथ च कुमारसम्भव- महाकाव्ये भगवतः शिवस्य प्रसङ्गे 'पर्यङ्कबन्धः' इति शब्दः कालिदासेन समुल्लिखितः-

**पर्यङ्कबन्धस्थिरपूर्वकायम्, ऋज्वायतं सन्नमितोभयांसम्।**
**उत्तानपाणिद्वयसन्निवेशात्, प्रफुल्लराजीवमिवाङ्कमध्ये।।**[15]

श्लोकस्याऽस्य श्रीमल्लिनाथकृतायां सञ्जीविनीटीकायां पर्यङ्कबन्धस्याऽर्थो वीरासनमित्युक्तम्। तत्रैव वीरासनविषये महर्षेर्वसिष्ठस्य मतं समुद्धृतम्-

''वीरासने वसिष्ठः-

**एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम्।**
**इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम्।।** इति।।''[16]

कालिदासो न केवलं पर्यङ्कबन्धं विजानाति, अपितु वीरासनस्योल्लेखमपि कृतवान् रघुवंशे। तत्र वृक्षा अपि वातेन कम्परहिता योगेऽधिष्ठिताः शोभां प्रापुः-

**वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्या।**
**निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि।।**[17]

आचार्येण मल्लिनाथेनाऽत्र वीरासनशब्दस्याऽर्थः कृतो जयसाधनमिति। अत्रापि पूर्वोक्तकुमारसम्भवश्लोके पर्यङ्कबन्धसन्दर्भे या वीरासनस्य परिभाषा समुल्लिखिता सैवाऽत्रापि श्लोके समुद्धृता।[18] कुमारसम्भवश्लोके पर्यङ्कबन्धविषये मल्लिनाथेन योगसारग्रन्थाल्लक्षणमिदं प्रोक्तम्-

**उत्तानिते करतले करमुत्तानितं परम्।**
**आदायाङ्कगतं कृत्वा ध्यायेद् यस्तस्य सोऽन्तरम्।।**[19]

रघुवंशे 13/52श्लोके टीकाकृता वल्लभेन चतुर्वर्गचिन्तामणिग्रन्थाद् वीरासनस्य लक्षणमेवमवोचि-

**''चतुर्वर्गचिन्तामणौ तु व्रताङ्गभूतनियमप्रशंसायां गरुडपुराणे-**
**उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि।**
**एतद्वीरासनं प्रोक्तं महापातकनाशनम्।।**
**अन्यच्च- अङ्गुष्ठाग्रैरूर्ध्वबाहुभिः सूर्यावलोकनं वीरासनम्।''**[20]

परन्तु पर्यङ्कबन्धवीरासनयोर्भेदत्वं वरीवर्त्ति। व्यासभाष्ये वीरासनं पर्यङ्कबन्धश्च पृथक्त्वेन समुद्धृतौ स्तः- ''तद् यथा पद्मासनं वीरासनं स्वास्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्च निपदनं............।''[21]

वी. पी. काणेमहोदयेनाऽपि पर्यङ्कबन्धस्याऽर्थो वीरासनमिति न विहितम्।[22] मल्लिनाथकृतः पर्यङ्कबन्धस्याऽर्थो वीरासनमिति भ्रममेवोत्पादयति तदुदाहृतवसिष्ठयोगसारस्थलक्षणयोर्भेदत्वात्। परन्तु योगवार्त्तिके प्रोक्तं यद् वीरासनमेव पर्यङ्कबन्ध इति। एतदेवाऽर्द्धपद्मासनमपि कथ्यते।[23] पद्मासनस्य समुल्लेखो महाकविना कुमारसम्भवे कृत एव- 'पद्मासनस्थाय पितामहाय'।[24] इत्थं दृश्यते यद् योगासनानां समुल्लेखः कालिदासेन स्वकाव्येषु नितरां विहितः।

**3. प्राणायामः प्रत्याहारश्च-**

प्राणायामस्य कथनं साक्षात्तत्र काव्येषु न प्राप्यते। परन्तु प्राणायामप्रक्रियायाः समुल्लेखो रघुवंशे समुपलभ्यते-

**अनयत् प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरात्।**
**अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्।।**[25]

अत्र राजा रघुः प्राणायामस्याऽभ्यासबलेन प्राणादीन् पञ्चमरुतो वशमनयत्। चित्तेन साकं यदा खल्विन्द्रियाणां व्यापारनिरोधो जायते तर्हि प्रत्याहारस्य सिद्धिर्भवति।[26] महाकविः कालिदासो राज्ञोऽतिथेर्व्यापारं वर्णयन् कथयामास यत् स राजा स्वचित्तव्यापारकर्मसु रतो भूत्वा तत्रेन्द्रियाणां कर्माणि निरोधयामास ततः स शत्रुभूतानीन्द्रियाणि प्रहरन् चित्तस्य व्यापाररूपं रन्ध्रमावृणोत्-

**परकर्मापहः सोऽभूदुद्यतः स्वेषु कर्मसु।**
**आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन् रिपून्।।**[27]

कुमारसम्भवेऽपि कालिदासेन लिखितं यदन्तश्चराणां वायूनां निरोधोऽभूदित्यनेनाऽपि प्राणायामप्रत्याहारप्रक्रियाया निर्देशो विहितः-

**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम्।।**[28]

इत्थं कालिदासेन प्राणायामप्रत्याहारयोर्योगाङ्गयोर्वर्णनं व्यधायि।

**4. धारणा ध्यानञ्च-**

महर्षिणा पतञ्जलिना योगसूत्रेऽवोचि- 'देशबन्धस्य चित्तस्य धारणा।'[29] अस्य तात्पर्यं वर्तते यद् हृदयादिषु देशेषु चित्तस्य बन्धो विधीयते चेत्सा प्रोच्यते धारणा। कालिदासेन रघुवंशेऽलेखि यद् भूपतिरजः प्रजानां सम्यगवलोकनाय व्यवहारासनमङ्गीचकाराऽपरश्च वृद्धो राजा रघुः कुशपवित्रमासनं धारणामुपांशुसमभ्यसितुमलञ्चक्रे-

**नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।**
**परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्।।**[30]

अत्र टीकाकारेणाऽऽचार्यमल्लिनाथेन धारणाशब्दस्याऽर्थस्पष्टीकरणार्थं वसिष्ठस्य मतमेवं व्यलेखि-

**यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि।**
**धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः।।** इति वसिष्ठः।[31]

कश्चिद् योगी यमनियमादियुक्त आत्मनि मनः स्थिरीकरोति साऽवस्था धारणा कथ्यते। यद्यपि पतञ्जलिवसिष्ठयोर्धारणालक्षणस्य भिन्नत्वादपि तत्त्वतो नास्ति कश्चिद् भेद इति। नाभिचक्रादिषु देशेषु चित्तवृत्तेरेकाग्रताप्राप्तिरेव ध्यानं कथ्यते।[32] कुमारसम्भवे कामविषयकं भगवतः शिवस्य ध्यानास्पदत्वं कविनैवं वर्णितम्-

**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश।**[33]

स भगवान् शिवो नासिकाग्रे ध्यानमाकार्षीत्। तत्समये नेत्रपक्ष्ममालैः स्पन्दरहितैरधोमयूखैर्नासिका लक्ष्यीकृता-

**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्षीकृतघ्राणमधोमयूखैः।।**[34]

श्रीमद्भगवद्गीतायामपि नासिकाग्रे ध्यानस्योल्लेखो विहितः।[35] योगसूत्रे प्रणिधानशब्दस्य समुल्लेखः जायते। एष प्रणिधानशब्दः कालिदासेनाऽनेकत्र प्रयुक्तः। बाह्यजगतो ज्ञानेन रहितः सन् योगी यदाऽऽत्मध्यानं करोति तदा एषा ध्यानक्रिया प्रणिधानशब्देन समुच्यते। यदा राजा दिलीपो वसिष्ठं मुनिं प्रति जगाम तदा राज्ञः सन्ततिस्तम्भकारणं ज्ञातुं महर्षिर्वसिष्ठो ध्यानं व्यधात्। एवं ध्यानेन प्रणिधानावस्थां प्राप्य स भावितात्मा राज्ञो दिलीपस्य सन्ततिबन्धकारणत्वं ज्ञातवान्-

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः।।**
**सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम्।**
**भवितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत्।।**[36]

प्रणिधानशब्दस्योल्लेखो रघुवंशे[37]ऽन्यत्रापि दृश्यते। रघुवंशे यदा सीता वने रामेण विसृष्टा सती वाल्मीकिमुनेः पार्श्वे गतवती तर्हि मुनिः प्रणिधानमाध्यमेनैव ज्ञातवान् यदेषा मिथ्यापवादक्षुभितेन पत्या रामेण परित्यक्ता वर्तते-

**जाने विसृष्टां प्रणिधानतस्त्वां, मिथ्यापवादक्षुभितेन भर्त्रा।**[38]

महाकविना कालिदासेन ध्यानशब्दस्य प्रयोगः कुमारसम्भवे विहितः-

**ब्रह्मध्यानपरैर्योगपरैर्ब्रह्मासनस्थितैः।**
**योगनिद्रागतैर्योगपट्टबन्धैरुपाश्रिताम्।।**[39]

अत्र ध्यानशब्दो योगनिद्रा, योगपट्टबन्धश्च योगशास्त्रीयाः पारिभाषिकशब्दा वर्तन्ते। योगनिद्रायाः समुल्लेखो रघुवंशे लभ्यते। कालिदासो व्यलेखि यद् भगवान् विष्णुर्निर्मलाभिः पवित्राभिर्दृष्टिभिर्भृग्वादीनृषीननुगृह्णाति स्म-

**योगनिद्रान्तविशदैः पावनैरवलोकनैः।**
**भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन्।।**[40]

योगनिद्रा का भवति? इत्यपेक्षायां समुच्यते यद् यदा योगी हस्ताभ्यां पृष्ठं पादाभ्याञ्च कण्ठं वेष्टयेत्ततः पृष्ठकण्ठयोर्मध्ये शयनं कुर्यात् तर्हि भवत्येषा योगनिद्रा, यथोक्तम्-

**पादाभ्यां वेष्टयेत् कण्ठं हस्ताभ्यां पृष्ठबन्धनम्।**
**तन्मध्ये शयनं कुर्याद् योगनिद्रा सुखप्रदा।।**[41]

एवं महाकविः कालिदासो योगशास्त्रेऽङ्गभूतयोर्धारणाध्यानयोर्वर्णनं सुष्ठु व्यधात्। एतस्मिन्नेव प्रसङ्गे स योगनिद्रामपि वर्णयामास। योगनिद्रा प्रणिधानञ्च ध्यानस्यैव भेदरूपत्वेन स्वीकर्तुं शक्ये।

**5. समाधिः-**

योगसूत्रे लिखितं यद् यदा विद्यमानमपि ध्यानं ध्येयरूपेण भासते न ध्यानरूपत्वेन तदवस्थितिरेव समाधिः कथ्यते-

**तदेवाऽर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः।**[42]

कालिदासो योगसमाधिरिति शब्दं प्रयुक्तवान् रघुवंशे। योगसमाधिना नृपो रघुः कानिचिद् वर्षाणि व्यतीत्य परमव्ययं पदं मोक्षमवाप-

**अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः।**
**तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः॥**[43]

अनेन योगसमाधिना मोक्षप्राप्तिरपि भवतीति कालिदासः सम्यग् जानाति स्म। समाधिविषये महाकविः कालिदासः पतञ्जलेः 'प्रसङ्ख्याना'ख्यस्य शब्दस्य प्रयोगं विदधाति। चित्तवशीकृतां कृते कदाचिदपि विघ्नाः समाधि भञ्जने समर्था न भवन्ति। अत्र कुमारसम्भवे प्रोक्तं यद् भगवतश्शिवस्य समाधिर्दृढतमाऽऽसीद् यतो हि वसन्तकालेऽप्सरसां गीतमाधुर्यश्रवणेऽपि शिवः प्रसङ्ख्यानपरो भूत्वाऽऽत्मानुसन्धानं न तत्याज-

**श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्, हरः प्रसङ्ख्यानपरो बभूव।**
**आत्मेश्वराणां न हि जातु विघ्नाः, समाधिभेदप्रभवो भवन्ति॥**[44]

समाधिकृतामेव साऽवस्था वर्तते यस्यां चेतांसि न विक्रियन्ते। अत एव त एव धीरपुरुषा भवन्ति।[45] कुमारसम्भवेऽन्यत्रापि कालिदासः समाधिपदस्य प्रयोगं करोति।[46] परमात्मदर्शनं, योगविधिं, स्थिरधीरत्वञ्चेति शब्दाः कालिदासस्य योगशास्त्रीयं ज्ञानं प्रमाणीकुर्वन्ति-

**न च योगविधिर्नवेतरः स्थिरधीरापरमात्मदर्शनात्॥**[47]

कुमारसम्भवे लिखितं यत् कपालनेत्रान्तरमार्गे ज्योतिषां प्ररोहो वर्तते, तैः सुषुम्नामार्गगतैर्ज्योतिः प्ररोहैर्ब्रह्मरन्ध्रं शिरस्तो वाऽवभासते, यथोक्तम्-

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिः प्ररोहैरुदितैः शिरस्तः॥**[48]

शरीरस्य नवद्वारैरिन्द्रियाणां वृत्तिनिरोधं विधाय योगी समाधिवश्यं मनः स्वहृदये संस्थाप्य स्वात्मानं स्वस्मिन् आत्मनि पश्यति यमक्षरं ब्रह्मस्वरूपं क्षेत्रविदो जानन्ति। भगवतश्शिवस्य समाधिरित्थं वर्ण्यते कालिदासेन-

**मनो नवद्वारनिषिद्धवृत्ति, हृदि व्यवस्थाप्य समाधिवश्यम्।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम्॥**[49]

श्रीमद्भगवद्गीतायामपि लिखितं यच्छरीरस्य नवद्वाराणि नविच्छद्ररूपाणि वा भवन्ति येभ्यो संसारविषयरागैः सह मनसः सम्पर्को भवति।[50] अभ्यासवैराग्याभ्यां मनसो वशीकरणं विदधाति योगी। कालिदासः कथयति यदभ्यासनिगृहीतेन मनसा योगिनो हृदयाश्रितं ज्योतिर्मयं ब्रह्म विचिन्वन्ति।[51] एवमेव रघुवंशेऽन्यत्रापि योगस्य चर्चा विहिता वर्तते।[52] कालिदासस्य योगशास्त्रज्ञताऽनेन प्रमाणपदवीमुपगच्छतीति नाऽत्र संशीतिः।

**संयमो योगसिद्धयश्च-**

योगसूत्रे लिखितमस्ति यद् धारणाध्यानसमाधीनामेतेषां त्रयाणां समुदाय एकत्र संयमनाम्ना प्रथितो वर्तते- 'त्रयमेकत्र संयमः'[53]। योगशास्त्रे विभिन्नदेशेषु संयमकरणेऽनेकविधं फलं समुदितम्। योगसूत्रे विलिखितं यत् सूर्ये संयमश्चेद् योगिना क्रियते तर्हि भुवनज्ञानं भवितुमर्हति।[54] एतत्संयमविषये कालिदासः कथयति यत् पार्वती भगवन्तं शिवमाराधयितुमनन्यदृष्टिः सती सूर्यमेवाऽपश्यत्-

**शुचौ चतुर्णां ज्वलतां हविर्भुजां, शुचिस्मिता मध्यगता सुमध्यमा।**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत॥**[55]

एवमत्र पार्वती सूर्ये संयमं विधाय भगवन्तं शङ्करं स्वाभीष्टं प्राप्तवतीति न कश्चिदवकाशः सन्देहस्य। पार्वत्याऽत्र भुवनज्ञानं प्राप्यैव स्वपतिः शिवोऽवापि भुवनज्ञानाभावाच्छङ्करस्याऽप्राप्तेः। एवमेव कालिदासेन रघुवंशेऽपि व्यलेखि यत् सीता सूर्ये निविष्टदृष्टिः सती तपश्चकार। सीतायाः संयमकरणे द्वे फले महाकविना कालिदासेन कथिते- जन्मान्तरेऽपि रामभर्तृत्वप्राप्ती रामाऽविप्रयोगोऽवाप्तिश्चेति। यथोक्तम्-

**साऽहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।**
**भूयो यथा मे जननान्तरेऽपि, त्वमेव भर्त्ता न च विप्रयोगः॥**[56]

तपस्यायां लीनः सुतीक्ष्णर्षिरपि भानुनिविष्टदृष्टिः सन् संयमं चकार।[57] एवं महाकविः कालिदासो योगशास्त्रस्य संयमं सम्यग् जानाति स्म। एतस्य समुल्लेखस्तेन कुमारसम्भवरघुवंशयोरुभयोरपि काव्ययोर्विहितः। योगसूत्रस्य विभूतिपादे पतञ्जलिना बह्वीनां सिद्धीनामुल्लेखः कृतः।[58] कविः कालिदासोऽपि योगसिद्धिं सुष्ठु जानाति स्म। महर्षिभूतस्याऽत्रेस्तपःसाधनभूतं वनं योगबलेनैवोदग्रतरप्रभावं प्राप।[59] कालिदासो रघुवंशेऽलिखित् यद् अयोध्यापुर्या अधिष्ठात्री देवी यदा रामपुत्रं कुशं प्रति सावरणेऽपि गेहे प्राप्तवती तर्हि स कुशोऽवादीत्-

लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो न च लक्ष्यते ते।
विभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम्।[60]

अनेन ज्ञायते यद् योगसिद्धिप्रभावेण योगी कपाटार्गलावृतेऽपि गृहे प्रवेशं कर्तुं क्षमो भवति। पुत्रनामधेयः कश्चिद् राजा जैमिनेर्योगविद्यामधिगम्य जन्मरहितोऽभूत्-

तस्मात्स योगादधिगम्य योग-
मजन्मनेऽकल्पत जन्मभीरुः।[61]

कुमारसम्भवेऽपि लिखितं यद् योगाभ्यासेन योगी स्वान्तःकरणे परमात्मसंज्ञं ब्रह्म दृखा तज्ज्योतिषि स्वात्मानं संल्लीनं विदधाति।[62] एवं योगस्याऽनेकाः सिद्धयः सन्ति। कालिदासेन संयमभूतानामेतासां सिद्धीनां स्वकाव्येषु समुल्लेखो विहितः। न केवलं योगशब्दस्य कालिदासकाव्येषु समुल्लेखः प्राप्यतेऽपितु पातञ्जलयोगसूत्रे पारिभाषिकशब्दानां प्रयोगोऽपि तेनाऽकारि। तपस्याविधानेऽपि योगस्य प्रभावः परिलक्ष्यतेऽत्र। शोधदृष्ट्या यदि सूक्ष्मतयाऽवलोक्यते तर्हि कालिदासकाव्यगतेष्वनेकेषु पद्येषु योगविषयकं गूढरहस्यं निक्षिप्तं वरीवर्ति। महामहोपाध्यायः पी. वी. काणेमहोदयः स्वीकरोति यत् कालिदासो रघुवंशादिकाव्येषु योगस्य वर्णनं व्यधात्।[63] अनेन कालिदासस्य योगशास्त्रज्ञता प्रमाणपदवीमवतरति। महाकविः कालिदासो निश्चप्रचमेव योगशास्त्रस्य सम्यग् ज्ञाताऽऽसीत् येन योगविद्यामणीन् स्वकाव्यमालायां सुष्ठु सङ्ग्रन्थ्य योगशास्त्रं समलङ्कृतमिति।

**सन्दर्भसङ्केतः-**

1. रघुवंशे, 1/8.
2. तत्रैव, 8/17.
3. तत्रैव, 8/24.
4. तत्रैव, 8/26.
5. 'यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि।' -योगसूत्रे, 2/29.
6. योगसूत्रे, 2/30.
7. तत्रैव, 2/32.
8. रघुवंशे, 1/6.
9. तत्रैव, 1/5.
10. तत्रैव, 1/8.
11. तत्रैव, 1/8.
12. योगसूत्रे, 1/2.
13. तत्रैव, 2/46.
14. रघुवंशे, 2/6.
15. कुमारसम्भवे, 3/45.
16. कुमारसम्भवे, 3/45 मल्लिनाथविहितायां सञ्जीविनीटीकायाम्।
17. रघुवंशे, 13/52.
18. कुमारसम्भवे, 3/45 श्लोके सञ्जीविनीटीकायाम्।
19. तत्रैव, सञ्जीविनीटीकायाम्।
20. रघुवंशे, 13/52 श्लोके वल्लभकृतायां टीकायाम्।
21. कुमारसम्भवे 3/45 श्लोकस्य मल्लिनाथकृतटीकायाम्।
22. हर्षचरिते (पी. वी. काणे संस्करणे- 1973) पृ.सं.-47.
23. योगवार्त्तिके, 2/46.
24. कुमारसम्भवे, 7/86.
25. रघुवंशे 8/19.
26. योगसूत्रे, 2/54.
27. रघुवंशे, 17/61.

28. कुमारसम्भवे, 3/48.
29. योगसूत्रे, 3/1.
30. रघुवंशे, 8/18.
31. रघुवंशे, 8/18श्लोकस्य मल्लिनाथकृतटीकायाम्।
32. तत्र प्रत्ययैकतानता ध्यानम् - योगसूत्रे, 3/2.
33. कुमारसम्भवे, 3/43.
34. कुमारसम्भवे, 3/47.
35. श्रीमद्भगवद्गीतायाम्, 6/13.
36. रघुवंशे, 1/73-74.
37. रघुवंशे, 8/19.
38. रघुवंशे, 14/72.
39. कुमारसम्भवे, 10/46.
40. रघुवंशे, 10/14.
41. हठरत्नावल्याम्, 3/69.
42. योगसूत्रे, 3/3.
43. रघुवंशे, 8/24.
44. कुमारसम्भवे, 3/40.
45. प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने।
    विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।। (-कुमारसम्भवम्, 1/59)
46. कुमारसम्भवे, 5/6,
47. अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत्।। (-कुमारसम्भवम्, 5/45)
48. कुमारसम्भवे, 3/49.
49. तत्रैव, 3/50.
50. श्रीमद्भगवद्गीतायाम्, 5/13, 8/12.
51. अभ्यासनिगृहीतेन मनसा हृदयाश्रयम्।
    ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये।। (-रघुवंशे, 10/23)
52. रघुवंशे, 13/6.
53. योगसूत्रे, 3/4.
54. योगसूत्रे, 3/26.
55. कुमारसम्भवे, 5/20.
56. रघुवंशे, 14/66.
57. दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते। (-रघुवंशे, 13/44)
58. योगसूत्रे, द्रष्टव्यो विभूतिपादः।
59. वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम्। (-रघुवंशे, 13/50)
60. रघुवंशे, 16/7.
61. रघुवंशे, 18/33.
62. योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम। (-कुमारसम्भवे, 3/58)
63. धर्मशास्त्र का इतिहास (पञ्चम भाग), पृ.सं.-299.

■ पत्रसङ्केतः- पूर्वाऽध्यक्षः, संस्कृतप्राकृतभाषाविभागे, लखनऊविश्वविद्यालये, लखनऊ,
78-ए, बादशाहबाग, लखनऊविश्वविद्यालयपरिसरः, लखनऊ-07.

# साहित्योपजीव्यं व्याकरणम्

■ प्रो. भारतभूषणत्रिपाठी

वाक्यार्थज्ञाने पदार्थज्ञानं कारणं भवति। तत्र आदौ कस्तावद् साहित्यपदार्थः कश्च व्याकरणपदार्थः इति यथाक्रमं विचार्यते।

हितेन सह = सहितं, सहितस्य भावः साहित्यम्। अत्र हितशब्दः लाक्षणिकः अथवा "अर्शादिभ्योऽच्" इत्यनेन अर्शाद्यजन्तो वा। लक्षणया हितशब्दार्थः कान्तासम्मितोपदेशपरः।

अथवा हितशब्देन परमानन्दरूपो रसः गृह्यते तेन सह = सहितम्, सहितस्य भावः साहित्यम्।

अथवा सहितं च सहितं च सहिते तयोर्भावो साहित्यम्। अत्र द्वौ सहितशब्दौ वर्तेते। एकसहितशब्दस्य अर्थः शब्देन सह अर्थः सहितः, द्वितीयः सहितशब्दार्थः अर्थेन सह शब्दः सहितः। अर्थात् उभाभ्याम् सहितशब्दाभ्याम् अर्थवान् शब्दः शब्दमान् अर्थ इति ज्ञायते। अनया व्युत्पत्त्या शब्दार्थयोः तादात्म्यं ज्ञायते एवंविधशब्दार्थयोः तादात्म्यं सहितशब्दार्थः तस्य भावः साहित्यम्।

व्याकरणशास्त्रे साहित्यन्नाम एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्नेऽन्वयः इत्यस्यैवापरनाम सहविवक्षा। साहित्यपदं संयोग-संसर्ग-सम्पर्क-योग-बन्ध-समवाय-तादात्म्यादि समनाम सर्वत्रैव प्राप्यते। पञ्चमी साहित्यविद्या। सा हि चतसृणामपि विद्यानां निस्यन्दः (सारस्वती सुषमा, साहित्यसम्प्रदाय, ज्ये.मा.पू., 2034वि.)।

व्याकरणशब्दार्थः विविच्यते- व्याक्रियन्ते व्युत्पाद्यन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक् क्रियन्ते येन तद् व्याकरणम्। असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिप्रयोजकनियमविशेषव्याकरणपदार्थः (-सारस्वतीसुषमा, प्रो. रामयत्नशुक्लः, पृ.सं.-197, मार्ग.फा.पू., 2033वि.)।

तत्र जिज्ञासोदेति यत् किं नाम साधुत्वम्? मञ्जूषायामुक्तम्- साधुत्वञ्च व्याकरणव्यङ्ग्योऽर्थविशिष्ट-शब्दनिष्ठपुण्यजनकतावच्छेदको जातिविशेषः। अनेन ज्ञायते यत् शब्दस्य साधुत्वज्ञानं व्याकरणेन जायते तस्मान् व्याकरणं साधुशब्दस्य निर्वचनं करोति। अत एव, व्याकरणशास्त्रस्य किं प्रयोजनमिति जिज्ञासायां महाभाष्यकारेण महाभाष्यस्यादौ निरूपितम्-

व्याकरणशास्त्रस्य मुख्यप्रयोजनम् वर्तते- "अथ शब्दानुशासनम्" (-व्याकरणमहाभाष्यम्, पश्पशाह्निक, प्रदीपटीका) अर्थात् शब्दशास्त्रनिरूपणम् एव अस्य प्रयोजनम्। सर्वशब्दमयं जगत्। शब्दस्य महत्त्वविषये काव्यादर्शे लिखितम्-

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते॥** (-काव्यादर्शः, कारिका-4)

शब्दप्रयोगस्य महत्क्षेत्रं वर्तते। महाभाष्यकारेणोक्तं- "महान् शब्दस्य प्रयोगविषयः सप्तद्वीपा वसुमती त्रयो लोकाः चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्नाः एकशतमध्वर्युशाखा, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः वाक्योवाक्यम्, इतिहासः पुराणम्, वैद्यमित्येतावान्छब्दस्य प्रयोगविषयः।" प्रदीपकारेण वाक्योवाक्यमित्यस्यार्थः कृतः उक्तिप्रत्युक्तिरूपो ग्रन्थः। इतिहासशब्दार्थः पूर्वचरितसङ्कीर्तनम्। पुराणं वंशाद्यनुकीर्तनम्। रहस्यम्- उपनिषत्शास्त्रम्, स्मृतयः। वैद्यकम्- चरकादिप्रणीतशास्त्रम्, ज्योतिषशास्त्रञ्च। (-व्याकरणमहाभाष्यम्, पश्पशाह्निक, प्रदीपटीका)

स च शब्दः अस्माभिः कथं प्रयुज्यते इति तस्य प्रयोगविषयस्य विविधाः पक्षाः वर्तन्ते। यथा सूत्रशैल्या, परिष्कारशैल्या, गद्यशैल्या, काव्यशैल्या अस्माभिः शब्दाः प्रयुज्यन्ते। कश्चन आचार्य एवं निरूपयति- "शब्दस्य प्रयोगः गद्यपद्यभेदेन द्विधा वर्तते। गद्यशैली दार्शनिकी, काव्यशैली, सङ्करशैली भेदात् त्रिधा वर्तते।" (-सारस्वतीसुषमा, पृसं-164, मार्च-1977)

दार्शनिकी शैली व्याकरणादिशास्त्राणां चर्चा। काव्यशैली माधुर्यादिगुणविशिष्टरसादिसमन्विता या गद्यशैली सा काव्यशैली यथा व्यासादिरचिता। सङ्करशैली- शाङ्करवाक्यं सरसं सरलं गम्भीरतमं भवति। इयं मिश्रशैली इत्यपि उच्यते।

शब्दस्य महत्त्वविषये आचार्यैर्दण्डिभिरुच्यते-

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।।** (-काव्यादर्श:, कारिका-3)

शिष्टैरनुशिष्टा इति शिष्टानुशिष्टा: तेषां शिष्टानुशिष्टानाम्, प्रकृतिप्रत्ययादिव्युत्पादितानाम् (काव्यादर्श:)। शिष्टानां प्रचलितानां वाचामेव कृपया लोकानाम् व्यवहार: प्रवर्तते।

भर्तृहरिणाप्युक्तम्-

**न सोऽस्ति प्रत्ययो लोके य: शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।** (-वाक्यपदीयम्, 1/123)

सर्वं ज्ञानं शब्दानुविद्धं, नास्ति एतादृश: कश्चन प्रत्यय:(ज्ञानं) य: शब्दं विना स्यात्। अत एव भर्तृहरिणोक्तम्-

**शब्देष्वाश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी।**
**यन्नेत्र: प्रतिभात्मायं भेदरूप: प्रतीयते।।** (-वाक्यपदीयम्, 1/118)
**वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाश: प्रकाशेत सा हि प्रत्यवमर्शिनी।।** (-वाक्यपदीयम्, 1/124)

साहित्यशास्त्रे व्याकरणशास्त्रेण अनुशिष्यमाण: स एव शब्द: काव्यस्य शरीरभूतं वर्तते। यथा दण्डिनोक्तम्-

**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।**

काव्यस्य शरीरं तावद् वाच्य-लक्ष्य-व्यङ्ग्यार्थविभूषिततिङन्तसुबन्तपदानां समूह:। तस्मात् निश्चीयते यत् काव्यस्य आधारभूतं तत्त्वं वर्तते व्याकरणम्। यस्मिन् आधारे अस्य निर्मिति: जायते, तत्तत्त्वं व्याकरणशास्त्रमेव विद्यते। व्याकरणसाहित्य-शास्त्रयोरस्ति आधाराधेयभावसम्बन्ध:। व्याकरणशास्त्रेण शब्दव्युत्पत्ति: क्रियते चेत् साहित्यशास्त्रं तं निष्पद्यमानशब्दम् अलङ्कारादिभि: अलङ्कृत्य प्रयोगं कुरुते।

तस्मात् पण्डितराजजगन्नाथेनोक्तम्- "रमणीयार्थप्रतिपादक: शब्द: काव्यम्"। (रसगङ्गाधर:) काव्यस्य शरीरं तु शब्दात्मकं वर्तते। इतोप्यधिकं जगदेव शब्दात्मकं वर्तते। स्फोटरूपात्मकं जगत् इति वचनात्। श्रुति: वदति- 'नामरूपे व्याकरवाणि'। तत्र नामपदेन स्फोटात्मक: शब्द: गृह्यते। रूपपदेन अर्थ: गृह्यते। स्फोटपदेन शब्द: कथं गृह्यते तत्र व्युत्पत्ति: क्रियते- 'स्फुटति बोधविषयो भवति अर्थ: यस्मात् इति स्फोट: शब्द:'। स्फोटपदेन शब्दात्मकं ब्रह्म इत्यपि गृह्यते। तस्य व्युत्पत्ति: क्रियते- 'स्फुटति अर्थो जगद्रूपो यस्मात् स: स्फोट:' अर्थात् शब्दात्मकं ब्रह्म स्फोट: तत: जगत् स्फुटति। अत एव, व्याकरणदर्शनस्य आराध्यं शब्दब्रह्म वर्तते। अत एवोच्यते अभ्युदय: तस्य भवति यै: व्याकरणशास्त्रानुसारिपरिनिष्ठित-शब्दानां प्रयोग: क्रियते। तथा चोक्तं भाष्यकारेण- "शास्त्रपूर्वकप्रयोगेऽभ्युदय:"। (व्याकरणमहाभाष्यम्, पस्पशाह्निकम्)

शास्त्रप्रक्रियापूर्वकशब्दप्रयोगस्य विषय: साहित्यशास्त्रं वर्तते, य: शब्द: सम्यक् प्रयुङ्क्ते स: शब्दादेव सर्वं लभते। अत एवोक्तम्- "एक: शब्द: सम्यक्ज्ञात: शास्त्रान्वित: सुप्रयुक्त: स्वर्गे लोके च कामधुक् भवति।" साहित्यशास्त्रेऽपि निरूपितं यत्काव्यं च्युतसंस्कृतिदोषरहितं स्यात् इति निरूपयति कविश्रेष्ठ: कालिदास:-

**पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता:।**
**बभूव कृतसंस्कारा चरितार्थैव भारती।।** (-रघुवंशम्, 10/36)

कुमारसम्भवेऽपि लिखितम्- 'संस्कारवत्येव गिरा मनीषी' (कुमारसम्भवम्, 1/27)। व्याकरणादि-शास्त्रसमन्विता परिष्कृता एव मनीषीणां वाक् स्यात्। शास्त्रज्ञैरुच्यते यत् परिनिष्ठितशब्द: प्रयोक्तव्य:। किन्नाम परिनिष्ठितत्त्वं तत्र शेखरकारेणोक्तम्- 'परिनिष्ठितत्त्वं नाम अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्त्वम्'। कालिदासेनोक्तम्-

**द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन।।** (-कुमारसम्भवम्, 7/90)

संस्कारश्च यथाव्याकरणं स्यात्। विषयेऽस्मिन् वाक्यपदीयकारेणोच्यते यत्-

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृति:।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्।।** (-वाक्यपदीयम्, 1/142)

साहित्यशास्त्रं व्याकरणशास्त्रस्य पिच्छभूतम् इति आचार्यैः अभाणि- "व्याकरणस्य पिच्छभूतमिदं साहित्यशास्त्रम्"। विषयेऽस्मिन् भट्टिकारेणापि व्यलेखि-

**दीपतुल्यप्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।**
**हस्तामर्श इवान्धानां भवेद् व्याकरणादृते॥** (-भट्टिकाव्यम्)

तत्र जयमङ्गलकारेणोक्तम्- "यदधीतव्याकरणशास्त्रस्यैवात्राधिकारः।" साहित्यं व्याकरणशास्त्रमूलकम् इति साहित्यशास्त्रज्ञैः स्वयमेव निगद्यते। तत्र ध्वनिवादिभिः आचार्यैरुच्यते यत्- "प्रथमे हि विद्वान्सो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्य- वाचकसम्मिश्रः: शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः।" इत्यत्र तन्मतानुसारिभिः इति वचनात् ज्ञायते साहित्यशास्त्रस्य व्याकरणशास्त्रमुपजीव्यम् वर्तते। उपजीवयति असौ उपजीव्यः, उपजीव्यन्नाम कारणम्। साहित्यशास्त्रम् उपजीवकमस्ति। उपजीवकन्नाम कार्यम्(आश्रितम्)। अत एव व्याकरणसाहित्ययोरस्ति उपजीव्योपजीवकभाव- सम्बन्धः। व्याकरणसाहित्यशास्त्रयोरस्ति सिद्धान्तेषु साम्यम्। व्याकरणशास्त्रे शब्दार्थयोरस्ति तादात्म्यम्। तत्र मञ्जूषायां लिखितम्- "शब्दार्थयोस्तादात्म्यादेव 'श्लोकं शृणोतु' अथ अर्थं वदति इत्यादि व्यवहारः। 'ओमित्येकाक्षरं ब्रह्म' 'रामेति द्वयक्षरं नाम मानभङ्गः पिनाकिनः' 'वृद्धिरादैच् इति शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगाश्च'।" विषयेऽस्मिन् कविकालिदासोऽपि रघुवंशस्य आदिमे सर्गे लिखति-

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥** (-रघुवंशम्, 1/1)

तथैव आचार्यमम्मट आह उत्तमकाव्यलक्षणे- "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः।" इदमिति काव्यं बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मता-नुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य। (-काव्यप्रकाशः, प्रथमोल्लासः)

आचार्यैः मम्मटैः निरूप्यते यत् ध्वनिशब्दः यः व्यङ्ग्यार्थे व्यञ्जकार्थे व्यञ्जनाव्यापारे वा प्रयुक्तः साहित्यशास्त्रे सः अस्माभिः अपूर्वः न प्रयुक्तः। अपितु बुधैः वैयाकरणैः अर्थेऽस्मिन् ध्वनिशब्दः आदौ प्रायुङ्क्तः। तत्र श्रोतृहृदयस्थितस्फोटरूपव्यङ्ग्यस्य वक्तुः कण्ठताल्वाद्यभिघातजन्यवैखरीरूपध्वनिः व्यञ्जकः इति। सन्दर्भेऽस्मिन् ध्वनिः व्यञ्जकत्वेन प्रयुक्तः। स्फोटश्च ध्वनेः व्यङ्ग्यः भवति। अतः स्फोटध्वन्योः व्यङ्ग्यव्यञ्जकभावसम्बन्धः विषयेऽस्मिन् भर्तृहरिणोक्तम्-

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते॥** (-वाक्यपदीयम्, 1/44)

शब्दस्वरूपनिरूपणप्रसङ्गे भाष्यकारेणापि पस्पशाह्निके व्यलेखि- "यत् येनोच्चारितेन........" (व्याकरणमहाभाष्यम्, पस्पशाह्निकम्) इति स्फोटात्मकशब्दस्य लक्षणं कृतम्। अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः इति ध्वन्यात्मकशब्दस्य लक्षणं कृतम्। साहित्यशास्त्रे ध्वनिशब्देन व्यङ्ग्यार्थः गृह्यते। तत्र बहुषु स्थलेषु 'ध्वन्यते' इति शब्दः प्रयुज्यते। तस्य अर्थः व्यङ्ग्यत्वेन प्रतीयते। व्याकरणशास्त्रेऽपि व्यञ्जनावृत्तेः महत्त्वपूर्णं स्थानं विद्यते। व्यञ्जनावृत्तिः संस्कारविशेषः इति। एषा लक्षणावृत्तितः भिन्ना। शक्यार्थस्य बाधः अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या उभयविधानुपपत्त्या वा। सर्वविधमुख्यार्थबाधनिरपेक्षबोधजनकः प्रसिद्धार्थबोधकः अप्रसिद्धार्थबोधको वा शक्यार्थेन सह सम्बद्धः असम्बद्धो वा अर्थः तद्विषयकः प्रतिभया उद्बुद्ध अर्थविषयकः संस्कारविशेषः व्यञ्जना। तत्र नागेशभट्टेनोक्तम्- "मुख्यार्थबाधनिरपेक्षबोधजनकोमुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिमाद्युद्बुद्धसंस्कारविशेषो व्यञ्जना।" (-परमलघुमञ्जूषा, व्यञ्जनानिरूपणम्)

व्यञ्जकशब्दस्य अपरपर्यायः द्योतकः। द्योत्यस्य अपरपर्यायः व्यङ्ग्यः भवति। व्याकरणदर्शने निपाताः चादयः द्योतकाः। तथैव प्रत्ययविषये मतद्वयं वर्तते प्रत्ययाः द्योतकाः वाचकाः वा। तत्र लघुशब्देन्दुशेखरे निरूपितम्- "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" (-ल.श.शे., का.प्र.)। व्यञ्जना शब्दनिष्ठा अर्थनिष्ठा च उभयथा भवति। शाब्दी व्यञ्जना द्विविधा भवति- अभिधामूला व्यञ्जना लक्षणामूला व्यञ्जना च। अर्थनिष्ठा व्यञ्जनायाः प्रमाणे इयं कारिका उद्धृता वर्तते-

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा॥**

व्यञ्जनावृत्तिस्तु व्याकरणशास्त्रे स्तम्भभूता वर्तते। बहवः शाब्दिकसिद्धान्ताः इमां वृत्तिमाश्रित्य प्रकल्पिताः। व्याकरणदर्शनस्य यत् मूलभूतं तत्त्वं 'स्फोट' इति नाम्ना प्रसिद्धं तत् शब्दतत्त्वं ध्वनिनिष्ठव्यञ्जनावृत्तिद्वारा अभिव्यक्तं भवति। ध्वनिः तस्य व्यञ्जको भवति।

श्रीमता मम्मटेन काव्यकारणप्रसङ्गे शक्तिः निपुणता अभ्यासः इति कारणत्रयं प्रत्यपादि। तन्मध्ये शक्तेः स्वरूपं न्यरूपि शक्तिः कवित्वबीजरूपसंस्कारविशेषः। को नाम संस्कारः? संस्क्रियते विशिष्टकार्यभाजनी क्रियते प्रमाणेनेति संस्कारः। को नाम विशेषः? स एव संस्कारः विशिष्यते विशेषः। (-का.प्र., दीपिकाटीका) तत्र नागेशेन प्रतिपादितव्यञ्जनायाः स्वरूपे मम्मटेन प्रतिपादितकाव्यकारणीभूतस्य शक्तेः स्वरूपे साम्यं दृश्यते। तथैव लक्षणा विषये उभयोः शास्त्रोरस्ति साम्यम्।

लक्षणाविषये काव्यप्रकाशस्य कारिकायां लिखितम्-

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्यार्थ लक्ष्यते यत्सा लक्षणारोपिता क्रिया॥**

अस्यां कारिकायां क्रियाशब्दस्य अर्थः शक्तिः वर्तते। तस्मात् लक्षणाऽऽरोपिता क्रिया इत्यस्य अर्थः भवति लक्षणाऽऽरोपिता शक्तिः वर्तते। व्याकरणदर्शनेऽपि शक्तेः द्वैविध्यं कृतम्- प्रसिद्धा शक्तिः अप्रसिद्धा शक्तिश्च। अप्रसिद्धा शक्तिरेव आरोपिता शक्तिः वर्तते। लक्षणानिरूपणप्रसङ्गे उक्तम्- "शक्यतावच्छेदकारोपो लक्षणा" इति। एवं विचार्यमाणे विषयेऽस्मिन् साहित्यव्याकरणशास्त्रयोरस्ति साम्यम्। प्रसङ्गवशात् लक्षणाविषये यथाशास्त्रं किञ्चिन्निरूप्यते। लक्षणायाः भेदद्वयं वर्तते- जहत्स्वार्था अजहत्स्वार्था च। 'जहत्स्वार्था' इत्यस्य व्युत्पत्तिर्भवति जहति (परित्यजन्ति) स्वानि (पदानि) यं (अर्थम्) सः जहत्स्वः (अर्थः) जहत्स्वः अर्थः यस्याः (लक्षणायाः) सा जहत्स्वार्था लक्षणा। जहत् शब्दः शतृप्रत्ययन्तशब्दः। जहत्स्वार्थलक्षणायाः उदाहरणम्- गां पाठय। अत्र गो शब्दार्थः पशुविशेषः तस्य शक्यार्थस्य पठनक्रियायामन्वयाभावात् गोगतजाड्यादिधर्मान् आदाय गोरूपमुख्यार्थं परित्यज्य वाहीकरूपार्थः गृह्यते। एषा लक्षणा जहत्स्वार्था लक्षणा। स्वार्थसंवलित- परार्थाभिधायिका अजहत्स्वार्थलक्षणा भवति (परमलघुमञ्जषा)। यथा- कुन्तान् प्रवेशय, छत्रिणो यान्ति, काकेभ्यो दधिरक्ष्यताम्।

एका अन्यापि लक्षणा वर्तते। तस्याः नाम जहद्-अजहद्-लक्षणा। अस्याः कल्पना नैयायिकैः वेदान्तिभिः क्रियते। अस्याः व्युत्पत्तिर्भवति जहति अजहति च पदानि स्वार्थान् यस्यां सा जहदजहल्लक्षणा। अस्यां लक्षणायां शब्दः स्वशक्यार्थं पूर्णतया न त्यजति कञ्चिद् अर्थं गृह्णाति। यथा- ग्रामो दग्धः। पटो दग्धः। अत्र ग्रामपदार्थः सम्पूर्णः ग्रामः वर्तते तत्र केषाञ्चिद् गृहाणां दग्धेऽपि केचन गृहाः अवशिष्टाः अदग्धः भवति तथापि अस्माभिः व्यवह्रियते ग्रामो दग्धः।

एका लक्षितलक्षणा- स्वबोध्य पदवाच्यत्वम्। यथा- द्विरेफ इत्यत्र द्वौ रकारौ विद्येते यत्र सः द्विरेफः तत्र द्विरेफपदं लक्षणया भ्रमरपदस्य बोधकं भवति। पुनः भ्रमरपदस्य लक्षितस्य भृङ्गार्थे लक्षणा क्रियते। अतः लक्षितलक्षणायाः समासः द्विधा भवति, लक्षिते लक्षणा लक्षितलक्षणा अथवा लक्षितस्य लक्षणा इति। नैयायिकाः लक्षितलक्षणायाः अन्तर्भावं जहल्लक्षणायाम् कुर्वन्ति।

न्यायसिद्धान्तावल्याम् उक्तम्- "अत्र द्विरेफादिपदे रेफद्वयसम्बन्धी भ्रमरपदे ज्ञायते। भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते, इति तत्र लक्षितलक्षणा जहल्लक्षणा एव इति नव्यनैयायिकाः।"

**सन्दर्भग्रन्थाः-**


1. परमलघुमञ्जूषा।
2. वैयाकरणभूषणसारः।
3. व्याकरणमहाभाष्यम्।
4. लघुशब्देन्दुशेखरः।
5. काव्यप्रकाशः।
6. ध्वन्यालोकः।
7. काव्यादर्शः।


■ पत्रसङ्केतः- आचार्यः विभागाध्यक्षश्च, व्याकरणविभागः, राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), लखनऊपरिसरः, लखनऊ।

# आतङ्कवादनिर्मूलने रामायणम्

■ प्रो. रहसविहारीद्विवेदी

उर्व्यामुत्थितवामलूरवलभीप्राप्तप्रबोधप्रधीः,
क्रौञ्चद्वन्द्ववियोगदुःख-करुणाक्लिन्नः शपन् काव्यकृत्।
श्रीरामे रचयाञ्चकार परमं काव्यं महच्चादिमं
राष्ट्रातङ्कनिवारणे भरतभूसत्संस्कृतौ प्रेरकम्॥
श्रीरामः श्रुतिपालने प्रतिनिधिश्चादर्शरूपः सुतः,
भ्राता, वीरयुवा, पतिश्च नृपतिर्मित्रं च राष्ट्रप्रियः।
राष्ट्रातङ्ककरान् विराधसदृशान् हत्वा मृधे राक्षसान्
लङ्कातङ्कप्रशिक्षकं प्रशमितुं सेतुं चकारोदधौ॥
आसीदाश्विनशुक्लपक्षदशमी लङ्केशमृत्योस्तिथिः,
सैवाद्यापि जयोत्सवाय कलिता लोकप्रिया भारते।
राष्ट्रश्रीर्जनकात्मजाऽनुजयुतो रामो ह्यमायां तिथौ
चायातो जनतन्त्रमत्र ववृधे दीपावलिर्दिद्युते॥

रामायणं भारतीयाचारव्यवहारयोः परम्पराया यथार्थं स्वरूपं प्रस्तौति। अस्मिन् सत्यप्रतिज्ञत्वं, दण्डेन धर्मरक्षणम्, शरणागतसंरक्षणम्, पातिव्रत्यं, मातृभक्तिः, पितृभक्तिः, राष्ट्रभक्तिः, लोकानुरञ्जनम्, राष्ट्रसंस्कृतिद्रोहिणां विध्वंसनम्, आतङ्कवादनिर्मूलनम्-प्रभृतीनि वर्णनानि प्रेरणाप्रदानि सन्ति। रामायणस्य साहित्यिकं सांस्कृतिकं चाऽध्ययनं बहुधा कृतमस्ति, किन्त्वातङ्कवादविषये विचारो न कृतः। इयं कालजयिनी रचना-

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति॥

अभ्युक्तिरियं यथार्था विद्यते। अद्यातङ्कवादस्य ग्रासः समग्रमपि विश्वं दृश्यते। अतो रामायणतः कीदृशी प्रेरणाऽऽतङ्कवादनिर्मूलनस्य प्राप्यते, विचारोऽयं साधु प्रतीयते। रामायणं किमपि पूर्वसिद्धं प्रसिद्धं लक्षणमलक्ष्यीकृत्य प्रणीतं तथाप्यादर्शीभूतम्। वैदिके वाङ्मये यद्- **आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी जायताम्, सत्यं वद धर्मं चर** प्रभृतिनिरूपणं प्राप्यते, तस्य सिद्धान्तस्य प्रायोगिकं रूपं रामायणे वाल्मीकिना प्रस्तुतीकृतम्। तपः स्वाध्यायनिरतं वाग्विदां वरं मुनिपुङ्गवं प्रति तपस्विन आदिकवेर्वाल्मीकेः समीहितकाव्यनायकप्रस्तावे भारतीयायाः संस्कृतेः श्रुतिस्मृतिविहितोदात्तमानवगुणानामेवोल्लेखोऽस्ति। तद्यथा-

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कस्यैकप्रियदर्शनः॥
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे॥ (-वा.रा.बा., 1/1-4)

भारतीयायां जीवनपद्धतौ अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुरिति प्रवृत्तिः स्वीकृताऽऽसीत्। भवभूतिनाऽपि व्यलेखि-

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति॥ (-उ.रा., 2/7)

एवमेव जनकल्याणमुद्दिश्य प्राणोपमायाः प्रियाया अपि परित्यागं कर्तुं समर्थो रामः-

स्नेहं दयां च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।। (-उ.रा., 1/12)

एवं रामायणाश्रितेषु दृश्यश्रव्यकाव्येषु रामस्य जनकल्याणभावना, भारतराष्ट्रस्य जगतो वा सज्जनानां कृते सर्वत्र निभाल्यते। रामायणे रामः ऋषीणां समक्षमातङ्कवादिनां रक्षसां वधस्य प्रतिज्ञां करोति। रामस्तया प्रतिज्ञया सीतामवगतां कर्तुं वक्ति-

**संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम्।**
**मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा।।**
**अप्यहं जीवितं जह्यां त्वां वा सीते! सलक्ष्मणाम्।**
**न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः।।**
**तदवश्यं मया कार्यमृषीणां परिपालनम्।**
**अनुक्तेनापि वैदेहि! प्रतिज्ञाय कथं पुनः।।** (-वा.रा., अरण्य., 10/17-19)

आतङ्कवादस्य निर्मूलनं रामावतारस्य हेतुः। भारतीयायां परम्परायां विश्वासोऽयं बद्धमूलो यद्- आतङ्कवादो भवत्वथवाऽन्यं किञ्चिद् दुःखं विपत्तिर्वा सर्वविधकष्टनिवारणे प्रभुः समर्थः। तथ्यमिदं रामायणेऽपि प्रतिफलितम्। रामायणस्य बालकाण्डस्य पञ्चदशे षोडशे च सर्गयोस्तथ्यमिदमुखावितम्। दशरथस्य पुत्रेष्टिकार्यक्रमे सर्वेषां देवानां गन्धर्वाणां सिद्धानामावाहनं क्रियते। सर्वे समागत्य ब्रह्माणं कथयन्ति- 'भवतो वरदानेन रावणे लोकत्रयमुद्वेजयति'-

**उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः।**
**शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति।।**
**ऋषीन् यक्षान् सगन्धर्वान् ब्राह्मणानसुराँस्तदा।**
**अतिक्रामति दुर्धर्षो वरदानेन मोहितः।।**
**नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः।**
**चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते।।** (-वा.रा., बा. 15/6-10)

ब्रह्मा सर्वैः सह विष्णुं गत्वा तं निवेदितवान् यद्- भवान् दशरथस्य पुत्ररूपेण मानवजन्म गृह्णातु रावणं च हन्तु। तद्यथा-

**तमुद्धतं रावणमुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम्।**
**विरावणं साधुतपस्विकण्टकं तपस्विनामुद्धर तं भयावहम्।।**
**तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम्।**
**स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम्।।** (-वा.रा., बा. 15/33-34)

ब्रह्माऽऽतङ्कवादिनमातङ्कसञ्चालकं च रावणं तन्निर्देशेन चर्षिमुनीनीं हत्यां यज्ञविध्वंसं च कुर्वतो राक्षसान् समूलं हन्तुं देवान् विष्णोः (जन्मग्रहणानन्तरं रामस्य) सहायार्थं शक्तिमतां बुद्धिमतां वानराणां सर्जनाय प्रेरयति-

**सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः।**
**विष्णोः सहायान् बलिनः सृजध्वं कामरूपिणः।।**
**मायाविदश्च शूराश्च वायुवेगसमाजवे।**
**नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान्।।**
**असंहार्यानुपायज्ञान् दिव्यसंहननान्वितान्।**
**सर्वास्त्रगुणसम्पन्नानमृतप्रशनानिव।।**
**अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च।**
**यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च।।**
**किन्नरीणां च गात्रेषु वानरीणां तनुषु च।**
**सृजध्वं हरिरूपेण पुत्राँस्तुल्यपराक्रमान्।।** (-वा.रा., बा.का., 17/2-6)

परिणामतो विष्णोः (रामस्य) सहायतायै धरायां वने पर्वते समुद्रतटे च सर्वत्र महापराक्रमिणो वानरा ऋक्षाश्चाभूवन-

**तैरियं पृथ्वी सूरैः सपर्वतवनार्णवा।**
**कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः।।**
**तैर्मेधवृन्दाचलकूटसन्निभैर्महाबलैर्वानरयूथपाधिपैः।**
**बभूव भूर्मीमशरीररूपैः समावृता रामसहायहेतोः।।** (-वा.रा., बा.का., 17/36-37)

अत्रोद्धृतैः पद्यैः सुस्पष्टमेतद् यन्महर्षेर्वाल्मीकेरादिकाव्यस्य भूमिका आतङ्कवादनिर्मूलनभावनया समन्विताऽस्ति।

अवताराणामवधारणा भारतीयायां संस्कृतावास्थावतां सर्वात्मना ग्राह्या। यज्ञेषु देवानामावाहनं तेषामागमनं तैश्च यज्ञकर्तुर्मनोवाञ्छिता सिद्धिर्भारतीयानां श्रद्धाभरितो विश्वासः। येषां भारतीयायामास्थायां विश्वासो नास्ति तेषां कृते भारतीयानि कर्मकाण्डीयानि विधानानि देवानां च कथावर्णनादीनि कपोलकल्पितानि प्रतीयन्ते। तद्दिनं दूरं नास्ति यदा भारतीयायाः संस्कृतेराराधनापद्धति-योग-ध्यान-संस्कार-यज्ञादिविधानेषु समग्रस्य विश्वस्यास्था भविष्यति।

विश्वामित्रस्य यज्ञरक्षा प्रसङ्गे वनवासावधौ च लङ्कातो भारते समागतानां प्रमुखाणामातङ्कवादिनां रामलक्ष्मणाभ्यां विनाशः कृतः। ततश्चदेशेऽवशिष्टानां रक्षसां वधार्थं चतुर्दिक्षु सुग्रीवसहायतया वानराः प्रेषिताः। आतङ्कस्य सञ्चालकं रावणं तत्प्रशिक्षणकेन्द्रं च नाशितुं मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठं हनूमन्तं गगनमार्गेण सम्प्रेष्य प्रथमं लङ्कां प्रविश्य रावणोऽन्ये च तत्सहायका प्रमुखा राक्षसाः हताः। आश्विनशुक्लपक्षे दशम्यां तिथौ रावणो मृतः। एतेन अस्मिन्नेव दिने भारते प्रतिवर्षं विजयदशमी समारोह आराष्ट्रं भवति। वस्तुतः प्राचीनोऽयं स्वतन्त्रतादिवसः। दीपावलीपर्व वस्तुतः प्राचीनं गणतन्त्रदिवसपर्व विद्यते। यतो ह्येतस्माद् दिवसाद् रामागमनत्वात् रामराज्यं भवति।

विमानयात्रायां रामः सीतां रक्षसाम् (आतङ्कवादिनां) वधस्थलं प्रतिपादयन् वक्ति-

**एतदायोधनं पश्य मांसशोणितकर्दमम्।**
**हरीणां राक्षसानां च सीते विशसनं महत्।।**
**एष दत्तवरः शेते प्रमाथी राक्षसेश्वरः।**
**तव हेतोः विशालाक्षि! निहतो रावणो मया।।**
**कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः**
**धूम्राक्षश्चात्र निहतो वानरेण हनूमता।।**
**विद्युन्माली हतश्चात्र सुषेणेन महात्मना।**
**लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे।।**
**अङ्गदेनाऽत्र निहतो विकटो नाम राक्षसः।**
**विरूपाक्षश्च दुष्प्रेक्ष्यो महापार्श्वमहोदरौ।।**
**अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः।**
**त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ।।**
**युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरावुभौ।**
**निकुम्भश्चैव कुम्भश्च कुम्भकर्णात्मजौ बली।।**
**वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः।**
**मकराक्षश्च दुर्धर्षो मया युधि निपातितः।।**
**अकम्पनश्च निहतः शोणिताक्षश्च वीर्यवान्।**
**यूपाक्षश्च प्रजङ्घश्च निहतौ तु महाहवे।।**
**विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः।**
**यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः।।**
**सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथा परः।।** (-वा.रा., लङ्का.का., 123/4-14)

एवं लङ्कायां हताः प्रमुखा राक्षसाः। भारतभूमौ विराधकबन्धादीनां वधं, भारतीयान् युवकान् स्वरूपपाशेन प्रणयप्रस्तावेन च मोहयन्त्या शूर्पणखाया नासिकाकर्णोच्छेदनं तु विदितमेव। सेतुं दर्शयन् रामः सीतां वक्ति-

**एतत् तु दृश्यते तीर्थं सागरस्य महात्मनः।**

**सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम्।।**
**एतत् पवित्रं परमं महापातकनाशनम्।।** (-वा.रा., लङ्का.का., 123/20-21)

वस्तुतो भारतस्य विजयसेतुरयं तीर्थरूपेण विद्यते। अद्य रामायणदिशा आतङ्कवादस्य समाप्तये प्रथमं तु राष्ट्रे प्रविष्टानामातङ्कवादिनां वधं कृत्वा ततो यत्र एतेषां प्रशिक्षणं भवति तत्रत्यं प्रशिक्षणं केन्द्रं विध्वंसनीयम्। आतङ्कसञ्चालकोऽपि रावणवद् बध्य एव।

श्रीरामस्य जन्मनो, विश्वामित्रयज्ञरक्षायै तेन साकं गमनस्य, पुनः वनवासयात्रायाश्च प्रसङ्गेषु प्रायशः राक्षसानां (आतङ्कवादिनां वा) वधः परं प्रयोजनं प्रतीयते। जन्मनः प्रसङ्गस्तु पूर्वं निर्दिष्टः। तेन रावणादिवध एव जन्मप्रयोजनमिति सुस्पष्टम्। रामलक्ष्मणयोः शैशववर्णने मुहुर्मुहुः- **धनुर्वेदे च निरतः, धनुर्वेदे च निष्ठितः** प्रभृतिपङ्क्तयः प्राप्यन्ते।

पूर्वं लिखितं यत् प्रशिक्षिता आतङ्कवादिनो भारते रावणेन प्रेषिताः, तथ्यमिदं विश्वामित्रकथनेन स्फुटीभवति-

**अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ।**
**तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ।।**
**व्रते तु बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ।**
**मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ।।**
**तौ मांसरुधिरौघेण वेदिं तामभ्यवर्षताम्।**
**अवधूते तथाभूते तस्मिन् नियमनिश्चये।।**
**कृतश्रमो निरुत्साहस्तस्माद् देशादपक्रमे।**
**न च मे क्रोधमुत्सृष्टं बुद्धिर्भवति पार्थिव।।**
**तथाभूता हि सा चर्या न शापस्तत्र मुच्यते।**
**स्वपुत्रं राजशार्दूल! रामं सत्यपराक्रमम्।।**
**काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हति।**
**शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा।।**
**राक्षसा ये विकर्तारस्तेषामपि विनाशने।**
**श्रेयश्चास्मै प्रदास्यापि बहुरूपं न संशयः।।**
**त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति।**
**न च तौ राममासाद्य शक्तौ स्थातुं कथञ्चन।।**(-वा.रा., बा.का., 21/4-11)

विश्वामित्रकथनं श्रुत्वा राक्षसातङ्कमुक्तये दशरथः स्वपुत्रौ रामलक्ष्मणौ प्रेषयति। अग्रिमे वर्णने विश्वामित्रः रामलक्ष्मणाभ्यां बलातिबले विद्ये प्रददाति। (बाल.का., 22सर्गे) येन तावतिशयपराक्रमशालिनौ सर्वबाधामुक्तौ च भवतः। रामः धर्मशास्त्रे स्त्रीवधं निषिद्धं मत्वा ताडकां न हन्ति किन्तु विश्वामित्रादेशेन पुरुषादिनी महायक्षिणी विकृतानना वध्येति कृत्वा तस्या वधं करोति। रामो ज्ञानिनां गवाञ्च रक्षार्थमेवं करोति-

**गोब्राह्मणहितार्थाय देशस्य च हिताय च।**
**तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः।।** (वा.रा., बा.का., 26/5)

रामस्यानेन कार्येण प्रसन्नः सन् विश्वामित्रः तस्मै परमशक्तिशालीनि शस्त्राणि-अस्त्राणि च प्रयच्छति। (1/17/4-24) एवं शक्तिसम्पन्नः सन् रामो लक्ष्मणेन सह सद्यज्ञरक्षां करोति। रामो मुहुर्मुहू रक्षसां हननस्य स्वं निश्चयं वक्ति-

**इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः।**
**राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान्।।** (-वा.रा., बा.का., 30/2)

विश्वामित्रः स्वस्मादाश्रमादातङ्कवादसमाप्तौ वदति-

**अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः। निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत्।।**
**कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया। सिद्धाश्रममिदं सत्यं कृतं वीर! महायशः।।**
(-वा.रा., बा.का., 30/24-25)

श्रीरामस्य वीरतायाः प्रसङ्गोऽयोनिजाया भूसुतायाः सीतायाः स्वयंवरेऽस्ति यत्र शिवधनुर्भङ्गस्तत्क्रोधेन च परशुरामप्रदत्ते वैष्णवे धनुषि शरयोजने तस्य प्रभुता प्रमाणिता भवति। अत्रापि रामस्य सामर्थ्यं सिद्धं भवति-

**तदेव वैष्णवं राम! पितृपैतामहं महत्। क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुसत्तमम्॥**
**योजयस्व धनुःश्रेष्ठे शरं परपुरञ्जयम्।यदि शक्तोऽसि काकुत्स्थ! द्वन्द्वं दास्यामि ते ततः॥**
(-वा.रा., बा.का., 75/27-28)

श्रीरामेण वैष्णवे धनुषि शरयोजनेन प्रसन्नः सन् परशुरामस्तस्मै तद्धनुः प्रददाति तं प्रति मङ्गलकामनां च कुरुते- **धनुषोऽस्य परामर्शात् स्वस्ति तेऽस्तु परन्तप!** (बाल. 76/17) एवं परशुरामादपि रामाय शस्त्रोपलब्धिर्भवति।

रामस्य वनगमनसमयेऽपि विविधरूपेण तद्विजयाय सत्कामना कृता यथा सुमन्त्रो वदति-

**सोमसूर्यौ च काकुत्स्थ! शिववैष्णववानपि।**
**वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते॥** (-वा.रा., अयो.का., 15/22)

अयोध्याकाण्डस्य सम्पूर्णं पञ्चदशसर्गं रामाय कौसल्याया आशीर्वाद एवमस्ति-

**यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च।**
**स वै नरशार्दूल! धर्मस्त्वामभिरक्षतु॥**
**येभ्यः प्रणमसे पुत्र! देवेष्वायतनेषु च।**
**ते च त्वामभिरक्षन्तु वने सह महर्षिभिः॥**
**यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता।**
**तानि त्वामभिरक्षन्तु गुणैः समुदितैः सदा॥**
**राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम्।**
**क्रव्यादीनां च सर्वेषां मा भूत्पुत्रक! ते भयम्॥** (-अयो.का., 25/3, 6, 9, 17)

तान्त्रिकप्रयोगेणापि रामस्य विजयकामना कौसल्यया क्रियते-

**ओषधिं च सुसिद्धार्थां विशल्यकरणीं शुभाम्।**
**चकार रक्षां कौसल्या मन्त्रैरभिजजाप च॥** (-अयो.का., 25/38)

अन्ततः सा रामस्य सानन्दं वनवासावधिं प्रपूर्यागमनस्य कामनां करोति-

**अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम्।**
**पश्यामि त्वां सुखं वत्स! सन्धितं राजवर्मत्सु॥**
**प्रनष्टदुःखसङ्कल्पा हर्षविद्योतिताननना।**
**द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम्॥** (-अयो.का., 25/41-42)

एतेन सिद्धं भवति यत् कौसल्या जानाति यद् रामस्य आतङ्ककारिभिः सङ्घर्षो भविष्यति। अत एव तान् समाप्य परावर्तनस्य कामनां करोति। एवमेव रामो लक्ष्मणेन सह सर्वात्मना युद्धाय सन्नद्धो भूत्वा सर्वविधं शस्त्रादिकं गृहीत्वैव वनं याति। लक्ष्मणो वक्ति-

**धनुरादाय सगुणं खनित्रपिटकाधरः।**
**अग्रतस्ते गमिष्यामि पन्थानं तव दर्शयन्॥** (-अयो.का., 22/25)

रामोऽपि लक्ष्मणं वक्ति-

**अभेद्ये कवचे दिव्ये तूणीराक्षयसायकौ।**
**आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ॥**
**सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि।** (-अयो.का., 30/31)

एवं भारतराष्ट्रस्य धरायां प्रविष्टानामातङ्कवादिनां समूलं समाप्तिरेव श्रीरामस्य महदुद्देश्यं प्रतीयते। अत एव अस्त्रशस्त्रादिभिः सज्जितः सन् रामो वनयात्रायां प्रस्थितः। प्रस्थानावसरे राष्ट्रस्य सुखशान्तिं चाभिलक्ष्य स्वपितरं दशरथं रामो वक्ति-

**मया विसृष्टां भरतो महीमिमां सशैलखण्डां सपुरोपकाननाम्।**
**शिवासु सीमास्वनुशास्तु केवलं त्वया यदुक्तं नृपते! तथास्तु तत्॥** (-अयो.का., 31/56)

सर्वकामान्, राज्यं, मैथिलीं चाचिन्त्यन् रामः सत्यनिष्ठः सन् राष्ट्रातङ्कमुक्तिमेव वाञ्छति-

**तदद्य नैवानघराज्यमव्ययं, न सर्वकामान् वसुधां न मैथिलीम्।**
**न चिन्तितं त्वामनृतेन योजयन्, वृणीय सत्यं व्रतमस्तु ते सदा॥** (-अयो.का., 34/58)

सुमित्राऽपि जानाति यत्पुत्रौ सङ्घर्षाय गच्छतः, अतः स्वौरसं पुत्रं लक्ष्मणमुपदिशति–

**इदं हि वृत्तमुचितं कुलस्यास्य सनातनम्।**
**दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च॥**
**रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।**
**अयोध्यामटवीं विद्धि गच्छ तात्! यथासुखम्॥** (–अयो.का., 24/7, 9)

पुत्र आतङ्कसमाप्तये मृत्योरपि न विभेतु, इत्येवं सुमित्रा प्रेरयति।

वनवासे चित्रकूटानन्तरं मुनिभिः ऋषिभिश्च राक्षसानां क्रूरकृत्यानां ज्ञानं भवति–

**रावणावरजः कश्चित् खरो नामेह राक्षसः।**
**उत्पाट्य तापसान् सर्वान् जनस्थाननिवासिनः॥**
**धृष्टश्च जितकाशी च नृशंसः पुरुषादकः।**
**अवलिप्तश्च पापश्च त्वां च तात! न मृष्यते॥**
**दर्शयन्ति हि वीभत्सैः क्रूरैर्भीषणकैरपि।**
**नानारूपैर्विरूपैश्च रूपैरसुखदर्शनैः॥** (–अयो.का., 117/11, 12, 14)

अनसूयया सीतायै दिव्याभरणप्रदानानन्तरं पुनः ऋषयो रामं रक्षसां दुष्कृत्यं श्रावयन्ति।

**रक्षांसि पुरुषादीनि नानारूपाणि राघव।**
**वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः॥**
**उच्छिष्टं वा प्रमत्तं वा तापसं ब्रह्मचारिणम्।**
**अदन्त्यस्मिन् महारण्ये तान् निवारय राघव॥** (–अयो.का., 119/19, 20)

एवं श्रुत्वा निर्भयं रामो रक्षसां वधाय दण्डकारण्ये प्रविशति। सीताऽपि रामं राक्षसवधप्रतिज्ञां स्मारयति–

**प्रतिज्ञातस्त्वया वीर! दण्डकारण्यवासिनाम्।**
**ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम्॥**

राम उत्तरयति–

**किं नु वक्ष्याम्यहं देवि! त्वयैवोक्तमिदं वचः।**
**क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति॥**
**अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।**
**न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः॥** (–अरण्य., 10/3, 19)

अरण्यकाण्डतो युद्धकाण्डं यावदातङ्ककारिणां रक्षसां वधस्यैव प्रामुख्येन वर्णनमस्ति। दूषण–त्रिशिरः–खर–विराध–कबन्धादिवधानन्तरं भारतभुवः प्रतीकीभूतायाः सीताया हरणं रावणेन क्रियते। सीताऽन्वेषणे हनूमतो माध्यमेन रामसुग्रीवयोर्मैत्री भवति। सीताया अपहरणं रावणेन कृतमिति जटायुना ज्ञातमस्ति तथापि क्वचिद्भारतभूमौ चेद् राक्षसा अवशिष्टा सन्तु तेषां वधार्थं चतुर्दिक्षुः वानराः प्रेष्यन्ते। हनूमाँश्च लङ्कां प्रेष्यते तत्र गत्वा स लङ्कां ज्वालयति। वस्तुतो वर्तमानयुद्धक्रमोऽपि प्रथमं गगनमार्गीयमाक्रमणं भवति तदा भूमार्गीयम्, भूमार्गेणाभियानार्थं सागरे सेतुनिर्माणं भवति। युद्धकाण्डे द्वाविंशे सर्गे सेतुनिर्माणवर्णनं विद्यते। एवं भूमिमार्गेण रामस्य सेना लङ्कां प्रविशति तत्र कुम्भकर्णमेघनादादीनां वधं भवति। यस्मिन् दिने आतङ्कप्रमुखो रावणो रामेण हतः तदाऽऽश्विनशुक्लदशमीतिथिरासीत् तत एव भारते विजयपर्वरूपेण विजयदशमी (दशपापहरा/दशहरा) सोत्साहं राष्ट्रियैर्जनैरायोज्यते त्रेतायुगादारभ्य पर्वेदमद्यापि आराष्ट्रमायोज्यते। दीपावल्यां तिथौ राष्ट्रलक्ष्या सीतया सार्द्धं रामः स्वकीयां राजधानीमयोध्यां समागतः। तदागमनेन सहैव लोकतन्त्रं प्रतिष्ठितं जातम्। अतः दीपावलीतिथिः प्राचीना गणतन्त्रतिथिः। अद्याराष्ट्रं लक्ष्म्याः स्वागतार्थं गृहाणि सज्ज्यन्ते दीपाश्च दीप्यन्ते।

उक्तेन विवेचनेन सुस्पष्टमेतद् यद्वाल्मीकिरामायणीयेन नायकेन श्रीरामेणातङ्कवादनिर्मूलनस्य सकलः प्रयासः कृतः। एतेन रामायणम् अद्यापि साम्प्रतिकं प्रासङ्गिकं च वरीवर्ति।

■ पत्रसङ्केतः– पूर्व–आचार्याध्यक्षः, जाबालिपुरस्थरानीदुर्गावती विश्वविद्यालयस्य संस्कृताध्ययनमण्डलस्य,
615, समदड़िया ग्रीन सिटी, माढ़ोताल, जबलपुर–482002।

# ध्वनेरनुमानान्तर्भावने परावाक्प्रणमनस्यौचित्यम्

■ डॉ. नारायणन् इ. आर.

॥ मङ्गलाचरणम् ॥

**शब्दार्थप्रभवः समस्तजगतामुत्साहदाता स्वयं**
**सिन्दूरारुणवारणाननवरो भक्तार्तिसंच्छेदनः।**
**शुण्डाग्रोद्धृतमोदकस्त्रिणयनः पद्मासने संस्थितः**
**पायान्नो गिरिजासुतो सुवरदो दिव्यैकदन्तो विभुः॥**

॥ विषयावतरणम् ॥

कश्मीरदेशवास्तव्यस्य श्रीधैर्यसुतस्य श्यामलशिष्यस्य राजानकस्य महिमभट्टस्य सुप्रसिद्धोऽलङ्कारग्रन्थो व्यक्तिविवेको नाम। स विमर्शत्रयेण विभक्तः। तत्र व्यक्तिविवेककरणधिया लक्ष्यसिद्ध्यर्थं माङ्गलिकेन पद्येन परावाक्प्रणमनं करोति यथा-

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥1/1॥** इति।

अत्र महिमा परां वाचं प्रणम्य सर्वस्य ध्वनेरनुमान एवान्तर्भावं प्रकाशयितुं व्यक्तिविवेकं कुरुत इत्यन्वयः। महिमन्निति पृथ्वादिभ्य इमनिज्वा (अष्टाध्यायी- 5/1/122) इतीमनिजन्तः। परां वाचं वाग्रूपां सरस्वतीम्। सा च पदार्थानां सारभूता विमर्शस्वरूपा परमार्थचमत्कृतिः। सर्वस्यापि प्रकारस्य ध्वनेः प्रतीयमानार्थप्रधानस्य काव्यात्मनः प्रतिज्ञाहेतूदाहरणोपनयनिगमन-रूपेऽनुमानेऽन्तर्भावप्रकाशनत्वमेव महिमभट्टस्य लक्ष्यम्। उक्तं च महिमभट्टेन व्यक्तिविवेके प्रथमे विमर्शे-

**वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।**
**सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥1/25॥** इति।

तत्पौर्वकालिकं वाक्प्रणमनं लक्ष्यप्राप्तौ वाग्देवतानुग्रहोपायभूतः। उक्तं च दण्डिना-

**न विद्यते यद्यपि पूर्ववासना-**
**गुणानिबन्धिप्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता**
**ध्रुवं करोत्येव कमप्यनुग्रहम्॥** इति। (-काव्यादर्शः, 1/104)

अपि चोक्तं महिम्नैव यथा व्यक्तिविवेके-

**सैवानुमितिपक्षे नो गमकत्वेन सम्मता।**
**अन्यतोऽन्यस्य हि ज्ञानमनुमैकसमाश्रयम्॥3/31॥**
**वाच्यवाचकयोः स्वार्थप्राधान्यप्रतिषेधतः।**
**ध्वनेः शक्त्यन्तराभावाद् व्यक्तेश्चानुपपत्तितः॥3/32॥**
**प्राणभूताः ध्वनेर्व्यक्तिरिति सैव विवेचिता।**
**यत्त्वन्यत्तत्र विमतिः प्रायो नास्तीत्युपेक्षितम्॥3/33॥** इति।

व्यक्तेर्व्यञ्जनास्वरूपस्य विवेको विवेचनं सजातीयत्वविजातीयत्वाभ्यां स्वबोधप्रकाशनेन परबुद्धिमण्डले तत्त्वावबोधनक्रियानुकूलत्वम्। पराशक्त्यादयः सर्वकामदाश्च नवशक्तयो विवेकक्रियास्वनुकूलतामाचरेयुरिति परावाक्प्रणमनं पूर्वम्। तत्परायणां प्रणम्येति क्रमः। तदाह शङ्करो भगवान्-

**परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा।**

**अमोघा विद्युता चेति शक्तयः सर्वकामदाः॥** इति।(-श्रीप्रपञ्चसारतन्त्रम्, 3/37)

पृ पालनपूरणयोरित्यतः पिपर्तौ कर्त्रर्थे ऋदोरपि टापि च परेति रूपम्। उक्तं च-

**स्वरूपज्योतिरेवान्तः परा वागनपायिनी।**

**यस्यां दृष्टस्वरूपायां त्र्यधिकारो निवर्तते॥** इत्यागमः।

**परा ययाऽक्षरमधिगम्यते** (मुण्डकोपनिषत्-1/5) इति श्रुतिः।

**पार्वती परमोदारा परब्रह्मात्मिका परा॥** इति देवीभागवतेऽपि (12/6/90)।

तथाऽप्युच्यते पराया गङ्गानदीविषयेऽपि-

**परा परफलप्राप्तिः पावनी च पयस्विनी।**

**परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा॥** इति। (-श्रीगङ्गासहस्रनामस्तोत्रम्, 106)

परा च नाभिरूपमूलाधारात् प्रथमोदितनादस्वरूपवर्णा। उक्तं च शङ्करेण-

**मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः**

**पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्या।**

**वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना-**

**बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः॥** इति। (श्रीप्रपञ्चसारतन्त्रम्, 2/43)

उक्तं च भर्तृहरिणा वाक्यपदीये-

**भेदोद्गाहविवर्तेन लब्धाकारपरिग्रहा।**

**आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा॥1/136॥** इति।

परमलघुमञ्जूषायामप्युक्तम्- मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते -इति। इति परावाक्प्रणमनप्रयोजनं सर्वस्यैव ध्वनेरनुमानेऽन्तर्भावप्रकाशनं व्यक्तिविवेकरचनयेति। सत्त्वरजस्तमोगुणसाम्यरूपाऽपि च समष्टिरूपा सान्तरोहरूपा महेशी परा नाम। अन्तरेऽन्तःकरणे ऊहेन तर्केण सहितं रूपं यस्या इति सान्तरोहरूपेति विग्रहेणान्तःकरणवृत्तित्वं परायाः स्पष्टमेव। इच्छाज्ञानक्रियाशान्तापरेति पञ्चशक्तिष्वन्यतमा परेति श्रीचक्रान्तर्गतोर्ध्वमुखशक्तियोन्यात्मिकेति वा तस्याः प्रणमनस्यौचित्यम्।

## ॥ अनुमानलक्षणम् ॥

अनुमा, अनुमानं, अनुमितिरित च त्रयः प्रयोगाः। अनुमा इति स्त्रीलिङ्गे। अनुपूर्वस्य माधातोः भावे अङ् प्रत्ययः। अनुमानमिति नपुंसकलिङ्गे। अनुपूर्वस्य माधातोः करणे ल्युट् प्रत्ययः। अनुमितिरित्यपि स्त्रीलिङ्गे। अनुपूर्वस्य माधातोः स्त्रियां क्तिन् प्रत्ययः। अनुभवविशेष इत्यर्थः। अनुमानं नाम व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानम्। यथा- धूमदर्शनाद्वह्निमान् पर्वत इत्याकारज्ञानम्। अस्या व्यापारकरारणं परामर्शः। अस्याः कारणं व्याप्तिज्ञानम्।

तर्कसङ्ग्रहेऽप्युक्तम्- अनुमितिकरणं अनुमानम्। परामर्शजन्यं ज्ञानम् अनुमितिः। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः। तज्जन्यं पर्वतो वह्निमानिति ज्ञानं अनुमितिः। यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः। व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता। अनुमानं द्विविधं स्वार्थं परार्थं च। तत्र स्वार्थं स्वानुमितिहेतुः। तथा हि स्वयं एव भूयो दर्शनेन यत्र धूमस्तत्र अग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते ध ूमं पश्यन् व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं उत्पद्यते। अयं एव लिङ्गपरामर्श इत्युच्यते। तस्मात् पर्वतो वह्निमानिति ज्ञानं अनुमितिरुत्पद्यते तदेतत् स्वार्थानुमानम्। यत्तु स्वयं धूमादग्निं अनुमाय परप्रतिपत्त्यर्थं

पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। यथा पर्वतो वह्निमान्धूमवत्त्वात्। यो यो धूमवान् स वह्निमान् यथा महानसः। तथा चायम्। तस्मात्तथेति। अनेन प्रतिपादितालिलङ्गात्परोऽप्यग्निं प्रतिपद्यते। प्रतिज्ञाहेतूदाहरणोपनयनिगमानि पञ्चावयवाः। पर्वतो वह्निमानिति प्रतिज्ञा। धूमवत्त्वादिति हेतुः। यो यो धूमवान् स सोऽग्निमान् यथा महानस इत्युदाहरणम्। तथा चायं इति उपनयः। तस्मात्तथेति निगमनम्। स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्।

**॥ गौतमीयम् ॥**

आचार्यो गौतमोऽप्याह गौतमीये न्यायसूत्रे- प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अवयवाः। (गौसू, 1/1/32), साध्यनिर्देशः प्रतिज्ञा। (गौसू, 1/1/33), उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः। (गौसू, 1/1/34) तथा वैधर्म्यात्। (गौसू, 1/1/35), साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्तः उदाहरणम्। (गौसू, 1/1/36) तद्विपर्ययात् वा विपरीतम्। (गौसू, 1/1/37), उदाहरणापेक्षः तथा इति उपसंहारः न तथा इति वा साध्यस्य उपनयः। (गौसू, 1/1/38), हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् निगमनम्। (गौसू, 1/1/39) इति।

**॥ सौगतम् ॥**

भिक्षुमोक्षाकरगुप्तिविरचितायां तर्कभाषायामप्युक्तम्- त्रिरूपलिङ्गाख्यानं परार्थानुमानम्। अन्वयव्यतिरेकपक्षधर्मता-संज्ञकानि त्रीणि रूपाणि, येन वचनेन प्रख्याप्यन्ते तद्वचनमुपचारादनुमानशब्देनोच्यते। तस्य द्वैविध्यम्- साधर्म्यवद्वैधर्म्यवच्च। साध्यधर्मिदृष्टान्तधर्मिणोर्हेतुसत्ताकृतं सादृश्यं साधर्म्यम्। तद्यस्यास्ति तत् साधर्म्यवत् साधनवाक्यम्। साध्यधर्मिदृष्टान्तधर्मिणोर्हेतुसत्ताकृतं वैसादृश्यं वैधर्म्यम्। तद्यस्यास्ति तद्वैधर्म्यवत् साधनवाक्यम्। स्वभावहेतोस्साधर्म्यवत्प्रयोगनिरूपणम्, संस्कृतस्य सर्वस्य क्षणिकत्वसमर्थनं च। तत्र स्वभावहेतोः साधर्म्यवन्तं प्रयोगं दर्शयितुं सौत्रान्तिकमतमाश्रित्य भगवता यदुक्तम्- संस्कृतं क्षणिकं सर्वम्- इति। तद् व्युत्पाद्यते। समेत्य सम्भूय हेतुप्रत्ययैः कृतं वस्तुजातं संस्कृतम्। क्षणिकमिति उत्पत्तिक्षण एव सत्त्वात्। इति।

**॥ यथार्थज्ञानम् ॥**

प्रमा, प्रमाणमिति च यथार्थं ज्ञानं निर्दिश्यते। प्रमेति स्त्रीलिङ्गे। प्रपूर्वस्य माङ् माने इति धातोः आतश्चोपसर्गः (3/3/106) इति भावे अङ् प्रत्ययः। ततष्टाप्। प्रमाणमिति नपुंसके। प्रमाणमित्यत्र प्रपूर्वस्य माङ् माने इति धातोः करणे ल्युट् प्रत्ययः। न्यायमते तद्वति तत्प्रकारकज्ञानम्। भ्रमभिन्नज्ञानम्। अस्याः कारणं गुणः। स च प्रत्यक्षे विशेष्ये विशेषणस्य सम्बन्धः। अनुमितौ साध्यविशिष्टपक्षे परामर्शः। शाब्दबोधे योग्यतायाः तात्पर्यस्य वा यथार्थज्ञानम्। उपमितौ शक्ये सादृश्यबुद्धिः। प्रयोजनप्रवृत्त्यनुसारिणी हि प्रमाणत्वस्य व्यवस्था। तदेव धर्मकीर्तिना प्रमाणवार्त्तिके मणिप्रदीपन्यायो भ्रान्तचित्तयोर्मणिबुद्ध्यनुधावनकथया प्रदर्शितस्तत्रावलोकनीयः।

काव्यनये तु काव्यानुमितिर्नाम काव्ये पक्षे रसालङ्कारवस्त्वादीनामर्थान्तराणां साध्यानां वाच्यादर्थाल्लिङ्गात् प्रतीतिरनुभव एवेति यावत्। तदेव प्रागुक्तमनुभवविशेषोऽनुमितिरिति। वाच्यस्यानुमितस्य वाऽर्थस्यार्थान्तरप्रकाशने काव्यानुमानरूपः कश्चित् सम्बन्धः इत्यग्रे काव्यानुमिति लक्षणप्रसङ्गे प्रदर्श्यते।

**॥ काव्यानुमितिलक्षणम् ॥**

आनन्दवर्धनाचार्येण ध्वन्यालोके ध्वनिलक्षणमुपन्यस्तं यथा-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥1/13॥** इति।

अनेनार्थान्तरव्यक्तौ शब्दार्थयोरुपसर्जनीकृतस्वार्थतया ध्वनित्वसिद्धिरिति फलितम्। अत्रार्थविष्टत्वं, शब्दः सविशेषणस्तच्छब्दस्य पुंस्त्वं, व्यञ्जनक्रियाया द्वित्वं, वाशब्दो व्यञ्जनाव्यापारो ध्वनिरिति संज्ञा, काव्यविशेषोक्तिः, कथनकर्तृवचनमित्यादि दशैव दोषानुन्नेतुकामो महिमभट्ट आह व्यक्तिविवेके प्रथमे विमर्शे-

**वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।**
**सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥1/25॥**

अत्रार्थान्तरप्रकाशने व्यक्तेरन्यः कश्चित् सम्बन्धोऽनुभवविशेषतया भिक्षुमोक्षाकरगुप्तकृततर्कभाषानुसारं, त्रिरूपलिङ्गा-ख्यानस्य परार्थानुमानस्यैव लक्षणसङ्गतिः।

## ।।ध्वनेरनुमानेऽन्तर्भावः।।

अभिव्यक्तिरूपो ध्वनिर्महाविषये काव्यनुमानेऽन्र्भवति, महाविषयत्वादनुमानस्य। अभिव्यक्तेरर्थव्यापारस्य गमकत्वरूपेण व्यापारेण स्वीकाराच्चन्यतोऽन्यस्य ज्ञानसिद्धिस्त्वनुमैकसमाश्रयेति सिद्धान्ताच्च। अनेन ज्ञायते च-शब्दार्थयोः स्वार्थप्राधान्यप्रतिषेधात्, व्यञ्जनाव्यापारस्यानुपपत्तेश्च शक्त्यन्तरेण ध्वनिर्न सम्भवतीति चेति सर्वं काव्यानुमानमेव साधयति। रसादिरूपेऽर्थेऽपि व्यक्त्ययोगतो ध्वनित्वसिद्धिर्नास्ति। केवलमभिधाया एव शब्दशक्तेरर्थस्यैकस्यैव लिङ्गत्वाच्च शब्दार्थयोर्व्यञ्जकत्वं न युक्तम्। यथार्थः- इति ध्वनिलक्षणेऽपि शब्दस्योपादानं वृथैव, शब्दशक्तिमूलाऽर्थान्तरगतिर्न बुध्यते। वाच्यानुमानाभ्यामेव वस्त्वलङ्कारसादीनां साध्यानां काव्ये पक्षे सिद्धत्वाच्च काव्यानुमितिरेव ध्वनेर्जायसीति सिद्धमेव। विस्तरस्त्वस्माभिर्ग्रन्थान्तरे विवेचयिष्यते।

### सन्दर्भग्रन्थाः-


1. राजानकमहिमभट्टविरचितो व्यक्तिविवेकः, राजानकरुय्यककृतव्याख्योपेतः, रेवाप्रसादद्विवेदिकृतहिन्दिव्याख्योपेतश्च, काशी-ग्रन्थमाला-121, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, पुनर्मुद्रणम्-2005.
2. राधाकान्तदेवविरचितः शब्दकल्पद्रुमः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, तृतीयं पुनर्मुद्रणम्-2006.
3. धर्मकीर्तिविरचितं प्रमाणवार्त्तिकम्, http://sanskritworld.in/unicode-sanskrit-books.
4. भिक्षुमोक्षाकरगुप्तविरचिता तर्कभाषा, http://sanskritworld.in/unicode-sanskrit-books.
5. अन्नंभट्टविरचितः तर्कसङ्ग्रहः, http://sanskritworld.in/unicode-sanskrit-books.
6. आचार्यदण्डिविरचितः काव्यादर्शः, http://sanskritworld.in/unicode-sanskrit-books.
7. आनन्दवर्धनविरचितो ध्वन्यालोकः, http://sanskritworld.in/unicode-sanskrit-books.
8. श्रीशङ्कराचार्यविरचितं प्रपञ्चसारतन्त्रम्, मोतिलालवनारसीदासः, देहली-7.
9. भट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी, चौखम्बासंस्कृतप्रतिष्ठानम्, देहली-7.
10. गौतमीयं न्यायसूत्रम्, http://sanskritworld.in/unicode-sanskrit-books.
11. अष्टाध्यायीसूत्रपाठः, शारदाप्रकाशनम्, देहली-52, पुनर्मुद्रणम्-1994.
12. भर्तृहरिकृतं वाक्यपदीमयम्, http://sanskritworld.in/unicode-sanskrit-books.



■ पत्रसङ्केतः- वरीयान् व्याख्याता, साहित्यविभागः, राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), मुम्बईपरिसरः, मुम्बई।

# प्राच्यं पाश्चात्त्यं च काव्यशास्त्रीयं चिन्तनम्

■ डॉ. सतीशकुमारकपूरः

वर्णलिपिपदपदार्थवाक्यविन्यासवैशिष्ट्यादिभेदभिन्नाः अनेकानेकस्वरूपा अपि विश्वभाषा यथा भावाभिव्यक्तेरुत्कृष्टतमसाधनत्वेनैव पारस्परिकं साधारण्यावच्छेदं वितन्वन्ति तथैव काव्याभिसम्बद्धं काव्यशास्त्राभिसम्बद्धं वा वैश्विकं परिचिन्तनमपि प्राणिमात्रसंवेदनानां गहनगहनाध्ययनसाधनत्वेन वैशिष्ट्यावगाहित्वेऽपि क्वचन कुतश्चन खल्ववश्यमेवान्तःस्यूतं साधारण्यमवच्छिनत्त्येव। काव्यशास्त्रं हि नाम साहित्यदर्शनयोर्विज्ञानम्। इदं खलु काव्यकृतीनां विश्लेषणानुसारेण समयानुगुणमुद्भावितानां सिद्धान्तानां ज्ञानराशिरिति। युगानुरूपं यथापरिस्थितिं काव्य-साहित्यगतं कथ्यं तथ्यं शिल्पं च परिवर्तनमाप्नोति, परिणामतश्च काव्यशास्त्रीयसिद्धान्तेष्वपि निरन्तरं परिवर्तनशीलता सञ्जायते। भारतवर्षे आभरतनाट्यशास्त्रादद्यावधि, पश्चिमजगति च सुकरात-प्लेटोप्रभृतेः प्रभृत्य नवालोचनापर्यन्तं सिद्धान्तानामैतिहासिकानुशीलनात्खलु परिवर्तनशीलताविषयकं तथ्यमिदं सुतरां पुरः परिलक्षितं भवति। भारतीयवाङ्मये काव्यनाट्यादयः कृतयो लक्ष्यग्रन्थाः, सिद्धान्तशास्त्राणि च लक्षणग्रन्था व्यपदिश्यन्ते। लक्ष्यग्रन्था हि लक्षणग्रन्थानुगामिन इति यद्यपि सामान्यप्रतिपत्तिस्तथापि नवनवोन्मेषशालिनो महान्तः कवयः किल सरुचि तत्सीमानमतिवर्तमाना दृश्यन्त एव।

अलङ्कारशास्त्रं साहित्यशास्त्रं चेत्यादीनि हि काव्यशास्त्रस्य प्राञ्चि नामान्तराणि। साहित्यस्य सुतरां व्यापकं रचनात्मकवाङ्मयमात्मसात्कुर्वच्चैतत् समीक्षाशास्त्रनाम्नापि व्यपदिश्यते। काव्यशास्त्रीयचिन्तनपरिपाटी हि मूलतो महाकाव्यमुक्तकादि श्रव्यकाव्यं, रूपकादि दृश्यकाव्यमेव चाधिकृत्य सिद्धान्तान् स्थापयन्ती दृश्यते प्रायेण। अरस्तूमहोदयस्य पोयटिक्स्(Poetics)-नाम्नि ग्रन्थे हास्य-सुखदवृत्तान्त-दुःखदवृत्तान्त-काव्य-महाकाव्यादीनां (of Comedy, Tragedy and Epics) समीक्षात्मिका निकषदृषद आकलय्यमानाः दृश्यन्ते। आचार्यभरतस्य नाट्यशास्त्रे च रूपकमात्रस्य यद्वा दृश्यकाव्यस्य समीक्षासिद्धान्ताः प्रस्तूयमाना विलोक्यन्ते। प्राच्ये पाश्चात्त्ये च जगति ईसापूर्व-तृतीयचतुर्थशताब्दीत एवैतादृशं प्रौढचिन्तनमुपलभ्यमानं काव्यविषयकविचारविमर्शोल्लासस्यानेकशताब्दीपूर्वतनस्थितिप्रादुर्भावं सुतरां परिचाययति।

काव्यकृतिर्हि वस्तुतो विविधविस्तृतचिन्तनस्यायाममित्रितयीमात्मनानुबध्नाति। तथाहि- काव्यम्, काव्यकर्त्ता (कविः), काव्यानुशीलयिता चेति। नाट्यात्मककाव्यसन्दर्भे तु काव्यकर्त्रा सह नाट्यप्रयोज्यस्य नटादेरपि समावेशः सञ्जायते। इमे सर्वेऽपि पक्षा काव्यशास्त्रीयचिन्तनपरायणानां विदुषामवधानपरिधौ खल्ववतिष्ठन्ते। सर्वप्रथमं तावदेष प्रश्नः समुत्तिष्ठति यत् कविः कलाकारो वा कस्माच्चिदप्यन्यस्मान्मानवाद् धर्मोपदेष्टुर्दार्शनिकाद्वैज्ञानिकाद् राजनीतिकविचारकाद्वा कतरस्मिन् सन्दर्भे विशिष्यते? कस्माच्च कारणाद् विशिष्टप्रकृतिभाज एव जनाः कवित्वभाजनानि भवन्ति? शब्दान्तरशस्तु खल्वेतत्प्रष्टव्यं यत् कवित्वशक्तेर्हेतुः कः?

सुकरात-प्लेटोप्रभृतयो विद्वांसः कवित्वशक्तिं दैवावेशस्य यद्वा दिव्यावेशस्यैव प्रतिफलत्वेनाङ्गीकुर्वन्ति न त्वध्ययनाभ्यासादेरिति। भारतीयाः काव्यशास्त्रविशारदाः काव्यसर्जनायां प्रतिभायाः प्रधानहेतुत्वमभ्युपगच्छन्तोऽपि व्युत्पत्त्यभ्यासमहिम्नामनपेक्षणीयतां नाङ्गीकुर्वन्ति। पारम्परिकाः समालोचकाः केवलायाः प्रतिभायाः काव्यशक्तिहेतुतां न स्वीकुर्वन्ति। अपरतः पाश्चात्त्या रोमाञ्चकविचारकाः प्रतिभामात्रमेव काव्यकलाकृतेर्मूलप्रेरणारूपेणाङ्गीकुर्वन्ति।[1] विद्यमानेऽप्यस्मिन् वैविध्यव्यतिकरे समेऽमी परिचिन्तकाः कवेर्विशिष्टप्रतिभाशीलतामधिकृत्य सुतरामैकमत्यमेव वितन्वन्ति। कविर्हि प्रातिभं सौभाग्यमाश्रित्य काव्यमयीं नव्यसृष्टिमुद्भावयति।

अपरश्चायं महत्त्वपूर्णः प्रश्नः समुत्तिष्ठति यत् काव्यस्य प्रयोजनं किम्? कविः कस्मात् कवितां रचयति? अस्मिन् सन्दर्भे चिन्तकानां द्वौ पक्षौ विद्येते– आद्यः परम्परावादिनामपरश्च स्वच्छन्दतावादिनाम्। परम्परावादिनश्चिन्तका नैतिकोपदेशप्रतिष्ठापनां काव्यस्य प्रयोजनरूपेण स्वीकुर्वन्ति। धार्मिकप्रवचनद्वारा धर्मोपदेष्टेव कविर्हि काव्यद्वारा मानवीयमूल्यविशेषान् स्थापयितुमिच्छति। किन्तु शैलीशिल्पादिदृष्ट्या रमणीयत्वाद्रसमयत्वाच्च कवेः कृतिर्धर्मग्रन्थेभ्यो नीतिग्रन्थेभ्यो वा नितरां नितरां विशिष्यते। स्वच्छन्दतावादिनश्चिन्तकास्तावन्नैतत्स्वीकुर्वन्ति न चापि कवेरुपदेशकत्वमङ्गीकुर्वन्ति। तदनुसारेण कविः किल ब्रह्मणोऽपि विशिष्टः सृष्टिकर्ता वर्तते। स हि स्वकलाकृतिद्वारा स्वकीयनवसृष्टिं जगतः पुरतो विन्यस्यति। स वस्तुतः काव्यव्यपदेशेन स्वानुभूतिषु वाचः सञ्चारयितुमभिलषति। काव्यं हि कवेरनुभूतीनां सारभूततत्त्वं वक्तुं शक्यते यत्खलु तस्यान्तःकरणे प्रवणायितानां भावानां परीवाहमात्रमतिरिच्य न किञ्चिदन्यदस्ति। प्राच्यानि पाश्चात्त्यानि च प्रायेण सर्वाण्यपि मतमतान्तराणि पक्षद्वितयेऽस्मिन् परिगणयितुं परिसङ्ग्रहीतुं वा शक्यन्ते। नाट्यं हि नाम सा सर्वातिशायिनी काव्यकृतिर्या खल्वस्माकं चाक्षुष-श्रावण-बौद्धिक-सन्निकर्षाणां माध्यमीभवन्त्यस्माकं संविदमन्तस्तात्प्रभावयति। अतः काव्यशास्त्रीयचिन्तनस्यायमेवासौ प्रधानपक्षो वर्तते, यस्य विविधानायामानधिकृत्य प्राच्यैः पाश्चात्त्यैश्च विचारकैः प्रसार्यमाणः प्रायेण गतसार्धद्विसहस्राद्वर्षेभ्योऽनवरतमूहापोहः प्रवर्ततेतराम्। एवं तर्हि काव्यस्य कथ्यवस्तुविषयमादाय सर्वप्रथमं प्रश्नः समुदेति यत् काव्ये वर्ण्यमाना विषयाः सत्येन वैज्ञानिकतथ्येन च कियन्मात्रं सङ्गच्छन्ते? प्रायेण सर्वे समीक्षका विद्वांसः स्वीकुर्वन्ति यत् काव्ये तथ्यकथनप्रणाली नाश्रीयते। तस्मिन् समुद्घाट्यमानं सत्यं वास्तविकसत्यं न भवति प्रत्युत सम्भाव्यमात्रं सत्यं भवति। इममेव विचारमाधारीकुर्वाणाः काव्यविरोधिनः कविकल्पनां भ्रममात्रं कल्पयन्ति। प्लेटो-प्रभृतयस्तु तां सत्यादतिमात्रसुदूरामेव मन्यन्ते। भारतीया विचारकाः काव्यकृतिं भ्रान्तिमात्रत्वेन न स्वीकुर्वन्ति। अपरतश्च पाश्चात्त्ये मनोविज्ञानविकासात्मनि परिप्रेक्ष्ये विधीयमानेन काव्यशास्त्रीयचिन्तनेन सोऽयं भ्रान्तिपक्ष इतोऽप्यधिकतरं दृढीकृतः। इदं किल कथ्यते यत् "कला हि नाम भ्रान्तिमात्रम्" (Art is nothing but illusuion) इति। एतदभिप्रेतमेवैकमन्यदपि मतं प्रवृत्तं यत् "सम्मोहनमात्रादतिरिच्य कला किमपि नास्ति" (Art is nothing but hallucination) इति। पुनश्च नृतत्त्वविज्ञानस्याध्ययनम्(Study of Anthropology) आधारीकृत्य काव्यस्य सम्मोहनशक्तिविषयिणी चर्चापि सुतरां प्रचारमगात्। लोकाभिमतं चैतदाभाणकं प्राबल्यमवाप यत् काव्यकलादीनां किल पुरातनस्यादिमसमाजस्यैन्द्रजालिकाद्युच्चारित-मन्त्राणामिवाद्भुतकार्मणप्रभावः सन्तिष्ठते (Art is magic) इति।

अत्र पुनरेष प्रश्नः समुदेति यत् पाश्चात्त्यमतेन काव्यस्य भ्रान्त्यात्मकः सम्मोहनात्मको मायात्मको वा प्रभावः कैस्तत्त्वैरुत्पद्यते? यद्वा प्राच्यमतेन पृच्छामश्चेत्तर्हि काव्यस्य चमत्कारः कैस्तत्त्वैरुत्पद्यते? काव्यं हि मूलतो भाषायां निबध्यते, भाषा च नाम शब्दार्थयोः संश्लिष्टं रूपम्। अतो जिज्ञासेयं जागर्त्ति यत् काव्यं केवलं शब्दमयं भवत्युत शब्दार्थोभयमयं वेति? भारतीयवाङ्मये तावदुभावपि पक्षाविमावाद्रियेते। भामह-कुन्तक-मम्मटप्रभृतयो गहनपरिचिन्तका आचार्याः शब्दार्थयोः सम्मिलितं तत्त्वं काव्यत्वेनाङ्गीकुर्वन्ति न तु केवलं शब्दं केवलमर्थं वा। काव्ये वा लोके वेति सर्वत्र शब्दार्थौ ह्युभावविनाभावस्थिती इति। एतन्मतानुसारं खलु काव्यस्य चमत्कारशालितां सम्मोहकतां च सम्यङ् निर्वर्तयितुं शब्दार्थयोरुभयोरपि रमणीयता कवेरवधातव्या भवति सुतराम्। द्वितीयमतानुसारं तु काव्यस्य प्रभावकतां निर्वर्तयितुं शब्दविशेषस्यैव प्राधान्यं कवेरवधातव्यं भवति। पण्डितराजजगन्नाथप्रभृतयः आचार्याः खल्वेतन्मतपक्षपातिनः। पाश्चात्त्याः स्वच्छन्दवादिनः समीक्षकाः, विशिष्य च फ्रांसदेशीयाः प्रतीकवादिनः कवयः समालोचकाश्च स्पष्टमुद्घोषयन्ति यद् नहि काव्यमर्थैर्विचारैर्वा विरच्यते प्रत्युत शब्दैर्निर्मीयते (Poetry is not made of ideas but of words) इति। अस्य मतस्य तुलना मान्त्रिकाणां शाबरजालमन्त्रैरपि कर्तुं शक्यते यत्र किलार्थस्य किमपि महत्त्वं न गण्यतेऽपितु मन्त्रप्रयुक्तशब्दानां लयः शाबरमान्त्रिकस्य मन्त्रोच्चारप्रकारो भावभङ्गिमा चेत्यादि सर्वमपि सहजमायुज्यमानं मनश्चिकित्साविधानमिव रुग्णजनस्य सम्यक्प्रभावात्मकमुपचारं रचयति। मनोविश्लेषणात्मकोपचारपद्धतिरपि खल्वियमेव।

काव्यस्य प्रभावकतामुज्जृम्भयितुं हि शब्दार्थयोः सविशेषं महत्त्वमनुमन्यते। अत एव काव्यशास्त्रात्मनि परिचिन्तने शब्दार्थयोर्मिथोऽभिसम्बन्धस्य विचारणीयताऽपरिहार्यत्वमनुप्रविशति। शब्दस्य हि स्वकीयेन परम्परापरीतेनार्थेन

नियतः सम्बन्धो भवति- ''नित्यः शब्दार्थसम्बन्धः'' इति। सोऽयमभिसम्बन्धः प्राच्यचिन्तनभूमावभिधाव्यापारोऽभिधीयते। किन्तु वाग्व्यवहारेऽभिधाव्यापारमप्यतिरिच्य कश्चन व्यापारविशेषः स्वकृत्यानि निर्वर्तयन् परिलक्ष्यते, यत्र किल शब्दः स्वकीयं नियतमर्थं परित्यज्य तत्सम्बद्धमन्यमप्यर्थं प्रत्याययितुं सुतरां प्रवर्तते प्रभवति च। स हि लक्षणाव्यापारनाम्ना व्यपदिश्यते। अरस्तूमहोदयेनापि स्वीये रिटोरिक्स् (Rhetorics)-नाम्नि प्रसिद्धग्रन्थेऽनयोरुभयोरपि व्यापारयोर्विवेचनमकारि। काव्यात्मकभाषायां हि शब्दाः वस्तुतोऽभिधापरायणतामतिक्रामन्तो लाक्षणिकताकोटिमनुप्रविशन्ति। मतमिदं किल पाश्चात्यचिन्तरसरण्यां सबहुमानमनुमन्यमानमवलोक्यते। पाश्चात्त्यविचारकेषु हि स्वच्छन्दतावादी कविश्चिन्तकश्च कॉलरिज्-महोदयोऽस्य प्रवर्तयितेति। तदनुसारेण हि सकलापि काव्यात्मिका भाषा केवलं लाक्षणिकी (Metaphoric) भवति। तदिदं मतम् आई. ए. रिचर्ड्स्-एम्पसन्-प्रभृतिभिः (Ivor Armstrong Richards, Sir William Empson) अन्यैश्चाधुनिकैः काव्यचिन्तकैरपि सुतरामभ्युपगम्यते। एतन्मतानुसारेण हि काव्योपात्तानि बिम्बरूपकप्रतीकच्छायादीनि सर्वाण्यपि तत्त्वानि भाषाया लाक्षणिकप्रक्रियास्वरूपाण्येव वेविद्यन्ते। न केवलमेतावदेव, प्रत्युत काव्यान्तर्गतस्य छन्दोविधानस्य लयात्मकतायाः पदशय्यायाश्च प्रयोजनमपि सर्वथा लाक्षणिकमात्रमेवास्ति। प्राच्यकाव्यशास्त्रीयचिन्तने ध्वनिवादिनामाचार्याणां सिद्धान्तः खलु मतेनामुना प्रायशः संवदमान इव लक्ष्यते। ध्वनिवादिनो ह्याचार्याः काव्यार्थप्रतीतौ लक्षणामप्यतिक्रम्य काव्यगतसकलतत्त्वानुभूत्यात्मनो रसरूपव्यङ्ग्यस्य व्यञ्जकत्वेन व्यञ्जनाशक्तिं परिकल्पयन्ति। इतश्च वक्रोक्तिवादप्रवर्तयिताऽऽचार्यकुन्तकोऽपि काव्योपात्तशब्दार्थव्यापारमभिधासाधारण्यानवच्छिन्नं मन्वानः खलु विचित्राभिधारूपेण यद्वा वक्रोक्तिरूपेणैव स्वीकरोति, विनियोगं चास्य वर्णपदवाक्यार्थप्रकरणप्रबन्धादिषु काव्याङ्गेषु विनिर्दिशति यथायथम्। वक्रोक्तिप्रवर्तयित्राऽमुनाऽऽचार्येण विहितस्यास्य मूलभूमिकाऽपि वस्तुतो वामनस्य रीतिसिद्धान्तमेवावलम्बते। इयं हि काव्यसङ्घटनां बहिरन्तश्च विश्लेषयन्ती तदङ्गनिष्ठरामणीयकच्छटोद्घाटकानि तत्त्वानि सुतरां पुरः प्रकटयति। तदिदं विश्लेषणात्मकं चिन्तनमेकतो व्याकरणशास्त्रं भाषाशास्त्रं चाभिसम्बध्नात्यपरतश्च कलाशास्त्रात्मकं विमर्शमप्यात्मसात्करोति। अद्यत्वेऽमेरिकादेशे या किल संरचनावादपद्धतेर्नव्या काव्यसमीक्षा प्रवर्तमाना दरीदृश्यन्ते सा खलु प्राच्यानामस्माकं प्राचां वामनकुन्तकानन्दवर्धनादीनामाचार्याणां संस्कृतकाव्यविवेचनाभिसम्बन्धकृतसूत्रपातं दृष्टिकोणमादायैव तावदभिवर्धते।

एतावता विवेचनेन तर्ह्येतत् स्पष्टीभवति यदद्य काव्यशास्त्रीयचिन्तनक्षेत्रं कियद्विस्तृतं परिलसतीति। तत्खल्वेकतो व्याकरणशास्त्र-भाषाशास्त्र-कलाशास्त्र-दर्शनशास्त्र-छन्दःशास्त्रादि-निधानमात्मनि बिभर्त्यपरतश्च मनोविज्ञानं शरीरक्रियाविज्ञानं चापि सम्यक्संस्पृशति। न केवलमेतावदेव, प्रत्युत काव्यस्यैतिहासिकानि सामाजिकानि च प्रेरणास्रोताँस्यापि यदावधीयन्ते तदा काव्यशास्त्रस्य परिधय इतोऽपि सुतरां समेधयन्ते तच्च समाजशास्त्रमितिहासं राजनीतिचिन्तनं चापि स्वात्मनि निबध्नाति। इदमेव कारणं विद्यते यत् प्राच्ये पाश्चात्त्ये वाऽद्यतनकाव्यशास्त्रीयपरिचिन्तने दृष्टिभङ्गिम्नां वैविध्यमुत्तरोत्तरं विलालसीति।

■ पत्रसङ्केतः- साहित्यविभागाध्यक्षः, राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), श्रीरणवीरपरिसरः, जम्मू।

# संस्कृतवाङ्मये भाषाचिन्तनम्

■ प्रो. लोकमान्यमिश्रः

इह सृष्टौ ब्रह्मणा चित्रविचित्राः संरचनाः कृताः। एताष्वन्यतमा वर्तते जीवरचना। सर्वे जीवाः संरचनायां प्रकृतौ च विविधत्वं भजन्ते। जीवेषु अतिविशिष्टं हि भवति मानवजीवः। जीवोऽयं बुद्धिकौशलेन सर्वेषु जीवेषु प्रकृतौ च नियन्त्रणं विधातुं सततं यतते। यत्नेऽस्मिन् स कदाचित् सफलं भवति कदाचिच्च आंशिकरूपेण साफल्यं लभते। मानवो हि चिन्तनशीलो जीवो भवति। तस्य व्यवहारे चिन्तनस्य प्रभावो निश्चयेन भवति। स्वचिन्तनक्षमताया अनुप्रयोगं मानवोऽन्येषां नियन्त्रणं कर्तुं सम्बन्धञ्च निर्मातुं करोति। भगवता वेदव्यासेन स्वकीये महाभारताख्ये ग्रन्थे सुस्पष्टं प्रतिपादितं यत्-

**"न मानुषाच्छ्रेष्ठतरं हि किञ्चित्।"**

आशयोऽयं यन्मानवो हि विरञ्चिना विरचितायां सृष्टौ सर्वश्रेष्ठो वर्तते। अस्य हि श्रेष्ठत्वं जन्मजातसत्प्रवृत्तिभिः समाजेऽनुकरणवृत्तिभिः ज्ञानविज्ञानकलादीनाञ्च ज्ञानेनैव भवति।

मानवजीवनस्य दैनन्दिनानुभवैः सम्बन्धितानि तथ्यानि सुस्पष्टानि भूत्वापि विचारातीतानि प्रतिभान्ति। भाषापि तथाविधं तथ्यं भवति। मानवजीवने भाषायाः स्थानमन्यतमं भवति। स्वचिन्तनस्य अभिव्यक्तिः ध्वनिसमूहेन इङ्गितैश्च विदधाति मानवः। शब्दैः वाक्यैर्वा विचाराणां विनिमयस्य साधनरूपेण भाषायाः प्रयोगो विधीयते। कस्याश्चिदपि भाषायाः विकासप्रक्रिया सहजा सुदीर्घा च भवति। पशुमानवयोर्भेदोऽपि भाषाकारणादेव भवति। भाषामन्तरा सभ्यतायाः संस्कृतेश्च परिकल्पनापि असम्भवा प्रतीयते। भाषा वस्तुतः प्रकृतेः अनुपमं चमत्कृतियुतञ्चावदानं वर्तते। भाषायाः आधारेणैव मानवः सामाजिकप्राणी वर्तते। समाजे परस्परसम्पर्काय माध्यमरूपेण भाषा प्रयुज्यते। एतस्मादेव कारणात् भाषा सामाजिकव्यवहाररूपा मन्यते। समाजादेव शिशुः भाषामधिगच्छति। भाषया एव स सामाजिकाचरणस्य शिक्षणं प्राप्नोति।

सभ्यतायाः इतिहास एव वस्तुतः भाषाया अपि इतिहासो वर्तते। भाषाविषये भर्तृहरिणा स्ववाक्यपदीये प्रतिपादितं यत्- जगति यावन्तो व्यवहाराः विद्यन्ते, ते सर्वे शब्दानुगमनेनैव ज्ञायन्ते इति। यथा हि-

**न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।**
**अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते॥**[1]

संस्कृतस्य प्रख्यातः कविः काव्यशास्त्री च दण्डी स्वकीये 'काव्यादर्शः' इत्याख्ये साहित्यशास्त्रीयग्रन्थे सुस्पष्टं प्रतिपादितवान् यत्-

**इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥**[2]

अर्थात् जगदिदं शब्दाख्याज्योतेरभावे अन्धकारमयं स्यात्। अत्र ज्ञानरूपप्रकाशस्याभावे अज्ञानतिमिरमाच्छादितं स्यादिति। वस्तुतः भाषयैव मानवः स्वकीयामभिव्यक्तिं परिमार्जयति परिष्करोति वा। भाषैव तासामनुभूतीनां विचाराणाञ्च संरक्षिका भवति। भाषा सततं विकासशीला वर्तते अत एव मानवोऽपि सततं विकासपथि प्रचलति।

सामान्यरूपेण कथ्यते यत् यस्मात् साधनात् वयं स्वकीयान् भावान् विचारान् वा अन्यान् प्रति प्रेषयामः सा नाम भाषेति। अत एव भाषा वस्तुतः सार्थकानां ध्वनिप्रतीकानां सा व्यवस्था मन्यते यस्याः माध्यमेन एतस्याः प्रयोक्ता श्रोता च परस्परं विचाराणाम् आदानप्रदानं कुर्वन्ति। भाषा सामाजिकतत्त्वं भवति। भाषायाः अर्जनं सामाजिकैः भवति। अनुकरणेन अभ्यासेन च भाषावगम्यते। भाषा सदैव परिवर्तनशीला भवति। भाषायाः अन्तिमं स्वरूपं न कदापि भवति।

भाषापदं संस्कृतभाषायाः 'भाष्' धातोः समुत्पन्नम्। एतस्याः धातोः प्रयोगः व्यक्तायां वाचि भवति। 'भाष्' धातोः अङि टापि च सति भाषा-पदं निष्पद्यते। सम्भाषणार्थे भाषा प्रयुज्यते। सम्भाषणस्य प्रक्रियायाः सम्बन्धो मानवानामस्तित्वेन वर्तते। आरम्भिकावस्थायां मानवाः सङ्केतैः अस्पष्टैश्च ध्वनिभिः स्वकीयं भावम् आवश्यकतां वा सूचयन्ति स्म। सभ्यतायाः विकासे मानवो यदा परिवारे, समुदाये समाजे वसतौ वा निवासं प्रारभत तदा एतादृशं संसाधनं परमावश्यकमासीत् येन विचाराणां भावानां च परस्परविनिमयो जायेत। एषैवावश्यकता भाषायाः प्रादुर्भावस्य कारणभूता सञ्जाता। आवश्यकतानां पूर्तये जातानां भावानां विचाराणाञ्च विनिमये भाषायाः विकासोऽभवत्।

भाषापदं यथा सरला प्रतीयते तथैव गाम्भीर्यमपि धारयति। एषा भाषा मनुष्यैर्विरचिता आहोस्वित् ईश्वरप्रदत्ता वर्तते इति विषये विदुषां मते वैविध्यं दरीदृश्यते। भाषाया आविर्भावः कस्मिन् कालखण्डे जातः उत वा भाषा अनादि वर्तते? अथवा क्रमशः विकसिता जाता इत्येतानि मतानि प्रचलन्ति।

भाषापदम् आङ्ग्लभाषायाः 'LANGUAGE' इति पदस्यानुवादभूतं भवति। LANGUAGE इति पदम् 'लेटिन्' इति शास्त्रीयभाषायाः 'LINGUA' पदात् निष्पन्नं जिह्वाध्वनिः इति (Toungue, Speech, Language)।

पारम्परिकाः भारतीयाः मन्वते यत् जगदिदं सृष्टिकर्तुः रचना वर्तते। सृष्टौ सर्वप्रथमं ग्रन्थरूपेण निर्विवादम् ऋग्वेदस्य मान्यता वर्तते। तत्सन्दर्भे निरुक्तकारेण यास्काचार्येण प्रतिपादितं यत्-

**"ऋषयो मन्त्रद्रष्टारः न तु कर्तारः।'**[3] इति।

ऋग्वेदे नामधेये ग्रन्थरत्ने-

**"यथा पूर्वमकल्पयत्।"**

प्रभृतिमन्त्रः वेदानां मानवकृतित्वं निषेधयति। तत्रैव सुस्पष्टमेतत् प्रतिपादितं यत्-

**"यथेमां वाचं कल्याणीमावदानि जनेभ्यः।'**[5] इति।

अर्थात् अहं (सृष्टिकर्ता) मनुष्येभ्यः कल्याणकारिणीं वाणीं दत्तवान् इति। अत्र वाणीपदं भाषार्थकमेव प्रतीयते।

वैदिकसंहिता हि वस्तुतः स्तुतिसाहित्यरूपेण प्रसिद्धा वर्तते। भाषायाः चिन्तनं वेदानां प्रतिपाद्यं नास्ति। परं ऋग्वेदसंहितायां बहुविधाः एतादृशाः प्रसङ्गाः प्राप्यन्ते येन ज्ञायते यत् भाषा-चिन्तनदृष्ट्या ऋषयो जागरूकाः प्रतीयन्ते। एतन्निरूपणम् आनुषङ्गिकरूपेण प्राप्यते। यथा हि ऋग्वेदे भाषायाः कृते सर्वाधिकं प्रचलितं पदं 'वाक्' इति वर्तते[6]। एतदतिरिच्यापि 'गिर्[7], 'अघ्न्या'[8], 'गो', 'सूनृता', 'वाणी' प्रभृतयः शब्दाः अपि भाषार्थे प्रयुक्ताः विद्यन्ते।

मन्त्रद्रष्टारो तपःपूताः ऋषयो भाषायाः महत्त्वेन सुपरिचिता आसन्। ऋग्वेदे गृत्समदऋषिः इन्द्रेभ्यः श्रेष्ठधनस्याभ्यर्थनाकाले वाण्याः माधुर्यमवाप्तुं कामयते[9]। बृहस्पतिः अङ्गिरसऋषिः प्रतिपादितवान् यत् यथा विवेकी जनः सत्तू इति खाद्यं निष्यन्दनं विधाय प्रयुक्तं करोति तथैव वाचमपि सुविचार्य वदन्ति। एतेन जीवने साफल्यं निहितं भवति[10]। अगस्त्यो मैत्रावरुणिऋषिरपि वाचमेव रमणीयद्रव्यमयीं मनुते[11]।

ऋग्वेदे शशकर्णः काण्वऋषिः वाचं देवीरूपेण मनुते। आत्मानं तु स वाचा सह जागरितमिति मनुते। एषा वाक् जनेभ्यः मतिं श्रेष्ठं च धनं प्रददातीति[12]। बृहस्पतिराङ्गिरसो तु पदार्थानां यद् गुप्तं श्रेष्ठञ्च भवति तद्वाचैव प्रकटितं स्वीकरोति[13]। दीर्घतमसः ऋषेः कथनमेतद्यत् वागेव जगतः सञ्चालनस्य प्रथमं फलमिति[14]। प्रस्कण्वऋषेर्वचनं यत् वाक् हि व्यवस्थितस्य मर्यादितस्य च जीवनस्य मार्गं इति[15]। सध्रिवैरूपऋषेर्मते वाण्याः प्रतिपाद्यं हि तत्त्वमक्षरम् (आत्मा) ब्रह्मैव वर्तते इति[16]। तन्मते वाण्याः विषयस्तथा व्यापको यथा हि व्यापकं ब्रह्मतत्त्वं भवतीति[17]। आत्रेयऋषिर्हि मेघगर्जनरूपां वाचं त्रिभिर्विशेषणैः समन्वितां मनुते[18]। वस्तुतः अभीष्टसिद्धमर्थम् एषा वाक् 'इरावती', विविधशैलीकारणात् 'चित्र' अर्थप्रकाशनञ्च 'त्विषमती'[19] इति वर्तते।

ऋग्वेदे सवत्सार-काश्यपो नाम ऋषिः यथार्थकथनमेव वाण्याः गुणमिति मनुते[20]। कुत्सः अङ्गिरसऋषिः कर्मणा समन्वितायाः मनसोऽनुकरणशीलायाश्च वाण्याः कामनां करोति[21]। कुरुसुतिः काण्वऋषिस्तु मौलिकां यथार्थपरकाञ्च वाणीं श्रेष्ठां मनुते[22]। गृत्समदऋषिरपि माधुर्यं वाण्याः अन्यतमं गुणं मनुते। विश्व-मनस्- वैयश्वऋषिः वाचं घृतमधुसमं सुस्वादु मनुते[23]। नेमभार्गवऋषिः वाचं धेनुसमां मनुते[24]। स एव ऋषिः वाचे मन्द्र (अर्थप्रकाशिका) राष्ट्री (अधिकारप्रभावयुता) चेति विशेषणं प्रयुक्तवान्। एतेन ज्ञायते यत् स प्रेमयुतां प्रभावोत्पादिकाम् अर्थप्रकाशिकां च वाचमेव सर्वश्रेष्ठामिति मनुते इति। पतङ्गप्रजापत्य-ऋषेरभिमते वाक् हि सुस्पष्टा, मनीषा सत्या च स्यादिति[25]।

ऋग्वेदस्य बृहस्पतिरङ्गिरसऋषिः वाचं पत्युर्प्रेम्णि समाविष्टाम् ऋतुस्नातां युवतीमिव मनुते या हि पत्ये स्वकीयं सर्वस्वमर्पणायोद्यतेति[26]। आशयोऽयं यद्वाक् एवंविधा स्याद्येन श्रोता वक्तुराशयं झटित्यवगच्छेदिति। विश्वामित्र-गाधिन-ऋषिः मनुते यत् बुद्धिमन्तो जनाः कर्मतत्पराः सुविचार्य वाचं परिस्यन्दन्ति[27]। एवं ऋग्वेदे वाचः प्रियता, मधुरता, हितता, सोद्देश्यता, ओजस्विता, सुविचारिता, अर्थप्रचुरता, सत्यता, मौलिकता, गम्भीरता, स्पष्टता, प्रभावशीलता, प्रवाहिता, निर्दुष्टता प्रभृतयो गुणाः भवितुमर्हन्ति।

वैदिकवाङ्मये वाचो दोषा अपि परिगणिताः विद्यन्ते। अनार्याणां भाषा हि आर्यजनानां कृते अस्पष्टत्वात् अवगम्या न भवतीति कारणात् वध्रिः वन्ध्या नास्ति[28]। अर्थराहित्यमपि भाषायाः अन्यो दोषः। बृहस्पतिरङ्गिरसऋषिः एनमेव वाक्दोषं स्पष्टतया अ-धेनुः, अ-फला, अ-पुष्पा-वाक् प्रभृतिपदैः व्यक्तीकृतवान्[29]। अर्थदर्थरहिता हि वाणी शुष्का गौरिव वर्तते। ब्राह्मणग्रन्थेषु मृध्रपदं वाग्दोषाय प्रयुक्तं वर्तते। एतदर्थं म्लेच्छपदमपि प्राप्यते[30]। वस्तुतः इन्द्रस्य शत्रूणामसुराणामुच्चारणं संस्कृतभाषिणामार्याणां दृष्ट्या भ्रष्टमासीत् इत्याशयोऽत्र प्रतिभाति।

वाग्घि दैवी सम्पद्भवति। नेमभार्गवऋषिः ऋग्वेदे प्रतिपादितवान् यत् देवैः हि चैतन्यवतां इन्द्रियसम्पदानां द्विपदानाम्, चतुष्पदानां सरीसृपानां वा सर्वविधानां जीवानां कृते वाक् प्रदत्तेति[31]। परमेतेषु प्राणिषु मननशक्तियुतो मानवो हि सर्वाधिको लाभान्वितोऽभवत्[32]। यतो हि सर्वाधिको मननशीलो हि पशुर्नाम मानवः[33]। एवं वाक् हि मानवस्यानन्या विशेषता। सध्रिवैरूपऋषेर्मते वाणीं हि ईश्वरः शरीरे स्थापितवानिति[34]। देवैर्प्रदत्तेयं वाक् कामधेनुसमा वर्तते। मानवान् बलं प्रदायैषाऽऽनन्दितान् करोति। कुत्स-आङ्गिरसऋषिमते विष्णुरेव स्तोतृभ्यः सर्वप्रथमं वाणीं प्रदत्तवान्[35]। वामदेवगौतमऋषिर्हि मनुते यत् वाक् मानवेभ्यः ईश्वरस्य स्वाभाविकशक्तिरूपेणाधिगतेति। मानवास्तु तां परिष्कारयन्ति[36]।

दीर्घतमस् औतथ्यऋषिर्हि वाक् इत्यस्य रचना 'अक्षरात्' भवतीति निरूपितवान्[37]। अक्षयं अक्षरं त्रा हि "न क्षरतीति"[38] व्युत्पत्त्या यस्य क्षरं क्षरणं वा न भवतीत्याशयः। तन्मते अक्षरं हि सृष्टेर्मूलस्य वाचकं भवति। परवर्तिदार्शनिकास्तु अक्षरं ब्रह्मणः निकटस्थं तत्त्वमिति मन्वते[39]। एवमक्षरं हि अक्षयध्वनिरिति वर्तते। वाक् इति रूपे एतस्याः अभिव्यक्तिर्भवति।

वर्णार्थेऽक्षरपदं दीर्घतमसऋषिणा एकस्मिन् मन्त्रे प्रतिपादितम्। अग्निस्तुतौ तेन प्रतिपादितं यत् अग्निः अस्माकं शुक्रवर्णां स्तुतिं प्रेरयतीति[40]। अत्र शुक्रः चमत्कारार्थे प्रतीयते। विश्वामित्रो गाथिनऋषिरपि प्रतिपादितवान् यत् इन्द्रः स्तोतुः स्तुतौ चैतन्यं प्रदाय स्तुतिं शुक्रवर्णं कृतवानिति[41]। अक्षरैरेव वाक् निर्माति। विश्वामित्रगाथिनऋषेर्वचनमस्ति यत् नामभिरेव वाणी भवति सेवनीयेति[42]। आशयोऽयं यत् अक्षरनामयोर्मध्ये नाम्नः स्थितिर्भवतीति। एवं भाषायाः सेवनीयता नामभिरेव भवति। वाक्-आम्भृणि-ऋषिकायाः कथनमेतदासीद्यत् अहं (वाक्) शासनकर्त्री, धनदात्री, यज्ञविधानानामवगमयित्री भवामि। बहोः कालं यावत् स्थिता, विविधान् लोकान् स्थापयित्रीं माम् (वाचम्) देवाः विविधरीत्या व्याकृतवन्तः[43]-

**अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।** इति।

ऋग्वेदमन्त्रे प्रतिपादितं यत् त्रिगुणितं सप्त नामभिः त्रिवचनात्मिका सप्तभिर्विभक्तिभिः समन्विता वाक् नामपदरूपेणावगन्तुं शक्यते[44]। वशिष्ठ-मैत्रावरुणिऋषिः प्रतिपादितवान् यत् माम् वरुणः उक्तवान् यत् अनश्वरा वाक् (अ-हन्या) त्रिगुणितं सप्तभिः (एकविंशतिः) नामभिः आख्याता भवति। अध्ययनरतान् अन्तेवासिनो बोधयन् विद्वान् मेधावी च वरुणः पदानां रहस्यं प्रतिपादितवानिति[45]। वर्णानां हि उरः कण्ठः शिरः प्रभृतयः अष्टौ स्थानानि भवन्तीति पाणिनीयशिक्षेति शिक्षावेदाङ्गग्रन्थे प्रतिपादितम्[46]-

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस् तथा।।**

एवं वैदिकवाङ्मये भाषाचिन्तनं स्फुटं दरीदृश्यते। वेदानां भाषा अपारशब्दराशिदृष्ट्या, प्रायोगिकवैविध्यदृष्ट्या, प्रत्ययसमूहदृष्ट्या, अर्थवैपुल्यदृष्ट्या, स्वराणां चमत्कृतिदृष्ट्या वाक्यरचनादृष्ट्या च विशिष्टा वर्तते।

यावत् प्रभृति मानवानाम् अस्तित्वं वर्तते तेषां स्वकीयानामवश्यकतानां पूर्तिरपरिहार्याभवत्। भाषा हि तत्साधनं नाम येन जनाः स्वकीयविचाराणां शाब्दिकामभिव्यक्तिं कुर्वन्ति। एतदर्थं वाचिकध्वनीनाम् उपयोगः क्रियते। एवं भाषा मुखादुच्चार्यमाणानां शब्दानां वाक्यानां च तत् समूहो वर्तते येन आत्मनो भावानामभिव्यक्तिर्भवति। कस्याश्चिदपि भाषायाः ध्वनीनां प्रतिनिधिभूतः स्वनः एकस्यां व्यवस्थायां सम्भूय समग्रभाषायाः अवधारणां सम्पादयति। भाषा हि व्यक्तस्य नादस्य हि सा समष्टिर्भवति यन्माध्यमेन जनाः मनोगतभावान् विचारान् वा प्रकटयन्ति। मानवीयसम्प्रेषणं भाषिकमभाषिकञ्चेति उभयविधं भवति।

संसारे विविधतत्ववत् भाषाया: अपि मानवानाम् आदिमावस्थाया: अव्यक्तनादात् साम्प्रतं यावत् सततं विकासं प्रवर्तितमस्ति। एतदर्थं भाषायां परिवर्तनं निरन्तरं प्रचलति। एषा हि आभ्यन्तराभिव्यक्ते: सर्वाधिकं विश्वसनीयं माध्यमं भवति। एषैव भाषा विकासस्य सामाजिकस्य सांस्कृतिकस्य चाभिज्ञानस्य साधनरूपेणापि तिष्ठति। भाषा हि संस्कृतेर्वाहिका भवति तदङ्गभूतापि वर्तते।

वैदिकमन्त्राणां प्रयोगं सुनिश्चेतुं ब्राह्मणग्रन्था: वर्तन्ते। षट्सु शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो- ज्यौतिषाख्येषु वेदाङ्गेषु अन्यतमं भवति शिक्षावेदाङ्गम्। शिक्षावेदाङ्गे वर्णानामुच्चारणस्थलानां निर्देशनपुरस्सरं शुद्धोच्चारणोपाया: विविधैर्निदर्शनै: प्रतिपादिता: सन्ति।

**"श्रुतेरिवार्थं स्मृतिरन्वगच्छत्"**[17] इति महाकविकालिदासप्रणीतेन वचनेन मनुस्मृति-प्रभृतिग्रन्थानां रचना वेदार्थप्रतिपादनायैव जातेति सुप्रसिद्धमेव। स्मृतिषु प्रमुखे मनुस्मृतिग्रन्थेऽपि सृष्टिप्रक्रिया सम्यग् प्रतिपादिता वर्तते। सर्वप्रथमं ब्रह्मा विविधकर्माण्यनुसृत्य संस्थाश्च निर्मीय नाम्नां निर्माणं वेदशब्दाधारेण कृतवान्। ततः प्रजाया: समुत्पन्नेच्छया स तपो-वाणी-रति-काम-क्रोधादीनि विरचितवान्[18]।

## सन्दर्भसङ्केत:-

1. वाक्यपदीयम्, 1/124.
2. काव्यादर्श:, 1/4.
3. निरुक्तम्
4. ऋग्वेद:
5. वस्तुत: 'ऋच्' इत्यस्यार्थोऽपि स्तुतिरेव वर्तते। यथा हि-
   बृहस्पतिः सामभिर्ऋषयो अर्चतु। (-ऋग्वेद:, 10/36/5)
   अर्था मरुद्भिर्ऋक्वभिः (-ऋग्वेद:, 5/52/1)
   ऋगर्चनी (-निरुक्तम्, 1/8) इति।
6. इष्यन्वाचमुप वक्तेव होतुः। -ऋग्वेद:, 9/95/5
   तमिद् वोचेमा विपथेषु शम्भुवं मन्त्रं देवा अनेहसम्, इमां च वाचम् प्रतिहर्यथा नरो। -ऋग्वेद:, 1/40/6
   वाक् कस्मात्? वचेः। -निरुक्तम्, 2/23
7. गीर्भिर्गृणन्त ऋग्मियम्। -ऋग्वेद:, 1/9/9
8. पोषं रमीणामरिष्टिं तनूनां, स्वाद्मानं वाचः सुदिनत्वमह्नाम्॥ -ऋग्वेद:, 2/21/6
9. सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
   अत्र सखायः सख्यानि जानते, भद्रैषां लक्ष्मीर्निहिताऽधि वाचि॥ -ऋग्वेद:, 10/71/2
10. वाचं वाचं जरितू रत्निनीं कृतमुभा शंसं नासत्याऽवतं मम॥ -ऋग्वेद:, 1/182/4
11. यस्ते स्तनः शशयो यो मयो भूर्, येन विश्वा पुष्यसि वार्याणि।
    यो रत्नधा, वसुविद्, यः सुदत्रः सरस्वति तमिह धातवे कः॥ -ऋग्वेद:, 1/164/49
12. अभुत्स्य प्रदेव्या साकं वाचाऽहमश्विनोः। व्यावर्देव्या मतिं धिरातिं मर्त्येभ्यः॥ -ऋग्वेद:, 8/9/16
13. बृहस्पते, प्रथमं वाचो अग्रं यत्प्रैरत नाम-धेयं दधानाः।
    यदेषां श्रेष्ठ-यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः॥ -ऋग्वेद:, 10/71/1
14. यदा मागन्प्रथम-जा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः। -ऋग्वेद:, 1/164/37
15. हरिः सृजानः पथ्यामशतस्येयर्ति वाचमरितेव नावम्।
    देवो देवानां गुह्यानि नामाऽऽविष्कृणोति बर्हिषि प्र-वाचे॥ -ऋग्वेद:, 9/95/2
16. ऋयो अक्षरे परमे व्योमन्, यस्मिन् देवा अधि विश्वे निषेदुः॥ -ऋग्वेद:, 1/164/39
17. यावद् ब्रह्म वि-ष्ठितं, तावती वाक्। -ऋग्वेद:, 10/114/8
18. वाचं तु मित्रावरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीम्॥ - ऋग्वेद:, 5/63/6
19. अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषराम्। -ऋग्वेद:, 10/98/3
20. यादृगेव ददृशे, तादृगुच्यते। -ऋग्वेद:, 5/44/6
21. अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा, मनीषाम्। -ऋग्वेद:, 1/112/24
22. वाचमष्टापदीमहं नव-स्रक्तिमृत-स्पृशम्। इन्द्रात्परि तन्वं ममे। -ऋग्वेद:, 8/76/12
23. अ-गो-रुधाय गविषे द्यु-क्षाय दस्म्यं वचः। घृतात् स्वादीयो मधुनश्च वोचत॥ -ऋग्वेद:, 8/24/20

24. देवीं वाचमजनयन्त देवास् सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु। -ऋग्वेदः, 8/100/11
25. यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा॥ -ऋग्वेदः, 8/100/10
26. पतङ्गो वाचं मनसा बिभर्ति, तां गन्धर्वोऽवदद् गर्भे अन्तः।
    तां द्योतमानां स्वयं मनीषामृतस्य पदे कवयो नि पान्ति॥ -ऋग्वेदः, 10/177/2
27. उत त्वः पश्यन्न ददर्श वाचम् उत त्वः शृण्वन् न शृणोत्येनाम्।
    उतो त्वस्मै तन्वं वि-सस्रे जायेव पत्य उशती सु-वासाः॥ -ऋग्वेदः, 10/71/4
28. पुनन्ति धीरा अपसो मनीषा देव-या विप्र उदियर्ति वाचम्॥ -ऋग्वेदः, 4/8/5
29. ............................अमित्रनरन्धायन्मानुषे वध्रि-वाचः॥ -ऋग्वेदः, 7/18/1
30. अ-धेन्वा चरति माययैष वाचं शुश्रुवाँ अ-फलामपुष्पाम्।। -ऋग्वेदः, 10/71/5
31. तेऽसुरा आत्त-वचसो "हेऽलवो, हेऽलव" इति वदन्तः परा-बभूवुः। -शतपथब्राह्मणम्, 3/2/1/23
32. तत्रैतामपि व्याचमृदुरुप जिज्ञास्याम्। स म्लेच्छः। तस्मान्न ब्राह्मणो म्लेच्छेत्, असुर्या हैया वाक्।
    -शतपथब्राह्मणम्, 3/2/1/24
    देवीं वाचमजनयन्त देवास् तां विश्वरूपाः पशवो वदन्ति। -ऋग्वेदः, 8/100/11
    विश्वं जीवं चरसे बोधयन्ती विश्वस्य वाचमविदन्मनायाः। -ऋग्वेदः, 1/92/9
33. पिपतु मा तदृतस्य प्र-वाचनं देवानां यन्मनुष्या अमन्महि। -ऋग्वेदः, 10/35/8
34. को धिष्ण्यां प्रति वाचं पपाद? -ऋग्वेदः, 10/114/9
35. यो ब्रह्मणे प्रथमो गा अविन्दत। -ऋग्वेदः, 1/101/5
36. त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दम्।
    इन्द्र एकं सूर्य एकं जजान वेनादेकं स्व-धया निष्टतक्षुः॥ -ऋग्वेदः, 4/58/4
37. गायत्रेण प्रति मिमीते अर्कमर्केण साम, त्रैष्टुभेन वाकम्।
    वकेन वाकं द्वि-पदा चतुष्पदाऽक्षरेण मिमते सप्त वाणीः॥ -ऋग्वेदः, 1/164/24
38. ततः क्षरत्यक्षरं तत्। -ऋग्वेदः, 1/164/42
39. ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे नि-षेदुः।
    यस्तन्न वेद किमृचा करिष्यति? य इत्तद्विदुस्त इमे समासते॥ -ऋग्वेदः, 1/164/39
40. इन्धानो अक्रो विदथेषु दीधच्छुक्रवर्णामुदुनो यंसते धियम्। -ऋग्वेदः, 1/143/7
41. तदिन्वस्य वृषभस्य धेनोरा नामभिर्ममिरे सक्म्यं गोः। -ऋग्वेदः, 3/38/7
42. पूर्ववत्।
43. तां मा देवा व्यदधुः पुरुत्र भूरिस्थात्रं भूर्यावेशयन्तीम्॥ -ऋग्वेदः, 10/125/3
44. चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
    त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥ -ऋग्वेदः, 4/58/3

मन्त्रैतस्य व्याख्यायां पातञ्जलमहाभाष्ये प्रतिपादितं यत् चत्वारि शृङ्गाणि = चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः = त्रयः कालम्भूत-भविष्यद्वर्तमानाः। द्वे शीर्षे = द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तातो अस्य = सप्त विभक्तयः। त्रिधा बद्धस् = त्रिषु स्थानेषु बद्ध उरसि, कण्ठे, शिरसीति। वृषभो वर्षणात्। रोरवीति = शब्दं करोति। कुत एतत्?

रौतिः शब्दकर्मा। महो देवो मर्त्या आ विवेशेति महान् देवः शब्दः। मर्त्या = मरणधर्माणो मनुष्यास्, तानाविवेश।
-महाभाष्यम्

45. उवाच मे वरुणो मेधिराय त्रिः सप्त नामाऽघ्न्या बिभर्ति।
    विद्वान् पदस्य गुह्या न वोचद् युगाय विप्र उपराय शिक्षन्॥ -ऋग्वेदः, 7/78/4
46. जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च॥ -पाणिनीयशिक्षा, 13
47. महाकविकालिदासः, रघुवंशमहाकाव्यम्, प्रथमसर्गः।
48. सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
    वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥
    तपो वाचं रतिं चैव कामं च क्रोधमेव च।
    सृष्टिं ससर्ज चैवेमां द्रष्टुमिच्छन्निमाः प्रजाः॥ -मनुस्मृतिः, 1/24-25

■ पत्रसङ्केतः- शिक्षाशास्त्रविभागाध्यक्षः, राष्ट्रियसंस्कृतसंस्थानम्,(मा.वि.),
लखनऊ-परिसरः, लखनऊ।

# शिवमहिम्नस्तोत्रे शिवतत्त्वविमर्शः

■ प्रो. सुरेन्द्रपाठकः

एकदा अत्यन्तं शोभनम् अवसरं सम्प्राप्य जगदम्बा पार्वती महेश्वरं शिवम् अवोचत्। भूतभावनपरमकृपालो हे परमेश्वर! महेश्वर! एकां कामपि अश्रुतपूर्वां कथां कथयतु। भगवान् शङ्करः कथाम् आरब्धवान्। तस्मिन्नेव समये शिवस्य कश्चित् प्रसादवित्तकः नामकः गणः गुह्यरूपेण कथामश्रौषीत्। ताञ्च कथां स्वगृहे गत्वा पत्नीमपि अश्रावीत्।

एकदा तस्य भार्या मातुः पार्वत्याः समीपे आगतवती, अथ तामेव कथां जगदम्बां श्रावितवती, जगदम्बा तस्याः मुखाद् तामेव कथां श्रुत्वा चकिता सञ्जाता, चकिता सती पतिं परमेश्वरं शिवम् अपृच्छत्। भगवन् भवान् कथाकाले अब्रवीत्, यद् अहम् एवंविधां नवीनां कथां श्रावयामि, या अद्यावधि केनापि श्रुता नास्ति, परन्तु तामेव कथां प्रसादवित्तस्य पत्नी मां श्रावितवती, एतद् वैपरीत्यं कथं जातम्, भगवान् कदापि असत्यं न ब्रूते, इयं च तामेव कथां मां कथितवती। पृष्टे सति प्रसादवित्तस्य भार्या उक्तवती यत् इमां कथां मम पतिः मामुक्तवान्। भूतभावनः परमेश्वरः शिवः तमाहूय अपृच्छत् यत् इमां कथां भवान् कुतः अश्रौषीत्, स सर्वमपि वृत्तान्तं महेशं नम्रीभूय अकथयत्। पार्वती तां शापम् अददात् यत् त्वया मानव इव आचरणं कृतम्। अतः मर्त्यलोके तव जन्म भविष्यति, इति श्रुत्वा प्रसादवित्तः अवोचत् यत् भवत्याः वाणी सत्यमेव भविष्यति। मम प्रार्थना वर्तते यत् भगवतः शिवस्य प्रासादात् व्याकरणशास्त्रमाविर्भूतमस्ति, अतः यथाहं वैयाकरणः भवेम इति आशीः प्रदीयताम्। माता पार्वती तथास्तु इति अब्रवीत्। समये स एव मर्त्यलोके वररुचिः, कात्यायनः, पुष्पदन्त इति नाम्ना महान् वैयाकरणः अभवत्। स भगवतः शिवस्य महान् आराधकः आसीत्। स शिवस्य लिङ्गं निर्माय प्रतिदिनम् अर्चयन् आसीत्। काले पुष्पाणामभावं विलोक्य एकस्य कस्यचित् राज्ञः पुष्पवाटिकातः प्रतिदिनं पुष्पचयनं करोति स्म। प्रहरिभिः बहुप्रकारैः यत्नैरपि स पुष्पचौरः न गृहीतः। राजा तान् आदिशत् यत् शिवस्य निर्माल्यं बाटिकायाः बहिर्भागे सर्वत्र पातयतु येन तस्य चौरस्य अन्तर्धानशक्तिः क्षीणा भविष्यति, क्षीणेन शक्त्या तस्य निग्रहणं शक्यते, तथा कृते सति यदा स वाटिकायां प्रविश्य पुष्पाणि गृहीत्वा बहिरागच्छत्। शिवनिर्माल्यलङ्घनेन तस्य अन्तर्धानशक्तिः नष्टा सञ्जाता स चौरः पुष्पदन्तः निगृहीतः। स एव अन्त्यन्तं दुःखितः सन् मनुष्यरूपपापयोनितो विमुक्तये 'श्रीशिवमहिम्नस्तोत्रनामकं' शिवस्तोत्रम् व्यरचयत्। यथा न्यायमञ्जरीग्रन्थे-

**भ्रष्टः शापेन देव्याः शिवपुरवसतेर्यद्यहं मन्दभाग्यो ।**
**भाव्यं वा जन्मना मे यदि मलकलिते मर्त्यलोके सशोके॥**
**स्निग्धाभिर्दुग्धधारामलमधुरसुधाबिन्दुनिष्यन्दिनीभिः**
**कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकामः।**

तथा च स्कन्दपुराणे प्रभासखण्डे-

**तेन तप्त्वा तपो घोरं लिङ्गं तत्र प्रतिष्ठितम्।**
**तद् दृष्ट्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात्॥**

अस्मिन् स्तोत्रे शिवस्य अत्यन्तम् उत्कटं महत्त्वं वर्णितमस्ति। यथा- ब्रह्मप्रतिपादनावसरे भगवती श्रुतिः अक्षमा सती नेति नेति इत्युक्त्वा तस्य ब्रह्मणः विभुत्वम् अनादिनिधनत्वं मनोवाक्बुद्धिभिरगोचरत्वं प्रतिपादयति, तत् तत्त्वं वस्तुतः शिव एव, यथा सर्वाः खलु नद्यः निरन्तरं समुद्रं प्रति धावन्त्यः तत्रैव मिलित्वा शान्तिं प्राप्नुवन्ति, तथैव मानवः यं कमपि देवं ध्यात्वा-ध्यात्वा तावत् विश्रान्तिं न प्राप्नोति यावत् शिवस्य शरणन्त्र प्राप्नोति, इत्येव बहुभिः प्रकारैः चतुश्चत्वारिंशतश्लोकैः अस्मिन् शिवमहिम्नस्तोत्रे शिवस्य महिमा वर्णितो वर्तते। एतदेव शिवमहिम्नस्तोत्रमधि कृत्य 'स्वामी श्रीमधुसूदनसरस्वती' परिब्राजकः यथा शिवपक्षे अर्थः तथैव विष्णुपक्षेऽपि अर्थः सम्भवति इति चमत्कारपूर्णमर्थं कृतवान् तदनुसारमेव ममापि एवं प्रयासः भविष्यति यत् विष्णुपक्षेऽपि अर्थ स्यात् किञ्च शिवतत्त्वस्य विवेचनं भूयात् इति प्रयते।

शिवमहिम्नस्तोत्रे भगवतः शिवस्य स्तुतिः वर्णिता अस्ति, स्तुतिर्नाम गुणाभिधानम् **स्वरूपवर्णनम्**, गुणास्तु सावयवस्यैव भवति, ब्रह्म निगुणं निर्विकारं निरवयवं भवति, अतः तद् स्तोतुं नैव शक्यते। वाचः विषय एव नास्ति। तद् ब्रह्म विष्णुः महेशः सरस्वती कोऽपि वा अभिधातुं नैव शक्नोति। अत एव भगवती श्रुतिः कथयति "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"। अत एव तद् कथमपि केनापि स्तुतियोग्यं नास्ति, तथापि वर्णयितुं प्रयतते। वर्णनस्य क्रमः द्विधा वर्तते। यथा कोऽपि कमपि पृच्छति, यो जानाति तं, तस्य स्थानं, स्थानं स्वरूपं तत्र गमनस्य उपायं, किञ्च तस्या व्यक्तेः नाम, तच्छ्वरूपञ्च तेन रूपेण वर्णयति, न जानाति चेत् विपरीतं प्रयतते, एतत् स्थानं तस्य स्थानं नास्ति। अयं मार्गः तस्य मार्गः नास्ति, एतद् गृहं तस्य नास्ति, एतत् स्वरूपं तस्य नास्ति इत्यादि विपरीतक्रमेण तं प्रतिपादयति एवं श्रुतिरपि "नेति नेति क्रमेण ब्रह्मप्रतिपादनं करोति, परन्तु तथापि प्रतिपादयितुं क्षमा न भवति। सा एव श्रुतिः सृष्टिक्रममवलोक्य विचारयति, इयं सर्वाऽपि सृष्टिरचना तस्यैव ब्रह्मणः प्रपञ्चभूता, यतोहि कर्तारं विना कार्यस्य अनुत्पादनात्, सम्पूर्णमपि ब्रह्माण्डप्रपञ्चं परमात्यन्तिकमद्भूतं, विस्तारोऽपि अद्भूतः वर्धनमपि अद्भूतं ह्रासोऽपि अद्भुतः, प्रतिवस्तु वैविध्यं, निखिलमपि विश्ववस्तु अवर्णनीयमेव। अतः तस्यैव अवर्णनीयस्य मनोवाक्वुद्धेरविषयस्य ब्रह्मणः विस्ताररूपमेव जगत्, अत एव ऋक् वक्ति "एकोऽहं बहु स्याम" ब्रह्मा विष्णुः रुद्रः, ऋषयः देवाः महाभूताः विषयाः सम्पूर्णमेव विश्वप्रपञ्चं तदेव वर्तते यथा "सर्व खल्विदं ब्रह्म" नेह नानास्ति किञ्चन।

"यतो भूतानि जायन्ते तत एव प्रसरन्ति, विकसन्ति तस्मिन्नेव लीयन्ते" अतः श्रीमद्भागवतमहापुराणे–

**यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्।**
**योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयं भुवम्॥**

तत्तत्वं शिव एव।। तथा पुष्पदन्तस्य स्तुतिः-

**अतीतः पन्थानं तव च महिमा वाक्मनसयो**
**रतद्व्यावृत्यायं चकितमभिधत्ते श्रुरिपि।**
**स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः**
**पदे त्वर्वाचीने पतति न मनः कस्य न वचः॥**

निर्गुणे निर्विकारे निरवयवेऽपि प्रतिपलं नवीनमिव तद्, सगुणे सावयवेऽपि प्रतिपलं नवीनं रमणीयं परमाह्लादभरमेव। स एव शिवः ब्रह्मास्ति विष्णुरस्ति रुद्रोऽपि प्रतिकणं प्रतिपलमस्ति।

**तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकष्टत्,**
**त्रयी वस्तुं व्यस्तं तिसृषु गुणाभिन्नासु तनुषु।**
**अभव्यानामस्मिन् वरद रमणीयामरमणीं**
**विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः॥**

अस्मिन् हि सृष्टिप्रपञ्चे बहुविधाः जनाः धीमन्तः तार्किकाः बहुविद्याविशारदाः सन्ति ते उपर्युक्तं तत्त्वमन्यथा कुर्वन्ति, कथयन्ति यदियं सृष्टिः स्वाभाविकी एव नैवास्याः कोऽपि कर्त्ता, नैव यत् किमपि ब्रह्म, नैव वा कोऽपि ईश्वर इति।

इयं सृष्टिः सार्वकालिकी, स्वत एव प्रचलति, पदार्थाः जायन्ते, वर्धन्ते नश्यन्ति च। कश्चन च विज्ञः श्रुतिं, श्रुतेः वाक्यं सत्यं स्वीकरोति, 'ब्रह्म' मनुते, ईश्वरं मनुते तस्यैव प्रपञ्चभूतं निखिलमपि ब्रह्माण्डमिति मनुते, किन्तु तच्च विष्णुरेव नारायण एव। अन्यः विज्ञः श्रीराम एव ब्रह्म ईश्वर इति मनुते। कश्चन कृष्ण एव ब्रह्म एवमतवादः वर्तते। किन्तु पुष्पदन्तस्तु शिव एव ब्रह्म, "एकोऽहं बहु स्याम" जीवानां कल्याणकामनाय ब्रह्मा भूत्वा सृजति, विष्णुः भूत्वा पालयति, रुद्रः भूत्वा संहरति। शिवस्तु साक्षाद् ब्रह्मरूपः निरवयवः निर्गुणः निर्विकारः सार्वकालिकः मायातीतः निष्प्रपञ्चः, भक्ताः तं ध्यायन्ति, पूजयन्ति, स्मरन्ति येनरूपेण स तैनैवरूपेण तथा भवति।

यथा– श्रद्धामयोऽयं पुरुषः यो यच्छश्रद्धः स एव सः।

शिवः परमो दयालुः, आशुतोषः भक्त्या प्रसन्नः सन् स्वभक्ताय सर्वमपि प्रयच्छति। यथा रावणाय त्रिपुरासुराय च प्रदत्तवान्। शिवस्य शक्त्या एव सर्वे प्राणिनः शक्तिमन्तः, अन्यथा महाबली अपि निर्बल एव। उद्धतः रावणः यदा कैलाशमेव उत्थाय स्वलङ्कापुर्यां शिवं संस्थापयितुम् अचेष्टयत्, तदा शिव स्वाङ्गुष्ठेन कैलाशं किञ्चिन्मात्रमेव अस्पर्शयत्, तस्पर्शनेनैव रावणस्य सर्वोऽपि गर्वः गलितः सञ्जातः। यथा–

**अमुष्य त्वत्सेवासमधिगतसारं भुजवनम्, बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः।**
**अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि, प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः॥**

तस्य शिवस्य पारं प्राप्तुं ब्रह्मण: विष्णोरपि शक्ति: नास्ति।

**तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरध:, परिच्छेत्तुं यातावनलमनलस्कन्धवपुष:।**

**ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्, स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति॥**

भगवत: शिवस्य यादृश: स्वभाव: यादृशी च लोकोपकारिता वर्तते तादृश: स्वभाव: तादृशी च लोकोपकारिता कस्मिंश्चिदपि देवे न वर्तते। समुद्रमन्थनात् विषस्योत्पत्ति: जायते विषज्वालया सम्पूर्णमपि ब्रह्माण्डं व्यग्रमिव सञ्जातं 'सर्वेषां जीवानां प्राणा: ग्रस्ता इव सञ्जाता, सर्वेऽपि देवा चिन्तिता:, ब्रह्मण: विष्णोरपि सामर्थ्यं नैवासीत् तस्य संहरणे, जीवानां कल्याणं विचार्य शिव एव विषपानम् अकरोत्।

**अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयनविषं संहृतवत:।**

**स कल्माष: कण्ठे तव न कुरुते न श्रियमहो, विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिन:॥14॥**

सगरपुत्राणामुद्धारप्रसङ्गे गङ्गाया: वेगं सोढुं कोऽपि सक्षम: नाभूत्, शिव एव एक: देव एतादृश: यो हि स्वशिरसि गङ्गामधारयत्। शिवस्य परिवारोऽपि अत्यन्तं विचित्र: शिवस्य किमप्युत्तरीयमधोवस्त्रं वा नास्ति, गले हारस्य स्थाने सर्प एव वर्तते कुण्डलस्य कङ्कणस्य स्थाने सर्प:, मुकुटस्य स्थाने जटाजूटान्येव सन्ति, अङ्गरागस्थाने भस्मानि सन्ति, गृहं श्मशानमेव वर्तते, वाहनं वृषभ एव, मातु: पार्वत्या: वाहनं सिंह: 'द्वयो: महान् विरोध: 'एकत्र स्थातुं' न शक्नुत:। पुत्रस्य कार्तिकेयस्य वाहनं मयूर:, शिवस्य गले सर्प:, गणेशस्य वाहनं मूषक:, एतत् सर्वं 'विरोधपूर्णमेव असम्भवमेवैतद् जगतीतले, कुत्राप्येव सम्भवं नास्ति। बहव: विचारका: तार्किका: बुद्धिमन्त: एतादृशं शिवपरिवारवर्णनं श्रुत्वा हसन्ति, वदन्ति च, एतत् परमं काल्पनिकमसत्यं मूर्खतापूर्णञ्च। किञ्च शिवस्य विषपानविषये, किम्वा शिरसि गङ्गाधारणविषयेऽपि एवमेव वदन्ति। किन्तु शिवस्य विषये त एव जना एवं वदन्ति, ये जना: भोगवादिन: पशुवत् जीवनं जीवन्ति, ऐन्द्रियकमेव सुखं जानन्ति, ततोऽन्यदपि किमपि आध्यात्मिकं ऐश्वरीयतत्त्वमपि अस्ति इति ते न जानन्ति। एवं बहुविधा: जना: अस्मिन् भारते अभवन् ये तावत् सिंहस्य उपरि आरुह्य यथेच्छं गमनं कुर्वाणा आसन्। सिंहं नियन्त्रयितुं हस्ते सर्पस्य प्रयोगं कुर्वन्ति स्म, यथा महात्मन: चाङ्गदेवस्य नाम अत्यन्तं प्रसिद्धं वर्तते। उडीसाप्रान्ते पुरीनगर्यामेक: हरिदासनामक: महात्मा आसीत्, तस्य अत्यन्तं पार्श्वे एव महाविषधर: सर्प: आसीत् अस्य प्रश्वासोच्छ्वासात् जनानां शरीरे कण्डव: सञ्जायन्ते स्म। किन्तु हरिदास: तत्र निर्विकार एव आसीत्। अयोध्यानगर्यां एक: महात्मा आसीत्। य: अयोध्यानगरीं त्यक्त्वा बहुदूरे गतां यमुनां निकटे आनीतवान्, यदि भगवदाराधनया भक्त्या मनुष्याणामसम्भवमपि कार्यं सम्भवं भवति, तर्हि किं न शिव: कर्तुं शक्नोति। वस्तुत: एतद् शिवतत्त्वं मानवान् उपदिशति, यत् यदा अस्माकं हृदये परस्मै वैर:, द्वेष:, घृणा, अपकार:, मिथ्याचार:, छलं कपट: इत्यादि दुर्गुणा: जायन्ते तद्बलादेव मनुष्यस्य शक्ति: क्षीणा भवति, किञ्च जन्तून् प्रति भयं द्वेषादिकञ्च जायते। यदा तु मानवस्य हृदये वैरादिदोषाणां परस्परं सर्वथा शून्यं दशा जायते। प्रतिकणं प्रेमाधिक्यमेव जायते, तत्र परस्परं विरोधिनोऽपि जन्तव: तेषां सम्मुखे स्वकीयं वैरभावं त्यजन्ति, मनुष्यै: जीवेषु वैरभावो त्याज्य:, एतदेव अस्ति शिवतत्त्वम्।

अस्मिन् लघुनिबन्धे अल्पमेव लिखितुं शक्यते, अत: किञ्चिदेव विचारं समुपस्थाप्य अस्मिन् महिम्नस्तोत्रे शिवपक्षेऽर्थ: प्रसिद्ध एवेति। विष्णुपक्षेऽपि कथमर्थ: सम्भवति इति विचारयामि- यथा प्रथमश्लोके "ममाप्येष स्तोत्रे हर" सन्धौ सति 'स्तोत्रेऽहर' इत्यपि सम्भवति तथा सति न हरति = न संहरति–नाशयति = किञ्च पालयत्वेव इति अहर अर्थात् विष्णु एव, किञ्च परमविदुष: = परम्+अविदुष:" विष्णुपक्षे–परा मा = लक्ष्मी: यस्य स: परम: सम्बोधने परम: = हे लक्ष्मीपते। तृतीयश्लोके–पुरमथन = मथ्यतेऽस्मिन् दध्यादि इति मथनं = गोकुलम् अथवा मथ्यन्ते आप: = जलानि अमृताय स मथन: क्षीरोद:, पुरं = मन्दिरं गोकुलं समुद्रो वा यस्य स पुरमथन: सम्बोधने पुरमथन इति, एवमेव सर्वेषु श्लोकेषु विष्णुपक्षेऽपि अर्थ: सम्भवति, एतादृश: भगवान् शिव: विष्णुरूपोऽपि वर्तते। स एव भगवान् सोमनाथ: पूर्वापरभागयो: शिवविष्णुरूपेण मध्ये च स्वयमेव "ब्रह्मा" इति रूपेण राजते। तस्मिन्नेव देवा: सर्वे एकैकश: राराजन्ते भक्तानां समागतानां मनोकामनां पूरयितुमिति सर्वेषामस्माकं कल्याणाय भवतु भगवान् सोमनाथ:, तेषामेव परमपावनचरणयोरियं मे किञ्चिन्मात्रं वाचोयुक्ति: तत्प्रसादादेव प्रसरतु विदुषां समवाये इत्येव अलम्।

■ पत्रसङ्केत:– प्राचार्य:, राष्ट्रिय संस्कृत संस्थान (मा.वि.वि.),
लखनऊ परिसर, लखनऊ।

# पण्डितराजजगन्नाथप्रणीतस्य लहरीपञ्चकस्य दिग्दर्शनम्

■ प्रो. रामसुमेरयादवः

संस्कृतसाहित्ये लहरीकाव्येषु आदिगुरुशङ्कराचार्यस्य सर्वप्रथमा रचना सौन्दर्यलहरी अस्ति। सौन्दर्यलहरी भाव-भाषा-रसालङ्कारदृष्ट्या अलौकिकं काव्यमस्ति। अतः परम् उपासनाधारेण पण्डितराजस्य लहरीपञ्चककाव्यानां महन्महत्त्वं भजतेतराम्। आराध्यदेवतां उपासितुं लहरीपञ्चकस्य रचना जाता। लहरीरचनाकर्मणि संस्कृतसाहित्ये काश्चन लहर्यः जगति ख्यातिमागताः। आनन्दलहरी, सौन्दर्यलहरी (शङ्कराचार्येण), गङ्गालहरी, अमृतलरही, करुणालहरी, लक्ष्मीलहरी, सुधालहरी(पण्डितराजजगन्नाथेन), आनन्दलहरी(अप्पयदीक्षितेन), चमत्कारलहरी(उरुंगरीशङ्करेण), आनन्दलहरी (गौरांकान्तेन), आनन्दलहरी(आशानन्देन), शृङ्गारलहरी(वेङ्कटाचार्येण), शृङ्गारलहरी(सीतारामभट्टेन), प्रधानलहरी(इलुईतव्वुरानेन), गङ्गालहरी(रेवारामेण), वागानन्दलहरी(कैकुलंगारामेण), अमृतानन्दलहरी(तीर्थ- पादपरमहंसस्वामिना), शिवानन्दलहरी(कस्तूरीश्रीनिवासाचार्येण), सूत्रार्थामृतलहरी(कृष्णावधूतस्वामिना), पीयूषलहरी (कृष्णब्रह्मदत्तेन), केशवपालेशलहरी(शंकरलालमाहेश्वरेण), मुक्तिलहरी(माधवकवीन्द्रेण), गोदावरीलहरी (काशीनाथशास्त्रिणा), नर्मदालहरी(वासुदेवानन्देन), पीयूषलहरी(चिरंजीवलालेन), विलापलहरी (रामनाथेन), मुकुन्दानन्दलहरी (जयन्तीवाकन्नापन्नतुल्लुना), शृङ्गारलहरी(हरिवल्लभेन), श्रीकण्ठामृतलहरी (नीलकण्ठतीर्थपादेन), गङ्गालहरी (कुंयू नम्बतिरिणा), हर्षलहरी(वेङ्कटवामेन), विजयलहरी(मूलशङ्कर-माणिकलालेन), गङ्गालहरी(लक्ष्मीनारायणेन), वाणीलहरी(हरिनारायणशास्त्रिणा), प्रज्ञालहरी(सुब्रह्मण्यमअय्यरेण), विनोदलहरी(माधवनारायणेन), दिव्यानन्दलहरी(मेधाव्रतशास्त्रिणा), मीरालहरी(पण्डिता क्षमारावेण), मनोलहरी (भट्टमथुरादत्तशास्त्रिणा), काशीलहरी (गोपीनाथद्रविडेन), मत्तलहरी, लीलालहरी, वैचित्रलहरी (विद्याधरशास्त्रिणा), साम्राज्यलहरी (बुद्धिसागरेण), भावलहरी (ओमप्रकाशशास्त्रिणा), गङ्गालहरी(कृष्णसिंहठक्कुरेण), जवाहरगङ्गालहरी (काशीनाथेन), विरहलहरी (वेहनकर्णेन), सङ्गीतलहरी (जगदीशचन्द्राचार्येण), गायत्रीलहरी(रुद्रदेवत्रिपाठिना), जनतालहरी (डॉ. राधावल्लभत्रिपाठिना), विस्मयलहरी (अभिराजराजेन्द्रमिश्रेण) इत्याद्याः विरचिताः।

लहरीपञ्चकस्य रचनायाः मूलस्रोतः मुख्यतया भक्तिमयं स्तुतिपरकम् अस्ति। किं भवति 'लहरी'काव्यम्? काव्यशास्त्रे प्रदत्तेषु काव्यलक्षणेषु लहरीकाव्यविधायाः कृते लक्षणं नावाप्यते। लक्ष्यानुसारीणि लक्षणानि भवन्ति। साहित्यदर्पणः[1] संस्कृतकाव्यशास्त्रस्य मानकग्रन्थरूपेण विलसति। अनन्तरं रसगङ्गाधरः अस्ति। साहित्यदर्पणे मुक्तककाव्यस्य विवेचनं जातम्-

> **छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम्।**
> **द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते।**
> **कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।**
> **खण्डकाव्यं भवेत् काव्यस्यैकादेशानुसारि च।।[2]**

साहित्यदर्पणे मुक्तकस्य भेदप्रभेदेषु पद्यद्वये युग्मकः त्रिषु पद्येषु सन्दानिकं चतुर्पद्येषु कलापकः, पञ्चपद्येषु कुलकम् कथ्यते। यत्र पद्यानां मिथः अपेक्षा न भवति स्वतन्त्ररूपेण तिष्ठन्ति। एवं भूते तत् व्रज्या कथ्यते। व्रज्यायां लहरी भवितुमर्हति। डॉ. वर्णेकरेण पाञ्चालीगुम्फितं काव्यं लहरीकाव्यं भवति इति कथितम्। लहरीकाव्येषु छन्दोवैशिष्ट्यमपि भवति। डॉ. राधावल्लभत्रिपाठिना समीक्षा क्रियते यत् लहरीकाव्यं आन्तरिकभावाभिव्यक्त्या युक्तं भवति। अर्थात् लहरीकाव्यं कवेः व्यक्तिगतानुभूतेः भावनानाञ्चाभिव्यक्तिः वर्तते। तेन तन्मतेन लहरीकाव्यं आद्यान्तमेव छन्दसि निबद्धं भवति। परन्तु क्वचित् वैविध्यं भजते।

डॉ. राजेन्द्रमिश्रानुसारेण लहरीकाव्यं स्पष्टरूपेण मुक्तकखण्डकाव्यस्यान्तर्गतं स्वीकृतम्। वर्णेकरेण खण्डकाव्यसंज्ञयाभिहितम्। डॉ. मिश्रानुसारेण लहरीकाव्यं खण्डकाव्यस्यैव एकं स्वरूपं वर्तते। लहरीकाव्ये लहरीमिव विषयप्रतिपादनं भवति। यथा नद्यः समुद्रे समाहिता भवन्ति लहरीरूपेण स्वात्मानं प्रदर्शयन्ति। परन्तु समुद्रेण मिलित्वा तदाकारा भवन्ति। तथैव भक्त्या काव्ये

मूलभावं पुनः पुनः पुष्टं कुर्वन्ति। लहरी- ''ल+ह्+इन्+ङीष्'' यस्यार्थः तरङ्गः भवति। काव्यस्य कृते अस्यार्थः विचारभावतरङ्गाः गृहीतुं शक्यन्ते। शङ्कराचार्यस्य लहरीकाव्यान्तरं लहरीकाव्यविकासपरम्परायां पण्डितराजस्य लहर्यः प्रमुखाः। यासु गङ्गायमुना- विष्णुलक्ष्मीसूर्यादीनाम् आराधनया क्रमशः गङ्गालहरी-अमृतलहरी-करुणालहरी-लक्ष्मीलहरी-सुधालहरी-नामभिः विहिताः। मानवजीवने शिवतमोपलब्धिः काव्यमस्ति। काव्यं अत्माभिव्यक्तेः प्रबलतमं साधनमस्ति। लहरीपञ्चकं पण्डितराजस्यानुपमकृतिरूपेण विलसति। तच्च प्रकीर्णविधेयं विद्यते। काव्यस्य प्रयोजनानां निर्वहणं लहरीकाव्येपु भवति।

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मितयोपदेशयुजे।।**[3]

अनुशीलनपक्षे रसपरिपाक-भाषासौष्ठव-गुण-रीति-अलङ्कार-छन्दयोजनादीनां निर्वाहश्चापि समासतः विधीयते। गङ्गालहरी-यमुनालहरी-(अमृतलहरी)सुधालहरी-सूर्यलहरी इत्येताः प्रकृतिप्रतीकस्वरूपाः विद्यन्ते। विष्णुलहरी देवस्तुतिप्रतीकस्वरूपा। तथा च देवीस्तुतिपरका लक्ष्मीलहरी विद्यते। भारतीयसंस्कृतौ प्रकृतिः दिव्यतत्त्वरूपेण सम्मानिता। जलमयीदेवताविषयिणी कल्पना गङ्गालहरी।

**गङ्गालहर्याः काव्यात्मत्वम्-**

**वर्ण्यविषयः**:- अत्र मातुः गङ्गायाः स्तुतिः विहिता। तेनानुसारेण गङ्गा वेदानां सारः, देवानां पुण्यमूर्तिः अवर्णनीया अमृततुल्यास्ति। गङ्गायाः दर्शनमात्रेण दरिद्रतादीनां नाशो भवति यथा-

**दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां**
**द्रुतं दूरीकुर्वन् सकृदपि गतो सृष्टिसरणिम्।**
**अपि द्रागाविद्याद्रुमनयनदीक्षागुरुरिह**
**प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः।।**[4]

गङ्गायाः दर्शनेन स्मरणमात्रेण च पापानि नष्टानि भवन्ति। गङ्गास्नानेन अन्तःकरणस्य जनानां त्रिविधानां कायिकवाचिकमानसिकपापानां नाशो भवति।

**स्मृतिं याता पुंसामकृतसुकृतानामपि च या**
**हरन्त्यन्तस्तन्द्रां तिमिरमिव चन्द्रांशुसरणिः।**
**इयं सा ते मूर्तिः सकलसुरसंसेव्यसलिला**
**ममान्तःसन्तापं त्रिविधमपि पापं च हरताम्।।**[5]

भावरूपेण तस्य मार्मिकवेदना पण्डितराजस्य भक्तिभावं प्रकटयति-

**तवालम्बादम्बा स्फुरदलघुगर्वेण सहसा**
**मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः।**
**इदानीमौदास्यं भजसि यदि भागीरथि तदा**
**निराधारो हा रोदिमि कथय केषामिह पुरः।।**[6]

पण्डितराजः इहलोकं परलोकं गङ्गायै सर्वं समर्प्य चिन्तारहितो जातः।

**कियन्तः सन्त्येके नियतमिहलोकार्थघटकाः**
**परे पूतात्मानः कति च परलोकप्रणयिनः।**
**सुखं शेते मातस्तव खलु कृपातः पुनरयं**
**जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः।।**[7]

**रसपरिपाकः**:- अत्र भक्तिरसस्य परिपाको जातः पुण्यतीर्थस्वरूपा गङ्गा आलम्बनविभावः। गङ्गायाः पतितोद्धारकं कार्य उद्दीपनम्। गङ्गाविषयिणी रतिः स्थायिभावः। अश्रुपातः विह्वलता चानुभावः तथा दैन्यं, धृतिः, ग्लानिश्च व्यभिचारिभावाः। यथा-

**अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा।**
**विलोलद्वानीरं तव जननि तीरं श्रितवताम्।।**
**सुधातः स्वादीयस्सलिलभरमातृप्ति पिबतां।**

**जनानामानन्दः परिहसति निर्वाणपदवीम्।।**[8]

**गुणः**- माधुर्यगुणसम्पन्नं काव्यमिदम्।

**अलङ्कारविधानम्**- अनुप्रासस्य रमणीया छटा विद्यमाना वर्तते।

**दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां**
**द्रुतं दूरीकुर्वन् सकृदपि गतो दृष्टिसरणिम्।**
**अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह**
**प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः।।**[9]

**छन्दयोजना**- गङ्गालहरी शिखरिणीछन्दसि निबद्धा। अस्यां गङ्गालहर्यां कविः लघुकलेवरे विराटभाववैभवस्य स्थापनां करोति।

**यमुनालहरी-**

यमुनालहरी यमुनायाः स्तुतिरूपेण विख्याता। यमुनायाः नीलजलराशौ भगवतः दर्शनलाभो भवति। यमुनाजले आचूडनिमज्जनात् दिव्यामरपदं प्राप्यते इति विश्वासः।

**रसपरिपाकः**- भक्तिरसस्य शान्तरसस्य च कमनीयो परिपाकः विराजते। अद्भुतरसस्यापि प्रतीतिर्भवति। यमुना भक्तिरसस्य आलम्बनविभावः। यमुना विषयिकीरतिः स्थायिभावः। यमुनायाः उपकारिरूपं उद्दीपनविभावः।

**गुणः**- अत्र प्रसादः ओजश्च गुणौ वर्तेते।

**रीतिः**- अत्र गौडी रीतिः वर्तते।

**अलङ्कारविधानम्**- अत्र अनुप्रास-वक्रोक्ति-यमक-रूपक-अतिशयोक्ति-व्यतिरेकादयः अलङ्काराः प्रयुक्ताः। प्रथमपद्ये- काकुवक्रोक्तिः वर्तते। यमुनां प्रति कवेः भक्तिः वर्तते। हे मात! यो हि प्रातःकाले तव तटे आगत्य तव नीलं स्निग्धं जलराशिं पश्यति। तस्य भाग्यशालिनः जनस्य जीवने भगवतः विष्णोरपि आवश्यकता न भवति।

**करुणा( विष्णु )लहरी-**

**वर्ण्यविषयः**- भगवतः विष्णोः करुणया प्रार्थना विद्यते। ईश्वरं प्रति भक्तिभावना अगाधश्रद्धया अभिव्यक्तिश्च अस्मिन् स्तोत्रे सञ्जाता। प्रभोः कृते करुणासुधाम्बुधे! दयासुधाम्बुधे! इति व्याहृतम्। समर्थस्य समृद्धस्य स्वामिनः सद्भावे यदि क्षुधया वीथीसु अन्नकणान् गृहीतुं यत्नः कोऽपि करोति तदा तस्य स्वामिनः कृते लज्जायाः वार्तास्ति।[10] तथा तत्र भगवान् कठोरहृदयधारी वर्तते। पञ्चदशतमे पद्ये 'नितरामिति' निजत्वदृष्ट्या प्रश्नं करोति। हे प्रभो! मदीयोद्धारं कथं न कृतवान्। अत्र सख्यत्वं अभिव्यज्यते। करुणालहर्यां भक्तेः स्वरूपं दास्यानुगतसख्यभक्तिः अस्ति भक्तिभावनायां, वैराग्यभावनायाः समावेशो विद्यते।[11] अस्य स्तोत्रस्य भावाः पूर्णतया रसान्विताः अलङ्कृताश्च वर्तन्ते।

**गुणः**- आह्लादस्वरूपत्वात् माधुर्यगुणः विलसति। कोमलकान्तपदावलीभिरलङ्कृता वैदर्भीरीतेः प्राधान्यमावहति।

**अलङ्कारयोजना**- अनुप्रास-यमक-श्लेष-रूपक-निदर्शनालङ्कारादिभिः सौन्दर्यं वर्धितम्।

**रसपरिपाकः**- अत्र हि भक्तिरसस्य सुन्दरतमो परिपाकः विद्यते।

**न जाग्रता स्वप्नमतेन वा मया समीहितं ते करुणालवाद्यते।**
**गिरं मदीयां तत् वेत्सि तात्त्विकीं तदा जगन्नायक मामुरीकुरु।।**[12]

**छन्दो योजना**- प्रथमपद्यतः द्वादशपद्यानि यावत् वंशस्थः। तथा त्रयोदशादारभ्य चतुःपञ्चाशत्पद्यानि यावत् वियोगिनी। ततो हि वंशस्थः। करुणालहर्याः अन्तिमे पद्ये स कथयति-

**इदं वै विष्णुलहरी जगन्नाथेन निर्मितम्**
**यः पठेत् तस्य सर्वत्र जायन्ते जयसम्पदः।**

**लक्ष्मीलहरी-**

स्तोत्रमिदं लक्ष्मीं स्मरति। कविः तां सौन्दर्यदृष्ट्या महदुच्चतां ददाति। तस्याः अनुपमेयं सौन्दर्यं वर्णयति। स्वान्तः सुखाय भक्तेः कृते विरचितः ग्रन्थोऽयं लोकसुखाय जातः।

**रसपरिपाकः**- लक्ष्मीलहरी लक्ष्मीं प्रति सरसलहरीणां प्रवाहमिव राराजते। अत्र भक्तिरसस्य प्राधान्यं विद्यते। भगवती आलम्बनविभावः। कविः आश्रयः। भगवतः उदारक्षमता सौन्दर्यञ्च उद्दीपनविभावः। दैन्यं, चिन्ता, धृतिश्च सञ्चारिभावाः। अश्रुपातः विह्वलता चानुभावः एतदतिरिक्तं अद्भुतो रसोऽपि विलसति। अस्याः भाषा भावानुकूला कोमलकान्तपदावलीसमन्विता अस्ति।

गुणः- अत्र माधुर्यगुणः। सुकुमारभावनया व्यञ्जनया च भाषा माधुर्यगुणेन संयुक्ता जाता दीर्घसमासानामभावो विद्यते।
रीतिः- प्रस्तुतेऽस्मिन् स्तोत्रकाव्ये वैदर्भीरीतिः वर्तते।
अलङ्कारयोजना- सर्वत्र अनुप्रासस्य छटा जनानां मनांस्यावर्जयति। 'द' वर्णस्यानुप्रासः द्रष्टव्यः। उत्प्रेक्षायाः कान्तिः दर्शनीया।

समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचाम्
अपाङ्गानां भङ्गैरमृतलहरीश्रेणिमसृणैः।।
ह्रिया हीनं दीनं भृशमुदरलीनं करुणया।
हरिश्यामा सा मामवतु जडसामाजिकमपि।।[13]

छन्दोयोजना- अस्मिन् स्तोत्रकाव्ये शिखरिणी विलसति।

सुधालहरी-

वर्ण्यविषयः- भगवतो सूर्यस्य आराधनायां लिखितमिदं स्तोत्रकाव्यम्-

द्रागद्वैतं वितन्वन्स्त्रिभुवनमभितः कौमुदीः कौतुकेन।
न्यक्कुर्वन् मान्द्यमुद्रामथ रजनिरुजां कोकसीमन्तिनीनाम्।।
तन्द्रान्धाध्यसिन्धोरिह विततततैरुद्धानं कराग्रैः।
स्वान्ध्वतं द्युतीनामुदयगिरिशिरश्चुम्बिमार्तण्डविम्बम्।।[14]

रसपरिपाकः- भक्तिरसोऽत्र विलसति।

जीवातुर्जाड्यजालाधिकजनितरुजां तप्त जाम्बूनदाभं।
जङ्गालं जाङ्गिकानां जलधिजठरतो जृम्भमाणं जगत्याम्।
जीवाधानं जनानां जनकमथरुचो जीवजैवातृकादेः।
ज्योतिर्जाज्ज्वल्यमानं जलजहितकृतो जायतां वो जयाय।।[15]

अलङ्कारविधानम्- उपमा-रूपक-उत्प्रेक्षा-भ्रान्तिमान्-तुल्ययोगिता-अनुप्रासादीनां शोभा वर्तते। सर्वत्र समासोक्तिः दृश्यते।
छन्दः- मन्दाक्रान्ता वतते-

विश्रान्तिं ब्राह्मणानां सुखमतिशयितं कामिनां स्थायिलीला-
मुम्भोजानां प्रबोधं कुमुदपरिषदां यश्चिकीर्षन्दयार्द्रः।
निर्यात्यन्तः समुद्रं सकलमपि नृणां भारमाधाय वह्वा
वह्वामह्वामधीशः स भवतु भवतां भूयसे मङ्गलाय।।[16]

अतः समासतः कथयितुं शक्यते मानवजीवनस्य कृते पण्डितराजस्य लहरीपञ्चकं शिवतमाकृतिः वर्तते। वस्तुतः सर्वमपि लहरीकाव्यं आत्माभिव्यक्तये सरलं साधनं भवति।

**सन्दर्भसङ्केतः-**

1. साहित्यदर्पणम्, 6/1.
2. साहित्यशास्त्रम्, मुक्तप्रभेदः, पृ.सं.-324.
3. काव्यप्रकाशः, 1/2.
4. गङ्गालहरी, 2.
5. गङ्गालहरी, 5.
6. गङ्गालहरी, 4.
7. गङ्गालहरी, 36.
8. गङ्गालहरी, 6.
9. गङ्गालहरी, 2.
10. करुणालहरी, 18.
11. करुणालहरी, 13.
12. करुणालहरी, 15.
13. लक्ष्मीलहरी, 1.
14. सुधालहरी, 25.
15. सुधालहरी, 18.
16. सुधालहरी, 23.

■ पत्रसङ्केतः- अध्यक्षः, संस्कृत-प्राकृतभाषा-विभागः, लखनऊविश्वविद्यालयः, लखनऊ।

# आधुनिक-संस्कृत-कवितासु स्त्रीविमर्शः

डॉ. बनमालीबिश्वालः

समग्रं विश्वमिदानीं न केवलं प्राकृतिक-पर्यावरण-प्रदूषणेन ग्रस्तं किन्तु सांस्कृतिक-पर्यावरण- प्रदूषणमपि कश्चन चिन्तनीयो विषयः यतो हि सामाजिकविसङ्गतिरद्य सर्वत्रानुभूयते। आधुनिक-संस्कृतसाहित्ये विशिष्य संस्कृत-कवितासु दलितसमस्या-नारीसमस्या-कृषकसमस्या-बालसमस्यादि-विविधसमस्या अधिकृत्य कवयः इदानीं स्व-स्व-लेखनीः प्रवर्तयन्ति। सम्पूर्ण-संस्कृत-वाङ्मयमाकलयामश्चेत् तत्र प्रतिष्ठितं नारीस्वरूपं दृग्गोचरीभवति। आधुनिक-संस्कृतसाहित्यं न तत्रापवादभूतम्। वैदिककालादद्यावधि नारीणां दशायां जीवनशैल्याञ्च बहूनि परिवर्तनानि परिलक्ष्यन्ते।

वैदिकसाहित्ये, उपनिषत्साहित्ये, पौराणिकसाहित्ये लौकिकसाहित्ये (काव्य-महाकाव्य-कथा-उपन्यास-नाटकेषु) नारीप्रशस्तिः गौरवान्विता वर्तते। न केवलं वेदाध्ययने अपितु यज्ञेऽपि नारी ब्रह्मा-पदमलङ्करोतीति प्रमाणं ऋग्वेदे समुपलभ्यते। समाजे परिवारे च नारी साम्राज्ञीपदमधिगच्छतीति वर्णनमथर्ववेदे द्रष्टुं शक्यते। उपनिषत्सु विदुषीनां नारीणां चर्चा वरीवर्तते। स्मृतिग्रन्थेषु 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः'[1] इति समुद्घोषः नारीविमर्शप्रसङ्गे सम्पूर्णं विश्वं चमत्करोति। पुराणेषु विशिष्य महाभारतस्य शान्तिपर्वणि तथा ब्रह्मपुराणे च नारीं (मातरं गृहिणीं वा) विना गृहमरण्यमिति कथ्यते। गृहिणी गृहमुच्यते इति प्रतिपादयता व्यासेन[2] तत्र गृहस्य परिभाषाव्याजेन समाजे परिवारे च स्त्रीणां महत्त्वपूर्णा भूमिका रेखाङ्किता। तत्र एवमप्युक्तं वर्तते यत् माता पितुरपि श्रेष्ठो गुरुर्मन्यते -

**नास्ति मातृसमा छाया नास्ति मातृसमा गतिः।**
**नास्ति मातृसमो गुरुः .......................... ॥**[3]

तत्रैव पत्नी पत्युः सर्वोत्कृष्टो बन्धुः वर्तते इति कथ्यते-

**नास्ति भार्यासमो बन्धुः नास्ति भार्यासमा गतिः।**
**नास्ति भार्यासमो लोके सहायो धर्मसङ्ग्रहे॥**[4]

ऋग्वैदिक-कालिके भारते नारीणां कृते विशेषाधिकारः प्राप्त आसीत्। ऋग्वेदे पतिप्रियया पत्न्या ईश्वरस्य तुलना कृता वर्तते। अतः संहितासु स्त्री एव गृहमित्युच्यते। अथर्ववेदानुसारं परिवारे एव न किन्तु समाजे नारी साम्राज्ञी पदस्याधिकारिणी भवति। एकतो यत्र मनुस्मृतौ (3.56) 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' इत्युक्तं वर्तते तत्रापरतः वाल्मीकि-रामायणे सामाजिक-मर्यादा-कारणात् मर्यादा-पुरुषोत्तमेन प्रजानुरञ्जनेन भगवता श्रीरामेण देव्या सीतायाः परित्यागोऽपि सम्भवति। एवमेव महाभारते सत्ता-मदेन कौरवैः द्रोपद्याश्चीरहरणमपि प्रसङ्गेऽस्मिन् उल्लेखनीयम्। नारीविमर्श-सन्दर्भे कालिदासस्यापि विचारधारा अत्यन्तं प्रगतिशीला दृश्यते। तस्याः नारी बाला, षोडशी, पत्नी, माता, आराध्या तथा विश्वकल्याणकारिणी च वर्णिता। कालिदासस्य नायिकाः मनसा, वाचा, कर्मणा पत्यै प्रियतमाय वा समर्पिताः सन्ति। *एकस्या एव गृहिण्या नानारूपाण्युद्भावयता क्वचिद्* *"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललितं कलाविधौ"*[5] इति, *क्वचित्* *'स्त्रीणामशिक्षितपटुत्वम्'*[6] *'प्रत्युत्पन्नमतिः स्त्रीणाम्'*[7] इति *तथा क्वचिच्च* *'निसर्गनिपुणाः स्त्रियः'*[8] इति कथयित्वा नारीवर्गस्य प्रशस्तिगानं कृतम्। भवभूतिः अपि जायायामेव कांश्चिदुदात्तान् भावाननुभूय वदति-

**इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-**
**रस्यावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।**[9] इति।

एवमेव सूफी-कवीनामुमरखय्यामादीनां साकीत्याख्या प्रियतमा ईश्वर-रूपा वर्तते इत्यपि वक्तुं शक्यते।

वस्तुतः 16श शताब्देः पश्चादेव स्त्रीः प्रति समाजस्य चिन्तनं भोगपरकमभवत्। एतच्चिन्तनानुसारं नारी काचिद् भोग-सामग्रीरूपेण चित्रिता। एवमेव उत्थान-विकासाभ्यां सह पतनं तथा शोषणं न केवलं भारतीय-संस्कृतौ किन्तु वैश्विक

संस्कृतौ द्रष्टुं शक्यते। परन्तु एतां सामाजिकीं दुःस्थितिं दूरीकर्तुं समये समये सामाजिक-सांस्कृतिक-धार्मिक-राजनैतिकादि-विभिन्नस्तरेषु आन्दोलनमपि जातम्। विभिन्न-भाषा-भाषिषु साहित्यकारेष्वपि नारीदशां प्रति जागरूकता दृष्टा तथा वैचारिकी क्रान्तिरपि आगता।

**नारी-चेतना**- सीमोन आधुनिकनारीवादस्य प्रतिष्ठाता मन्यते येन 'The second sex' (फ्रांसीसी 1946, आंग्ल 1953) इत्यनेन स्वपुस्तक-माध्यमेन सम्पूर्णाय विश्वाय नारीसशक्तीकरणात्मकः सन्देशः प्रदत्तः। परन्तु वस्तुस्थितिस्त्वियं वर्तते यच्चतुःशतवर्षेभ्यः पूर्वमेव मीरया स्त्रीरूपेण पृथगस्तित्वं तथा स्वतन्त्रसत्ता चोद्घोषिता। राजगृहस्य वधूः भगवत्प्रेम्णा उन्मत्तेव मार्गेष्वटन्ती, मन्दिरेषु एकाकिनी गच्छन्ती- आयान्ती, भजनं कीर्तनञ्च कुर्वन्ती तथा नृत्यन्ती गायन्ती च परिभ्रमणं कृतवती। वस्तुतः ज्ञानं गृहान्न प्राप्यते अपितु सत्सङ्गात्प्राप्यते। ज्ञानोपरि तु सर्वेषामधिकारोऽस्ति। सम्भवतः मीरा समयात्पूर्वमेव स्त्रीस्वतन्त्रता अभीष्टा। अत एव उन्मत्ता (बावरी) इत्याख्यां लब्धवती। परन्तु सन्तोषस्य विषयोऽयं वर्तते यत् सा न कदापि पराजयं स्वीकृतवती।

स्त्री-स्वतन्त्रतायां महादेवीवर्मममहोदयाया ईयद् योगदानं वर्तते यत्तस्याः कृते आधुनिकी मीरा तथा भारतीय सीमोन इत्यभिधानमनुचितं न भविष्यति। महादेवीवर्मममहोदयायाः मतमिदं वर्तते यद् विवाहे कस्याश्चिद् व्यक्तेः साहचर्याय इच्छा प्रधाना भवेत्, न तु आर्थिक-समस्याजन्या विवशता। .....स्त्री-विकासस्य चरमसीमा तस्या मातृत्वे भवितुमर्हति, परन्तु एतत् कर्तव्यं सा स्वमानसिक-शारीरिकशक्तिं प्रतोल्य स्वेच्छया स्वीकुर्यात् न तु परवशीभूता सती। तासामेतन्मन्तव्यं वर्तते यत् स्त्रियः विवाहसम्बन्धो अथवा मातृत्वसम्बन्धो निर्णयं ग्रहीतुं तदैव स्वतन्त्रा भविष्यन्ति यावत्ताः स्वावलम्बिन्यो भविष्यन्ति।

सङ्क्षिप्य वदामश्चेत् महादेवी-वर्ममहोदयाया स्त्री-स्वतन्त्रताया अर्थो वर्तते- स्त्रीपुरुषयोः सामाजिकजीवने सामञ्जस्यम्। सा प्रतिहिंसाया वार्तां न करोति। शृङ्खलां त्रोटयितुं यदि कथयति तर्हि बन्धन-मुक्त्योः सीम्नां चर्चामपि करोति।

**आधुनिक-संस्कृत-कवितासु नारी-चेतना**- अद्यतनीया नारी पुरुषाणामिव शिक्षिता सुसंस्कृता च वर्तते। जीवनवृत्तये सचेष्टा सा कुत्रापि गन्तुमागन्तुं च स्वतन्त्राऽस्ति। काव्येऽपि तत्परिवर्तित-स्वरूपस्य चित्रणमावश्यकमस्ति। तच्च परिवर्तितं स्वरूपं पक्षे यत्र पुरातन-परम्पराभिः पूर्णरूपेण बद्धुं न शक्यते तथैवापरतः तत् सर्वथा बन्धनरहितमपि कर्तुं न शक्यते। आधुनिक-संस्कृत-साहित्ये विषय-वस्तु-विधा-भाषा-शैली-शिल्प-छन्दः-भाव-बोधादि-दृष्ट्या नेकानि परिवर्तनानि दृष्टिगोचरीभवन्ति।

आधुनिक-संस्कृत-साहित्येऽपि स्वातन्त्र्यपूर्वसाहित्यात् स्वातन्त्र्योत्तरसाहित्यस्य यः मुख्यो भेदो दृग्गोचरीभवति तदस्ति- पुरातनमूल्यानां विरोधे प्रतिक्रिया तथा नवीन मूल्यानां स्थापनञ्च। आधुनिक-संस्कृत- साहित्येऽपि नारीणां स्थानं न्यूनं न अङ्कितम्। परन्तु यतोहि साम्प्रतिके समाजे नारीणां जीवनशैल्यां प्रभूतं परिवर्तनमागतमत एव साहित्येऽपि परिवर्तनं स्वाभाविकमेव। परिवर्तनं प्रकृत्याः नियमोऽस्ति। तत्प्रभावात् साहित्यं साहित्यकारो वा कथमस्पृष्टो भवेत्? प्राचीन संस्कृत-साहित्ये सर्वत्र आदर्शात्मिका प्रवृत्तिः दृश्यते। किन्तु आधुनिक-संस्कृत-साहित्ये कविः आदर्शस्य संस्थापनं द्वन्द्वात्मके परिप्रेक्ष्ये करोति।

समकालिक-साहित्ये नारीणां विभिन्नसमस्याः यथा- सामाजिक-भेदभावः, यौन-उत्पीडनम्, यौन-हिंसा, गृह-हिंसा, लैङ्गिकी असमानता चेत्याद्युपरि बलं दीयते। अस्यामेव पृष्ठभूमौ प्रस्तुतेऽस्मिन्नालेखे जगन्नाथपाठक-राधावल्लभत्रिपाठी-राजेन्द्रमिश्र- हरेकृष्णमेहेर-हर्षदेवमाधव-रमाकान्तशुक्ल-बनमालीबिश्वाल-भास्कराचार्यत्रिपाठी-हरिदत्तशर्म-इच्छारामद्विवेदी-प्रफुल्ल कुमारमिश्र-सदाशिवप्रहराज-प्रमोदकुमारनायक-रवीन्द्रकुमारपण्डा-प्रमोदचन्द्रमिश्र- नारायणदाशादि-प्रमुख संस्कृतकवीनां कविताभ्य उदाहरणानि प्रस्तोष्यन्ते-

**हर्षदेवमाधवः**- हर्षदेवमाधवः स्व-नवप्रयोगार्थं ज्ञायते। स साम्प्रतिकीं नारीपीडां किञ्चिदेवं प्रस्तौति-

> **स्नानगृहं गत्वा**
> **गृह-क्लेशक्लान्ता वधूः**
> **निःशब्दं रोदिति।**
> **तदा स्नानगृहं**
> **तस्याः पितृगृहं भवति।**[10]

विवाहानन्तरं स्त्री श्वशुरालयं गच्छति तथा आत्मानं कस्मिंश्चित् नव-परिवेशे निक्षिपति। क्वचित् शारीरिक-पीडाभिः, क्वचित् मानसिक-पीडाभिः क्वचित् भवनात्मकपीडाभिश्च तस्याः साक्षात्कारो भवति चेत् न किञ्चिदाश्चर्यकरं तथ्यं भवति। परन्तु तासां पीडानामभिव्यक्तिः स्वजनस्य समक्षमेव सम्भवति यत् श्वशुरालये प्रायः

दुर्लभं भवति। यदा अन्येभ्य: आत्मानं संगोप्य उन्मुक्तं रोदितुं किमपि स्थानमन्विष्यति, तदा स्वाभाविकमस्ति यत् तत् स्थानं स्नानगृहरूपेण सहजलभ्यमस्ति। वस्तुत: कविरत्र अति-सङ्क्षेपेन बहु उदात्तं तथ्यमुपस्थापयति।

समाजे वेश्यानां स्थिति: दयनीया भवति। सा अपि स्थिति: कवे: दृष्टौ न संगोपिता। वासनायूपे बद्धा सा कष्टं तु प्राप्नोति परन्तु मर्तुं न शक्नोति।

**वासनायूपे बद्धा सा दूयते, किन्तु न हन्यते।**[11]

पुरुषै: पीडनमेव नार्या: परिभाषा सञ्जाता। सा एव नारी भवति या केनचित् रामेण त्यक्ता, केनचित् नलेन निर्वासिता, केनचित् दुष्यन्तेन वञ्चिता तथा केनचित् हरिश्चन्द्रेण च त्यक्ता। अत्र कवि: केनचित् इत्युक्त्वा तान् महापुरुषान् प्रति स्वकीयमाक्रोशमप्यभिव्यक्तीकरोति। कवे: भाषायाम्-

**केनापि रामेण त्यक्ता केनापि नलेन निर्वासिता,**
**केनापि दुष्यन्तेन वञ्चिता केनापि हरिश्चन्द्रेण विसृष्टा।**[12]

**भास्कराचार्यत्रिपाठी**- भास्कराचार्यत्रिपाठिनश्चिन्ता एवमस्ति यदद्य एतादृश: समय आगतो वर्तते यत् पौरव: अर्थात् दुष्यन्त: विनयस्य रक्षां न करोति। कवे: अस्यामुक्तौ कालिदासस्योक्ति: (क इह शासति शासितरि... ...) पूर्वपीठिका-रूपेण अनायासं स्मर्यते-

**आगत: खलु काल: कोयम् / पौरवो रक्षति नहि विनयम्।**

**हरिदत्तशर्मा**- हरिदत्तशर्मण: ''पतति दध्नेद्यापि सीता'' इत्यस्यां कवितायां वर्तमान-युगीन- नारीणां स्थिते: विमर्श: एवं प्रकारेण प्राप्यते। रामायणकालिक्या: सीताया अग्निपरीक्षा अद्यापि आलोचनाया: विषयो वर्तते। कवे: मते अद्य नारी प्रतिपदं प्रज्वाल्यते शारीरिक-मानसिकोभय-स्तरयो:-

**कथं कथमपि निगडिता सा परिणयस्य पवित्रपाशे**
**कयापि कापि प्रताडिता परिपीडिता श्वश्रूकाशे।**
**पितृसमै: श्वशुरैर्हृता सा कापि रोदिति बहिर्नीता/पतति दध्नेद्यापि सीता।**

कन्यासन्तानस्यावहेलनमपि अद्यत्वे कश्चन चिन्ताया विषय:। कवि: अस्या: समस्यायाश्चित्रणमेवं प्रस्तौति-

**श्रुतं कन्याजन्म पितृभिर्मन्यते नहि हर्षवेला**
**नोत्सवो नृत्यं न वाद्यं प्र्गणे हेला न खेला**
**सुता जाता वा समस्या घोरचिन्ता वा प्रणीता।/ पतति दध्नेद्यापि सीता।**

**राधावल्लभत्रिपाठी**- राधावल्लभत्रिपाठिना सतीप्रथोपरि व्यङ्ग्यं कुर्वता यल्लिखितं तत् मनुस्मृते: (3. 56) 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता:' इत्येतद्वचनस्य विपरीतगामि प्रतीयते। तस्येयं चिन्ता वर्तते यदद्य वस्तुस्थितिस्तु सर्वथा भिन्ना एव। अद्य सीतानां दाह एवं सञ्जायते यथा राष्ट्राय अन्नं, जलं, बलं सर्वं किञ्चित् तेनैव प्राप्तुं शक्यते-

**यत्र नार्यस्तु दह्यन्ते रमन्ते तत्र देवता:।/ अन्नं जलं बलं राष्ट्रे सीतादाहेन जायते।**[13]

**इच्छारामद्विवेदी**- इच्छारामद्विवेदी प्रणवेन भ्रूणहत्योपरि व्यङ्ग्यं कुर्वता लिखितम्-

**गर्भाधानक्षणपरिचये भारतीया रमण्य:।/ शीघ्रं गत्वा जठरभरदं शैशवं घातयन्ति।**[14]

वस्तुत: क्षणिक-परिचयाद् गर्भाधानं भवति चेदवैध-सम्बन्धो द्योत्यते, यस्य परिणति: न सन्तानोत्पत्तिना किन्तु भ्रूणहत्यया गतार्था भवति। अत्र कालविलम्ब: असह्यस्तथा घातकश्च। अत: शीघ्रं गत्वा इत्युक्ते: सार्थकता। दूतप्रतिवचनेऽपि स मेघ-माध्यमेन नारीणां स्थितिं वर्णयति।

**जगन्नाथपाठक:**- डा. पाठकस्य व्यङ्ग्योक्त्या स्पष्टीभवति यत्स: अद्यतन-सामाजिक-समस्याभि: कियान् व्यथितो वर्तते इति। नारी-असुरक्षा-पराया अस्या: व्यथाया कश्चन सङ्केत: अधोलिखिते पद्ये द्रष्टुं शक्यते-

**परितो दशाननेषु स्वस्वावसरं प्रतीक्षमाणेषु।/ सीतां रक्षितुमेका लक्ष्मणरेखा कियत्प्रभवेत्।।**[15]

कवेः मन्तव्यमेवं वर्तते यद् रामायणकाले एको हि दशाननः (रावणः) मर्यादापुरुषोत्तमं भगवन्तं श्रीरामं त्रस्तीकर्तुं समर्थ आसीत्, परन्तु अद्य अनेकेषु दशाननेषु सीताया दुर्दशा अनुमान-सापेक्ष्या। एका लक्ष्मणरेखा यदि एकस्याः सीतायाः रक्षां विधातुमसमर्था तर्हि परितः स्व-स्वावसरं प्रतीक्षारतेषु रावणेषु सीतां रक्षितुमेका लक्ष्मणरेखा कियती समर्था भवेत्।

**हरेकृष्णमेहेरः**- कवि श्री हरेकृष्णमेहेरः नारीः एव नारीणां शत्रूरूपाः मनुते। वस्तुतः अद्यतने समाजे स्थितिः तथैव दृश्यते। यौतुकहत्यासु पति-श्वशुर-देवरापेक्षया श्वश्रु-ननन्दादयः समधिकतया सक्रियाः निष्करुणभूताश्च भवन्ति। कवेः भाषायाम्-

**नारी एव नारीणां हन्त्री/ कम्पते यथा शम्पापातिन्या लोकहृदयतन्त्री**

**परिणयवेदिकायां युवत्यः/ यौतुकज्वालायामार्जववत्यः वलीभवन्ति विवाहिताः / तथैव सपारुष्यं बहुदूरवाहिता।**[16]

**रमाकान्तशुक्लः**- कविः श्री रमाकान्तशुक्लः रौति ते भारतम् इत्यस्यां स्व-कवितायां एकस्मिन् पद्ये साम्प्रतिक-यौतुक-समस्याः प्रति ध्यानाकर्षणं करोति। मानवरूपीभिः राक्षसैः क्रियमाणं वधू-दहनं सङ्केतीकृत्य कविः कथयति-

**यौतुकप्रेप्सुभिर्लोलुपैर्निन्दितैः/ मर्त्यरूपे स्थितैः राक्षसैः कोटिकैः।**

**दह्यमाना वधूर्वीक्ष्य दुःखेन हा/ रौति ते भारतम् रौति ते भारतम्।।**[17]

कविः अस्यां कवितायां स्त्रीविमर्श-बिन्दुमधिकृत्य विचारान् अग्रे नयति। देहव्यापारे व्याप्तानां नारीणां पारवश्यं तथा दारिद्र्य-गाथा च अधोलिखितपद्ये चित्रिता वर्तते-

**देहपण्याजिरे नूपुराकर्णनैः/ पारवश्याङ्कितैर्नृत्यकृत्यैस्तथा।**

**येन दारिद्र्य-गाथोच्चकैर्गीयते/ तद् व्यथापूरितं रौति ते भारतम्।।**[18]

एकं सद्बहुधा विलोक्यते भारतम् इत्यस्यां कवितायामपि कविः स्त्रीविमर्शोपरि केन्द्रितो दृश्यते, तथा वधू-दहन-समस्याञ्च उत्थापयति-

**क्वापि भवति कुलवधूदाहपापं यदा/ रक्ष्यभक्षणं दुर्बलघातो वा यदा।**

**क्वापि भवति यदि हिंसा क्रीडा दुःखदा/ रोरुदीति करुणं सकलं मे भारतम्।**[19]

अस्मिन्नेव सङ्ग्रहे 'ब्रूहि जगन्नाथस्वामिन्!' शीर्षकाङ्कितायामन्यस्यामेकस्यां कवितायां डा. शुक्लः जगन्नाथमहाप्रभुं साम्प्रतिक-विभिन्न-सामाजिक-समस्या-सम्बद्धान् प्रश्नान् करोति। अस्यामेव कवितायामेकस्मिन् पद्ये कविः कथयति- अद्य तव भद्रजनैः नार्यः अपि न पूज्यन्ते । अर्थात् यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः, एषा अवधारणा अपि समाप्ता।

**दीनाश्च नाद्य नारायणतां गमिता लोके/ नार्यश्च नैव पूज्यन्ते तव भक्तैर्लोके।**

**किं किं दर्शयसि प्रभो जगद्विभक्ततां/ किं भवति जगति ब्रूहि जगन्नाथस्वामिन्!।**[20]

एवमेव भारत-जनताऽहम् इति शीर्षक-कवितायामपि कविः सामाजिक-समस्याः प्रति ध्यानाकर्षणं करोति। बलात्कार-हत्या-अपहरण-चौर्य-सदृशा अपराधाश्चाद्य सामान्याः। कविः कथयति-

**अपि सहे बलात्कारान् हत्या अपहृतीस्तथा तस्करवृत्तीः।**

**न सहे किन्तु देशस्य भङ्गमुन्निद्रा भारत-जनताऽहम्।।**[21]

परन्तु अत्र कवेश्चिन्तनं रूढिवादिपरकं लोकमङ्गल-विरुद्धञ्च। बलात्कार-हत्या-अपहरण-चौर्य- सदृशाः अपराधाः एव देश-विघटने कारणभूताः सन्ति। एतेषां सर्वेषां सहनेन देश-भङ्गस्यासहन-वार्ता रिक्तेव प्रतीयते।

**अभिराजराजेन्द्रमिश्रः**- प्रो. अभिराजराजेन्द्रमिश्र-महोदयाः स्वकीये एकस्मिन् गीते स्त्रीणां वर्तमान-सव्याज-सौन्दर्य-प्रदर्शनोपरि व्यङ्ग्यं कुर्वन्तः दृश्यन्ते। यथा-

**त्रिलोकार्पणं सम्भवं त्वत्कटाक्षे/ क्व याताधुना शाम्बरी यौवनानाम्।।**

गीतस्यायं भावो वर्तते यत् लोकत्रयं तव कटाक्षे आत्मसमर्पणं कुर्वन्नासीत् । परन्तु तव यौवनस्य इन्द्रजालं क्व गतम्। अत्र कवेः आशयस्तु एवं वर्तते यद् वर्तमानसमये कृत्रिम-प्रसाधनानि प्रति स्त्रीणामासक्तिः भर्त्सनयोग्या एव। वास्तविक-सौन्दर्याभावे सव्याज-सौन्दर्यं कथमपि लोकम् आकर्ष्टुं न शक्नोति।

**जनार्दनपाण्डेयमणि:-** जनार्दनपाण्डेयमणि: रागिण्याख्ये स्वगीतसङ्ग्रहे स्त्रीविमर्शमधिकृत्य स्वविचारान् प्रस्तौति। यथा-

**त्वद्रूपे विचरन्ति सहर्षा: / दुर्योधन-दु:शासन-कंसा:।**
**द्रौपद्यो लज्जन्ते नैका: / अच्युत साम्प्रतमपि सद्वंशा:।**
**दुर्जन-दुष्ट-कदम्ब-कमयिते कलावपि श्रीमन् सन्त्रासय**
**माधव दु:खततिं मम नाशय।।[22]**

अनेका: द्रौपद्य: अद्यापि लज्ज्यन्ते लोके। किन्तु दुर्योधन-दु:शासन-कंसाश्च आनन्देन विचरन्ति। अत्र द्रौपदी तु स्त्री-प्रतिनिधि-रूपेण स्वीकृता वर्तते। द्वापर-युगे द्रौपद्या सह यदघटत तस्य कलियुगेऽपि पुनरावृत्ति: भवति। नारिभि: सह अद्यापि दुर्योधन-दु:शासनादय: तद्वद् व्यवहरन्ति। तासां लज्जा अस्मिता चानुदिनं हीयते।

**बनमालीबिश्वाल:-** बनमालीविश्वालस्य रचनासु (कवितासु भवतु कथासु वा) वर्तमान-मानव-जीवनगता: समस्या: मुख्यरूपेण चित्रिता:। वस्तुत: यथार्थता, स्वाभाविकता च तस्य रचनानां प्रमुखा: विशेषता भवन्ति। स यत्रैकत: उपेक्षित-पीडित-पात्राणां व्यथा:, वेदना:, अन्तर्द्वन्द्वांश्च अभिव्यनक्ति तत्रैवापरत: नगरीय-पाश्चात्य-सभ्यतामप्याक्षिपति। तेन विभिन्न-क्षेत्राणां, वर्गाणां तथा च पात्राणां यच्चयनं कृतं तत् पाठकान् सहजमाकर्षयति। तेन व्यक्तिगत-पारिवारिक-सामाजिक-दु:खै: सन्त्रस्ताय मानव-जीवनाय सामाजिकात्याचार-शोषणानां रूपायन-माध्यमेन जीवन्तता प्रदत्ता। एवं तस्य कथ्येषु कल्पना-यथार्थयो: सन्तुलनं मननीयं भाति।

तेन स्व-कवितासु प्राकृतिक-सामाजिक-सांस्कृतिक-धार्मिक-प्रणय-पारिवारिक-सन्त्रासादिनां मार्मिकं चित्रणं विभिन्न-स्थितिषु क्वचित् यथार्थपृष्ठभूमौ, क्वचित् च व्यङ्ग्यात्मक-परम्परया प्रस्तुतम्। व्यथा-यात्रा- ऋतुपर्णादिषु स्वकाव्यसङ्ग्रहेषु कविना आतङ्कवाद-नारीधर्षण-वन्या-वात्या-दुर्भिक्ष-दारिद्र्य-बालश्रमिक-जातिभेदादि-साम्प्रतिक-कालिक-नानाविध-सामाजिक-समस्यानामपूर्वसंवेदना: वर्णिता:। अत्र च कवे: तत्तत्काव्येषु समाजे संस्कृतौ च नारीचेतनामधिकृत्य या: विसङ्गतय: दृश्यन्ते तासां चित्रणमपि दृश्यते।

नारीपीडा कविना अतिनिकटादात्मसात्कृता इति तस्य काव्यानामध्ययनात् ज्ञायते। यत्र तत्र कवि: स्वशाणित-व्यङ्ग्येन शिथिलीभूतां भारतीय-परम्परां तथा चानुदिनं शिथिलतामाप्नुवन्तीं भारतीयां संस्कृतिं प्रति पाठकदृष्टिमाकर्षयति। वस्तुत: यदि कवि: भारतीय-संस्कृतिं प्रति सर्वथा निष्ठापरायण: तर्हि देशीय-संस्कृते: परम्परायाश्च विखण्डनं कथं संसहेत? अत: कवि: पाश्चात्य-परम्परामनुसृत्य सौन्दर्यसचतेसां नारीणां देहसौन्दर्यरक्षणाय स्वसन्तानानामपि दुग्धापान-वञ्चन-प्रवृत्तिं प्रति कटाक्षपातं कृतवान् । समस्येयं प्रस्तुत-कविना इत्थमुपस्थापिता-

**सौन्दर्यरक्षणविधावतियत्नशीला:/ यत्नं विधाय विरमन्ति न मातरोऽद्य।**
**पाश्चात्यरीत्यनुगम: क्रियतेऽद्य देशे/ मातु: पयोधरयुगं न पिबन्ति वत्सा:।।[23]**

वस्तुत: कवेर्मते नारी यावती प्रगतिशीला भवतु नाम मातृत्वं तस्या: कृते अत्यन्तं महत्त्वपूर्णं तथ्यम्। अपरं च शिशो: स्वास्थ्य-लाभाय तथा तद्व्याधिनिराकरणाय च मातृदुग्धस्य उपयोगिता अविमर्शणीया। अत: पाश्चात्यसंस्कृते: अन्धानुकरणमेवास्माकं संस्कृते: कृते सङ्कटमयं प्रतिभातीति कवेराशय:।

विभिन्न-प्रलोभनै: प्रणय-बन्धने च बद्ध्वा प्रेमप्रदर्शनव्याजेन सर्वत्र व्याप्ता: यौनोत्पीडन-व्यभिचार-नारीहत्या-सतीप्रथादि-कुरीती: प्रति प्रस्तुत: कवि: कटाक्षं करोति। कन्याभ्रूणहत्यां तथा स्त्रीणां यौतुक-हत्यां प्रति अपि कवि: स्वकीयं स्वरमुत्तोलयति। समाजस्य घोर-पापमयीषु दृष्टिषु व्याप्तानां कुरीतीनामनावरणं व्यङ्ग्यात्मक-चित्रण-माध्यमेन कृतमस्ति कविना-

**प्रीतिनाम्ना यौनव्यभिचार:/ सतीनाम्ना नारीहत्या, प्रतिप्राणं रुधिरपिपासा/ तथापि स्वाधीना।[24]**

साम्प्रतं भारतीय-संस्कृतौ धर्म-अर्थ-काम-मोक्षानां चतुर्णां पुरुषार्थानां स्थानमर्थ-कामाभ्यां गृहीतम्। वस्तुत: अद्य अर्थ एव पुरुषार्थो वर्तते। केवलमर्थलाभाय पतिना सह यौतुकलोभिभि: श्वशुरालयस्यान्यै: सदस्यै:

नववधूनां हत्या क्रियते। पतिसुख-नाम्ना नार्यः अद्यापि एकविंशशताब्दे जीवनान्त-पीडानां शरव्याः भवन्ति। यथा तथापि स्वाधीनाः इत्यस्यां कवितायां कविः वदति-

**अर्थ एव पुरुषार्थोऽद्य नवोढापि संसहते यौतुकयातनाम्।**
**सुमहार्घं पतिसुखं प्रतिग्रहं जीवद्दग्ध्वाः निर्ममदहनं तथापि स्वाधीनाः।।**[25]

वर्तमानसमाजे प्रचारमाध्यमेनैव वस्तु-विपणनं भवति। यः प्रचार-प्रसाराभ्यां यावता व्यापक-रूपेण ग्राहकोपरि प्रभावं विस्तारयति स तावान् कुशलो व्यापारी कथ्यते। अतः वणिग्भिः विभिन्नप्रकार- विज्ञापनेषु अर्धनग्न-स्त्रीणां प्रयोगः क्रियते। एतेन कदाचिदेतदपि न ज्ञायते यत् कस्य वस्तुनः विज्ञापनं क्रियते- स्त्रीणां यौवनस्य अथवा कस्यचिद् विपणन-वस्तुनः। कदाचित् पुरुषाणाम् अधोवस्त्रस्य तथा च क्षौरोपकरणस्य विज्ञापनेपि स्त्रेणामेव चित्रणि संयोज्यन्ते। स्वर्णहारस्य विज्ञापने एतदपि न प्रतीयते यद् विज्ञापनं स्वर्णहारस्य भवति अथवा नारी-वक्षस्थलस्य। वस्तुतः अद्यत्वे स्त्रियः पदे पदे विपणिसाधनभूताः दृश्यन्ते। प्रायः व्यापारेषु स्त्रीणामुपयोगः ग्राहकाणामाकर्षण-केन्द्र-रूपेण भवतीति महदाश्चर्यम्। एतदेव तथ्यं कवेः विज्ञापनम् इत्यस्यां कवितायां स्पष्टीभवति-

**किं विज्ञाप्यते नारीणां यौवनम्, उत किञ्चिद् विपणीयं वस्तु,**
**पुरुषाणां क्षौरोपकरणम्, नारीदेहस्तत्रापि माध्यमः,**
**पुरुषाणाम् अधोवस्त्रम्, विज्ञाप्यते हन्त नारीदेहे।**
**विज्ञाप्यते केशतैलम्, परं हन्त! विज्ञापनं युवतीनां वर्तुलस्तनयोः,**
**न जाने च किं वा विज्ञाप्यते नारीवक्षोऽथवा स्वर्णहारः? /**
**चलचित्रं प्रचलति अभिनेत्रियौवनमाश्रित्य, /**
**यावतीय-जन्मनियन्त्रण-साधनेषु, / प्रख्याप्यते नारी-नग्नचित्रम्।।**[26]

भारतीय-परम्परायाम् अहिल्या-द्रौपदी-तारा-कुन्ती-मन्दोदरीणां स्थानं पञ्च-कन्यारूपेण स्वीकृतम्। प्रतिदिनं यासां स्मरणमात्रेण यद्यपि स्त्री सौभाग्यवती भवितुमाशीर्वादं प्राप्नोति। परन्तु व्यथितः प्रगतिशीलश्च कविः ता एव विचारकेन्द्रे स्थापयित्वा नारीणां सतीत्व-सिद्धान्तं विमृशति-

**कुन्ती सती, वरयित्वा चतुरः पुरुषान्, सत्यपि भर्तरि।**
**द्रौपद्यपि सती, भूत्वा पञ्चपुरुषाणां पत्नी,/ तारा तथा मन्दोदरी सती, परिणीय स्वदेवरौ,**
**अहल्यापि सती रमिताऽपि परपुरुषेण।**
**का तावत् परिभाषा सत्याः? स्वेच्छया वाऽनिच्छया/ जीवन्मृत्युः स्वामिचितानले, राजस्थाने रूपकँवरि यथा,**
**अथवा सा चौका सती, या बहुपुरुषरता/ प्रतिपदं सत्यं च संगोप्य धारयति सती-छद्ममुखम्।**[27]

वस्तुतः प्रस्तुतः कविः सर्वदा स्वकवितासु नारी-शोषणं विरुद्ध्य एव स्वरमुत्तोलयन् दृश्यते। 21-तम-शताब्द्यामपि नारीणां वस्तुरूपेण स्वीकृतिः उपयोगश्च कविमाश्चर्यचकितं करोति। ऋतुपर्णा-काव्यसङ्ग्रहे जाया-कवितायां कविः प्रस्तौति समाजस्य निम्नोच्चस्तरेषु सर्वत्रैव नारीनिर्यातनस्य मर्मन्तुदं चित्रम्। यत्र तत्र अद्यापि दुःशासनरूपिभिर्नरपशुभिः पाञ्चाली-सदृश्यः असंख्याकाः स्त्रियो विवस्त्राः भवन्ति। नारीविवशतायाः पराकाष्ठा एवं चित्रिता लभ्यते-

**न सा व्यक्तिः किन्तु काचित् सृष्टिः/ पत्यै अर्पयति देहं। /**
**न प्रतिवदति तस्य / ह्वीस्कीपानजन्यं मुखगन्धम्।।..........**
**संसहते प्रेम नाम्ना नित्यमत्याचारम्। / सहतेऽपि प्रताडनं प्रतिवादोत्तरम्।**[28]

तत्कवितासु अन्ये अपि विभिन्न-नारीविमर्श-प्रसङ्गाः स्पष्टं चित्रिताः दृश्यन्ते। यथा ऋतुपर्णा- काव्यसङ्ग्रहे नारी नारायणी कवितायां कविः आधुनिक-नारीणामालोचनां कर्तुं पश्चात्पदो न भवति-

**अद्य किन्तु स्थितिर्भिन्ना / द्रौपद्यास्तत्केशपाशे / दुशासनो मण्डयति स्नेहात् पुष्पगुच्छम्।**

**हसन्ती सा प्रतिदाने वदति द्रौपदी / थैंक यू इति।.................**
**अद्य सीताः त्वत्सदृश्यः / स्वसतीत्व-प्रमाणार्थं खादितुं विवशाः/**
**गर्भनिरोधकास्ताः गोलिकाः।**[29]

केवलं नारी एव न, किन्तु देव्यः अपि अद्य दानवसदृशानां दुष्ट-जनानामाकाङ्क्षाः पूरयितुं विवशा दृश्यन्ते इति कवेः कल्पना वर्तते। वस्तुतः अत्र कविना नारी एव देव्याः प्रतीकरूपेण स्वीकृता वर्तते-

**असहायाऽप्यद्य दुर्गा / आकाङ्क्षास्ताः पूरयितुं महिषासुरस्य।**[30]

साम्प्रतिके युगे विश्वे सर्वत्र नारीमुक्तेः नारीप्रगतेश्च शङ्खनादः श्रूयते। पुरुषप्रधानेऽस्मिन् समाजे नैकाभिः समस्याभिर्जर्जरिता नार्यो बहुप्रकारैश्छलिताः शोषिताश्च भवन्ति। केचिद् दुराचारिणस्ताभिः सह पशुवदाचरन्तः सन्ति-

**अबोधबालाः वत कामनायास्त्वलीकपूर्त्यै छलयन्ति नित्यम्।**
**समाजकीटाः खलु कामरक्ताः / मनुष्यरूपेण मृगाश्चरन्ति।।**[31]

क्वचिदुदरज्वालाशमनाय स्त्रियो धनिकवर्गस्य हस्ते आत्मानं समर्पयितुं विवशाः भवन्ति। अतो मुहूर्तकं यावत् पातिव्रत्यधर्मस्तासां समीपे गौण एव प्रतिभाति। समुद्र-तटस्थितानां धीवरस्त्रीणां जीवनचित्रोपस्थापनप्रसङ्गे कविनोक्तम्-

**सुदिनेषु काष्ठचौर्यवृत्तिः / दुर्दिनेषु पुनः / नागरीयविलासिनां / धनिकानां पर्यङ्के शरणम्, / पतिव्रताधर्मः गौणस्तदा / ध्येयं यतः उदरपोषणम्।**[32]

कन्याभिः वंशरक्षा न भवतीति धारणा अद्यापि समाजे वरीवर्ति। एतेन पुत्रसन्तानं प्रति पक्षपातो दृग्गोचरीभवति। कन्यासन्तानग्रहणे मातृपित्रोः या स्वाभाविकी अनीहा वर्तते तादृशीं विषमतां विरुद्ध्य कविना विद्रोहो घोषितः-

**इदानीमपि सक्रियः / समाजेऽस्मिन् पुंसु पक्षपातः, /**
**.....चलिष्यन्ति कियन्ति दिनानि / एकविंशशताब्द्यां च कन्यापुत्रवादः।**[33]

**प्रफुल्लकुमारमिश्रः**- प्रफुल्लकुमारमिश्रस्य कवितासु नारीविमर्शस्य एकं नवीनं स्वरूपं चित्रितं वर्तते। आधुनिक-नारीणां स्वरूप-वर्णने सः कुत्रचित् साहसी अपि प्रतीयते। जामातुः आगमने 'श्वश्रूः क्लान्ता महानसे' कथयित्वा कविः गृहकार्ये नारीशोषणं प्रति सङ्केतं करोति। कोषः श्वशूरस्य शिथिलो भवति परन्तु श्वश्रूः पाकशालायां क्लान्ता तिष्ठति। अत्र पुरुषाणां धनोपार्जन-दायित्वं तथा स्त्रीणां गृहकार्यदायित्वमपि द्योत्यते : श्वशुरस्य कोषः शून्यः, श्वश्रूः क्लान्ता महानसे। श्यालीश्यालौ सेवाक्रान्तौ जामाता दशमो ग्रहः।[34]

**'तव निलये' इति कवितायामपि कविः स्त्रीणां गृहकार्यदायित्वं प्रकारान्तरेण व्यक्तीकृतवान्-**
**अपराह्णे प्रलम्बिते / विद्यालयं बालेषु गतेषु / भजनं भोजनं च सम्पादिते /**
**द्वारि च्छन्दपद्धयां मध्ये लग्नैकहस्ता / वामहस्तलग्नमुखं / कपाटोपरि प्रलम्बते।**[35]

कुत्रचित् कविना श्रीमिश्रेण स्त्रीणां परपुरुषासक्तिरपि अभिव्यक्ता-

**गतदिवसे समागतस्य विटस्य / सुखकरं स्मरणं कुरुते।**[36]

अत्र कुत्रचित् स्त्रीभिः पुरुष-प्रवञ्चनाया अपि वार्ता आगता : अथवा / रतीश्वरी/ समागतस्य पुरुषस्य / मुखमवलोक्य / मृदु हसति / हसन्ती आकर्षयति / आकृष्य जाले पातयति।[37]

स्त्रीणां मातृत्वाधिकारोऽपि महत्त्वपूर्णः। तेन तादृश्यः स्त्रियः धन्याः मताः याः क्रोडेषु बालान् गृहीत्वा स्तन्यपानं कारयन्ति तथा तदन्याश्च स्त्रियः पीडिताः भवन्ति-

**बहुप्रतीक्षानन्तरं देवी जाता पुत्रवती / बालः क्रीडति क्रोडे यस्याः / चुचुकाग्रचुषितमुखः /**
**सा वनिता धन्या / हा पीडिताश्चान्याः।।**[38]

**सदाशिवप्रहराजः**(24.8.1937)- सदाशिवप्रहराजः स्व-स्तुतिमालिकायाः 'देव देव जगन्नाथ नाम तव निरर्थकम्' इत्यस्यां कवितायां नारी-समस्याभिः व्यथितः सन् लिखति-

स्वामी-श्वशुरादयः अद्य अर्थकामिनः राक्षसाः सञ्जाताः। अद्य सरला वध्वः स्वश्वशुरालये प्राणान् त्यजन्ति। अतः हे प्रभो तव एतत् जगन्नाथ नाम निरर्थकम्-

**राक्षसाश्चार्थकामा वै स्वामी च श्वशुरादयः। म्रियन्ते सरला वध्वो नाम तव निरर्थकम्॥**

**युवका वै युवत्यश्च कर्महीनाः सुशिक्षिताः। निराशाः खलु ते सर्वे नाम तव निरर्थकम्॥**[39]

**प्रमोदकुमारनायकः**(27.04.1965)- डा. प्रमोदकुमारनायकः स्वकाव्यसङ्ग्रहे दारिद्र्यशतकम् इत्यत्र एषा चिन्ता व्यक्तीकृता यत् महाभारत-कालादद्य यावत् ताः पुरुषैः वञ्चिताः भवन्ति-

महर्षेः अवर्त्तमाने / सुकुमार्य्याः रूपवत्याः सौन्दर्येण / आकृष्टः नरेशः/ तन्वङ्गीकरकमले मुद्रिकां संस्थाप्य/ पत्नीत्वेन स्वीकुरुते पावने आश्रमे। / प्राप्तयौवना सुन्दरी महर्षितनया / समर्पयति आत्मानम्/ आदिमक्षुधानाशाय राजपत्नीगौरवाकाङ्क्षिणी / समाप्य वनविहारं मृगयाव्यापारं / प्रत्यावर्तते नरेन्द्रः / परित्यज्य वनकन्यां / क्षणकालस्य सङ्गिनीम् / इतः पूर्वं त्यक्ता यथा शतशः ललनाः।[40]

**रवीन्द्रकुमारपण्डा**(10.01.1963)- ओडिशा-प्रदेशस्य कविः रवीन्द्रकुमारपण्डा केवलं नारिशक्तेः शुक्लपक्षं पवित्रपक्षमेव न अपितु दूषणपक्षमपि सङ्केतयति। कवेः वक्तव्यं वर्तते यत् सर्वासु स्थितिषु नारी विश्वसनीया न भवति। वाराङ्गनानां समक्षं हृदयोन्मोचनस्य औचित्यं न वर्तते। कवेः भाषायाम्- वाराङ्गनानां पुरतो / न वयमुन्मोचयाम हृदयम् / शिखण्डिनां सविधे / न वयं वर्णयामो प्रतिभाया महत्त्वम् / नपुंसकानामग्रे / न वयं वेदयामो बीजस्य वेदनाम्[41]।

**प्रमोदचन्द्रमिश्रः**(03.08.1956)- व्योमयानयात्रा-शतके डा. प्रमोदचन्द्रमिश्रः नारीणां स्वावलम्बनशीलतां प्रोत्साहयति। नार्यः अद्य सर्वविधासु वृत्तिषु आगच्छन्ति। एयरहोस्टेस इत्यादिपदेष्वपि स्वप्रभुत्वं प्रतिष्ठापयन्ति तथा स्वशारीरिकसौन्दर्येण तथा कोमल-प्रिय-व्यवहारेण यात्रिणः प्रसादयन्ति-

**कालेऽस्मिन् परिचारिका सुवदनाः स्मेराननाः शोभनाः/ गौर्यश्चञ्चललोचना सुवचना रम्येक्षणाश्चाङ्गनाः।**

**यात्रिभ्यः सह धन्यवादवचनैः कार्तज्ञमाज्ञापयन्/ सर्वो यात्रिगणः प्रफुल्लमनसा यानाद् बहिः प्रस्थितः।**[42]

**नारायणदाशः**(25.06.1972)- स्वकवितासु नारायणदाशः नारीविमर्श-प्रसङ्गे स्वकीयं स्वरमुत्थापयति। वडौदातः प्रसारितायाम् 'वर्तमान-वार्तापत्रम्' इत्याख्यायामन्तर्जाल-पत्रिकायां प्रकाशिता तस्य कविता गणधर्षणम् अत्र उल्लेखमर्हति-

**समाजकीटैः/ कृतं गणधर्षणं/ सुसभ्यतायाः॥/ सर्वकारस्तु/ जनैः परिचाल्यते/ नीलशृगालैः॥**

**को वा रक्षेत्/ आरक्षी वा जनता/ व्यग्रशकुनम्॥/ कायेन वाचा/ मनसेन्द्रियैः दृढाभिः/आत्मानं रक्षेत्॥**

**गीतावचनं/ धरेदात्मनात्मानं/ मनोदार्ढ्येन॥/ तथापि देशः/ श्वसिति नववर्षे/ गणधर्षणैः॥**[43]

**उपसंहारः**- एवं प्रस्तुते आलेखे आधुनिक-संस्कृत-कवितासु स्त्रीविमर्शः इति विषयमधिकृत्य कश्चन आलोकपातो विहितः। सामाजिक-विसङ्गतिः प्रति आधुनिक-कवीनां जागृता चेतना विशिष्य स्त्रीविमर्श-प्रसङ्गे अत्र विवेचिता वर्तते। साम्प्रतिक-समाजस्य पापमय्यां दृष्टौ व्याप्तानां कुरीतीनाम् अनावरणं कर्तुम् अद्यतन-कविभिः प्रायः व्यंग्य-शैली आश्रीयते। अत्र केषाञ्चित् प्रमुख-कवीनां काव्येभ्यः उदाहरण-माध्यमेन सांस्कृतिक-पर्यावरण-चेतना-व्याजेन बहुविधाः सामाजिक-समस्या विश्लेषिताः।

पुरुषेण नारी-चरित्रस्य वर्णनमधिकमादर्शमयं भवितुमर्हति, परन्तु अधिकं तथ्यात्मकं न। तच्च विकृतेरधिकतमं नैकट्यं प्राप्तुं शक्नोति परन्तु यथार्थस्यातिशयसामीप्यं नैवाप्तुमर्हति। पुरुषाणां कृते नारीत्वमनुमानं भवति परन्तु तत् नारीणां कृते कश्चन अनुभवः। अतः स्वजीवनस्य सजीवं चित्रणं कर्तुं यथा काचित् नारी प्रभविष्यति तथा कश्चन पुरुषः बहुसाधनानन्तरमपि कर्तुं शक्नुयात् न वेति सन्देहः।

**सन्दर्भसङ्केतः-**

1. मनुस्मृतिः, 3.56
2. महाभारतम्, शान्तिपर्व, 144.6

3. महाभारतम्, शान्तिपर्व 342.18, आदिपर्व 131.16
4. महाभारतम्, शान्तिपर्व 144.16
5. रघुवंशम्, 8.67
6. अभिज्ञानशाकुन्तलम्, 4.22
7. अभिज्ञानशाकुन्तलम्, अङ्कः-5
8. मालविकाग्निमित्रम्, 3.3.4
9. उत्तररामचरितम्, भवभूतिः
10. कण्णक्या क्षिप्तं माणिक्यनूपुरम्, पृ.सं.-49
11. वेश्या, भावस्थिराणि
12. भावस्थिराणि
13. सन्धानम्, पृ.सं.-59, राधावल्लभत्रिपाठी
14. दूतप्रतिवचनम्, 31.2, इच्छारामद्विवेदी
15. जगन्नाथसुभाषितम्, भागः-1, अभिज्ञानशाकुन्तलम्-1, जगन्नाथपाठकः, पृ.सं.-537, पद्यसंख्या-631
16. कविता- महिला, हरेकृष्णमेहेरः
17. रौति ते भारतम्, भारतजनताऽहम्, रमाकान्तशुक्लः
18. रौति ते भारतम्, भारतजनताऽहम्
19. एकं सद्वहुधा विलोक्यते, भारतजनताऽहम्
20. 'ब्रूहि जगन्नाथस्वामिन्' भारतजनताऽहम्
21. भारतजनताऽहम्, भारतजनताऽहम्
22. रागिणी, गीतसङ्ग्रह, जनार्दनपाण्डे
23. मातुः पयोधरयुगं न पिबन्ति वत्साः, सङ्गमेनाभिरामा, बनमालीबिश्वालः, पृ.सं.-17
24. तथापि स्वाधानाः, व्यथा, बनमालीबिश्वालः, पृ.सं.-16
25. तत्रैव, बनमालीबिश्वालः
26. विज्ञापनम्, व्यथा, पृ.सं.-61, बनमालीविश्वालः
27. सती, व्यथा पृ.सं.-89, बनमालीबिश्वालः
28. जाया, ऋतुपर्णा, पृ.सं.-30, बनमालीविश्वालः
29. नारी नारायणी, ऋतुपर्णा, पृ.सं.-30, बनमालीबिश्वालः
30. तत्रैव, बनमालीबिश्वालः
31. मनुष्यरूपेण मृगायचरन्ति, सङ्गमेनाभिरामा, बनमालीविश्वालः, पृ.सं.-18
32. जीवनं महोदधि तटस्य, यात्रा, बनमालीबिश्वालः, पृ.सं.-67
33. पुत्रः, यात्रा, बनमालीबिश्वालः, पृसं.-87
34. जामाता दशमो ग्रहः, प्रफुल्लकुमारमिश्रः
35. तव निलये, प्रफुल्लकुमारमिश्रः, पृ.सं.-53
36. प्रतीक्षा, कोणार्के, प्रफुल्लकुमारमिश्रः, पृ.सं.-2
37. कोणार्के, प्रफुल्लकुमारमिश्रः, पृ.सं.-3
38. कोणार्के, प्रफुल्लकुमारमिश्रः, पृ.सं.-5
39. देव देव जगन्नाथ नाम तव निरर्थकम्, स्तुतिमालिका, सदाशिवप्रहराजः
40. दारिद्र्यशतकम् (काव्यसङ्ग्रहः), प्रमोदकुमारनायकः
41. बलाका-31, रवीन्द्रकुमारपण्डा, बडौदा,
42. व्योमयानयात्रा-शतकम्, डा. प्रमोदचन्द्रमिश्रः, स्रग्धरा, भुवनेश्वर, ओडिशा
43. गणधर्षणम्, नारायणदाशः, वर्तमान-वार्तापत्रम्, बडौदा

■ पत्रसङ्केतः- राष्ट्रियसंस्कृतसंस्थानम्(मानितविश्वविद्यालयः),
गङ्गानाथझा परिसरः, इलाहाबादः।

# संस्कृतसाहित्ये गोस्वामिविट्ठलनाथस्य योगदानम्*

■ **प्रो. रामलखनपाण्डेयः**

जानन्त्येव भवन्तो यद्विट्ठलनाथस्य पिता वल्लभाचार्यः शुद्धाद्वैतं नाम वैष्णवानां पृथगेव दर्शनं प्रादुर्भावयामास। वल्लभसम्प्रदायतया प्रसृतं तद्वैष्णवं वर्त्म विट्ठलदेवेन घण्टापथ इव प्रकाशितम्। 'आत्मा वै जायते पुत्रः' इत्याभाणको मन्ये वल्लभविट्ठलयोर्मध्ये सर्वाधिकां चरितार्थतां याति। 'प्रवर्तको पिता प्रतिष्ठापकश्च पुत्र' इति। प्रतिष्ठापिते सति बल्लभसम्प्रदाये तत्र शुद्धाद्वैतदर्शनं स्वयमेव प्रसक्तम्। द्वैतं तु नैव सम्भवति, अद्वैतेऽपि यत्खलु शुद्धमद्वैतं, तदेव शुद्धाद्वैतमिति कथ्यते। अहो, अद्वैतमपि शोधयितुं दर्शनमिदं प्रवर्तते।

किं सत्यं किमसत्यमिति को वा निर्णायकः? 'ब्रह्म सत्यं जगन्मिथ्ये'ति कथनेन नास्त्युद्धारः। ब्रह्मजगतोर्मध्ये सम्बन्धः कश्चिदस्ति न वा? कार्यकारणभावे सम्बन्धे सति यत्कारणब्रह्म तत्सत्यं, यच्च कार्यब्रह्म तदसत्यमिति कथं वक्तुं युज्यते? तदुक्तं गोस्वामिनो विट्ठलस्य षष्ठपुत्रपरम्परायां काशीस्थगोपालमन्दिरसपर्यानिर्वाहकेण गिरिधराचार्येण शुद्धाद्वैतमार्तण्डे नाम स्वग्रन्थे-

**एतन्मते सुनिष्पन्नं साङ्कर्यं कार्यकारणे।**
**तन्निवृत्त्यर्थमाचार्यैः पदं शुद्धं विशेषितम्॥**

केवलाद्वैतवादिनां मते साङ्कर्यदोषं दृष्ट्वा तद्दोषशुद्ध्यर्थं शुद्धमेव विशुद्धमेव विशेषणमधिकृत्य दर्शनमिदं प्रवर्तते। शुद्धाद्वैतपदस्य व्युत्पत्तिमधिकृत्य तत्रैव प्रोक्तम्-

**शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः।**
**अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः॥**

पूर्वतनपद्ये केवलाद्वैतवादं विनिवार्य शुद्धाशुद्धयोरैक्यं च सन्दुष्य तदुपरि स्वकीया विशुद्धा दृष्टिर्निक्षिप्यते। एतस्मिन् पद्ये च शुद्धाद्वैतपदं व्युत्पाद्यते। द्वितयं समसनं तत्र कर्मधारयेण वा षष्ठीतत्पुरुषेण वा। शुद्धं चेति पदं तत्राद्वैते विशेषणतया प्रयुज्य किंवा शुद्धयोरेव कार्यकारणयोरैक्यं प्रतिपाद्य स्वमतं सम्यगेव मन्येऽत्र प्रकटीकृतम्। तत्र शुद्धं नाम किमिति परिभाषयितुं पद्यान्तरं पठ्यते-

**मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।**
**कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्॥**

शुद्धाद्वैतदर्शने मायावि ब्रह्म स्वीकर्तुं न युज्यते। मायावादस्तु वितण्डावाद एव। अथवा मायादर्शनं ज्ञानैकशरणं भूत्वा स्वात्मानं रक्षतु। तथापि नास्ति निस्तारः। यतो हि ज्ञानमपि शुद्धमशुद्धं वेति विचारणीयमेव। अहङ्कारजनकं ज्ञानं कथं शुद्धमिति वक्तुं शक्यते। निरहङ्कारतया भक्तस्य भगवन्तं प्रति समर्पणमेव विशुद्धं विज्ञानमित्युच्यते। तेन ज्ञानापेक्षया भक्तिरेव बलीयसी।

वल्लभसम्प्रदाये कृष्णपरा भक्तिर्विलसति। कृष्णपरत्वं द्रढयितुमेव भागवतं सविशेषमत्र प्रस्थानतया प्रमाणतया वा गृह्यते। अन्ये वैष्णवाः प्रस्थानत्रयीं (वेदं ब्रह्मसूत्रं भगवद्गीतां चेति) स्वीकृत्य प्रवर्तन्ते। किन्तु शुद्धाद्वैतवादिनः प्रस्थानचतुष्टयीं प्रमाणचतुष्टयीं वा स्वीकुर्वन्ति। तदुक्तं तत्रैव-

---

* *अयं लेखः गोस्वामिविट्ठलनाथस्य पञ्चशतीप्रयुक्ताभिनन्दनग्रन्थतः सधन्यवादमाहृतः।*

**वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि।**
**समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥**

व्यासस्य समाधिभाषा भागवतमहापुराणम्। भागवतं विना भक्तिर्नैव परिपुष्यति। सा च भक्तिः कृष्णपरैव सम्भवति। श्रीकृष्ण एव परिपूर्णं ब्रह्म। परब्रह्मस्वरूपेण श्रीकृष्ण एव वेदपुरुषः। गीतायां तदीयान्येव वाक्यानि। ब्रह्मसूत्रे स एव ब्रह्मीभवति। भागवते स एव भगवानिति व्याकृतः। चतुर्विधेन प्रस्थानेन प्रमाणेन वा ब्रह्मतया स एव श्रीकृष्णः सर्वथा परिपुष्टो भवति। तेन तत्परं पुष्टिमार्गमाश्रित्य प्रवर्तमाना भक्तिरेव युज्यते।

शुद्धाद्वैतदर्शने वल्लभसम्प्रदाये वा य एष पुष्टिमार्गः स वस्तुतो वल्लभद्वारेण प्रवर्तितः शुद्धिमार्ग एव। शुद्धिसम्पादनमेव परमं प्रयोजनं पुष्टिमार्गस्य। कस्य पुष्टिः कस्य च शुद्धिरिति सुमहान् प्रश्नः। कारणब्रह्म कार्यब्रह्म चेति द्वयमपि शुद्धमेवोक्तं शुद्धयोरद्वैतमिति। कथं पुनरत्र शुद्धस्यैव शुद्धिः पुष्टस्यैव च पुष्टिः सम्भवति? 'कार्यब्रह्मणि परम्परिता शुद्धिर्वा पुष्टिर्वा विनिवारयितुं न शक्यत' इति तत्रोत्तरं भवति। कारणब्रह्म सत्तात्मकं सदपि कार्यब्रह्म प्रक्रियात्मकं भवति। प्रक्रियायां परम्परायां वा सांख्यशास्त्रानुकूला सत्कार्यवादिनी शुद्धिर्वा पुष्टिर्वा प्रभवत्येव। शुद्धाद्वैतदर्शनाधारिता ब्रह्मसम्बन्धसाधनपरा भक्तिरत्रैव पुष्टिमार्गे चरितार्था भवति।

तदेवं विशुद्धदार्शनिकतत्त्वोद्भावितं परिपुष्टभक्तिभावनोल्लासितं च गोस्वामिनो विट्ठलनाथस्य संस्कृतसाहित्यं मनाक् परिचाययते। वस्तुतस्तत्र या दर्शनपरा भक्तिरुल्लसति सा क्वापि क्वापि प्रभूतां रसमयतामपि सृजति। दर्शनस्य धरायां रसमयतां बलादालिङ्ग्य विट्ठलस्य भक्तिः क्वचिदासक्तिं क्वचिदनासक्तिं च दधाना राजमार्गे मनोहारिणी प्रतीयते। उच्चावचं सर्वमपि स्वीकरोति, किन्तु कृष्णभावेन। कृष्णस्य भाव एव परिपच्यमानतया मर्यादया पुष्ट्या वा भक्तिरिति भवति। विट्ठलोक्ता भक्तिः कृष्णमयी भूत्वापि मर्यादां परिपालयति।

गोस्वामिनो विट्ठलनाथस्य संस्कृतसाहित्यं क्वचिदेकत्र प्रकाशितं लभ्यते। मुम्बय्यां श्रीवल्लभपीठेन २०५२ विक्रमसम्वत्सरे एकः सङ्ग्रहग्रन्थः प्रकाशमानीतः। तस्य सङ्ग्रहग्रन्थस्य नाम 'सर्वमूलग्रन्थाः' इत्यस्ति। तत्र गोस्वामिवर्यस्य प्रायशः सर्वमपि संस्कृतलेखनं प्रकाशितम्। तत्र लेखने स्वमार्गानुरूपाः विविधाः प्रकाराः सन्ति। ते प्रकारास्तत्र सङ्ग्रहग्रन्थे एकपञ्चाशत् शीर्षिकाभिः प्रकाशिताः।

तत्र मङ्गलकामनया कृतानि स्तोत्राण्यपि सन्ति, सेवाभावनया विरचितानि आरार्तिक्यादीन्यपि सन्ति। भगवन्तं प्रति दश विज्ञप्तयोऽपि सन्ति, स्वाग्रजं स्वसुताँश्चाधिकृत्य विलिखिते द्वे पत्रेऽपि स्तः। एकतस्तु दार्शनिकाः साम्प्रदायिकाश्च सिद्धान्तास्तत्र प्रोद्भाविताः, अपरतश्च शुद्धसमर्पणपरा कृष्णभक्तिः प्रवाहिता। क्वचिदत्र व्रजचर्या, क्वचित् प्रबोधः, क्वचिद् गुप्तरसश्चापि। क्वचिदुपदेशः, क्वचिदादेशश्चापि। क्वापि विद्वन्मण्डनं, क्वापि शृङ्गाररसमण्डनम्। क्वचन भक्तिहंसः, क्वचन भगवद्विरहदंशः। कदाचित् पर्यङ्कगीतिः, कदाचित् स्वप्नविच्छित्तिरपि। एकत्र भक्तिहेतुनिर्णयः, अपरत्र रामकृष्णजन्मतिथिनिर्णयोऽपि। अनेकत्र स्वगतदैन्यप्रकटनं, बहुत्र भगवद्विभूतिवर्णनं चेति विशुद्धाद्वैतमार्गानुरोध ादेकैकशोऽपि विषयोऽत्र संस्कृतेन वचसा साधु प्रकटीकृतः।

विट्ठलीयसर्वमूलग्रन्थत्वेनात्र यद्यपि प्रायशो मूलग्रन्था एव प्रकाशितास्तथापि तिस्रः व्याख्या अपि तदीयतया सङ्ग्रहीतास्तत्र दृश्यन्ते। तद्यथा वृत्रासुरचतुःश्लोकीविवृतिः, न्यासादेशविवरणम्, गायत्रीव्याख्या चेति। सङ्ग्रहग्रन्थे चतस्रः चतुःश्लोक्यः सन्ति। तत्र वृत्रासुरचतुःश्लोकी मूलतो भागवतस्य षष्ठस्कन्धस्यैकादशेऽध्याये वर्तते। तत एव वल्लभसम्प्रदाये गृहीतास्ते चत्वार श्लोकाः सन्ति-

**अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः।**
**मनः स्मरेतासुपतेर्गुणानां गृणीत वाक्कर्म करोतु कायः॥**
**न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।**

**न योगसिद्धिरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे॥**
**अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः।**
**प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम्॥**
**ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः।**
**त्वन्माययाऽऽत्माऽऽत्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात्॥**

विट्ठलीयव्याख्यानुसारेण खल्वत्र भक्तिमार्गस्य पुरुषार्थचतुष्टयः प्रतिपादितः। पुरुषार्थचतुष्टये धर्मार्थकाममोक्षाणां गणना भवति। किन्तु भक्तिमार्गे तदेते पुरुषार्थाः न सम्भवन्ति। धर्मस्तु धर्मिणः, धर्मी च केवलं भगवानेव। भगवतः धर्म एव सर्वत्र प्रवर्तते। अर्थोऽपि भक्तस्य कृते भगवानेव। अन्येन केनापि अर्थेन भक्तस्य किं प्रयोजनम्? कामश्चापि तथैव। भगवतः कामनानुसारमेव भक्तस्य चर्या भवति। तदेवं धर्मार्थकामाख्यं पुरुषार्थत्रयं भगवता स्वयमेव स्वायतीकृतम्। मोक्षनामकं पुरुषार्थं भक्ताः स्वयमेव न स्वीकुर्वन्ति। तस्मादेव च भक्तानां पुरुषार्थचतुष्टयं भिन्नं भवति। तदेव भक्तिमार्गस्य पुरुषार्थचतुष्टयं पूर्वोक्तेपु चतुर्षु श्लोकेषु प्रतिपादितम्। पुष्टिमार्गानुकूलं तदिदं पुरुषार्थचतुष्टयं वल्लभाचार्यः पद्यैनैकेन पुरस्करोति-

**पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि।**
**कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम्॥**

वृत्रो नामासुरो न केवलमसुरोऽपितु सुमहान् भगवद्भक्तोऽपि। तस्य कारणादेव सति काले श्रीकृष्णस्तमिन्द्रं विरुध्नाति। इन्द्रपूजा न्यक्कृत्य गोवर्धनपूजा प्रवर्तते। **द्वितीयायां चतुःश्लोक्यां** तद्वस्तु सूक्ष्मतया सङ्केतितम्। **तृतीयायां चतुःश्लोक्यां** पुष्टिमार्गोपदेशः कृतः। **चतुर्थी चतुःश्लोकी** राधाप्रार्थना- स्वरूपा वर्तते। तत्राद्यः श्लोको यथा-

**कृपयति यदि राधा बाधिताशेषबाधा**
**किमपरमवशिष्टं पुष्टिमर्यादयोर्मे।**
**यदि वदति च किञ्चित्स्मेरहासोदितश्री-**
**र्द्विजवरमणिपङ्क्त्या ·मुक्तिशुक्त्या तदा किम्॥१॥**

**न्यासादेशविवरणं** नाम विट्ठलस्य यद् द्वितीयं व्याख्यानमुपलभ्यते, तत्र न्यासादेशो नाम वल्लभाचार्यस्य स एष श्लोकः-

**न्यासादेशस्तु धर्मत्यजनवचनतोऽकिञ्चनाधिक्रियोक्ता**
**कार्पण्यं वाऽङ्गमुक्तं मदितरभजनापेक्षणं वा व्यपोढम्।**
**दुःसाध्येच्छोद्यमौ वा क्वचिदुपशमितावन्यसम्मेलने वा**
**ब्रह्मास्त्रन्याय उक्तस्तदिह न विहतो धर्म आज्ञादिसिद्धः॥**

वल्लभाचार्यस्य सोऽयं न्यासादेशस्तु गीतायां भगवतः कृष्णस्य वाक्यमिदमाधारीकृत्य प्रवर्तते-

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥**

अत्र गीतोक्तपद्येऽर्जुनं प्रति कृष्णस्य धर्मविषयकं वक्तव्यं शङ्कां जनयति। 'सर्वधर्मपरित्याग' इति वचनं ध र्मविरोधि प्रतिभाति। धर्मविरोधपरां तां शङ्कां सर्वथा निर्मूलयितुमेव वल्लभाचार्येण न्यासादेशः कृतः। विट्ठलीयव्याख्यानुसारेण सर्वेषामपि धर्माणां न्यासः शरणागतौ भवति। शरणागतिरेव वैष्णवानां परमो धर्म इत्युच्यते। शरणागतिरकिञ्चनस्यैव जनस्य सम्भवतीति तादृशीमकिञ्चनतामानेतुं सर्वधर्मपरित्याग इति। अथवा कार्पण्यं दैन्यं वा स्वस्मिन्नुद्भावयितुं, येन

भगवच्छरणग्रहणं स्यात्। निष्कैञ्चन्यं दैन्यं वा शरणागतेरङ्गभूतम्। किंवा शरण्यादन्यत्र नैरपेक्ष्यं जनयितुं तथोक्तम्। यद्वा निजेच्छया निजोद्यमेन वा लक्ष्यं दु:साध्यमेवेति भगवदिच्छया जीवनं जीवितुं तदुक्तम्।

अत्रोच्यते लोकवेदोभयधर्मवादिभि:। धर्मस्तु धर्म एव। शरणागतिरपि भवतु धर्म:। तथापि शरणागतिरूपस्य धर्मस्य कृते लोकवेदसम्मतानां धर्माणां परित्याग इति यदुच्यते तदस्माभिर्बोद्धुं न पार्यते। कथं धर्मस्य कृते धर्मस्य परित्याग इति वक्तुं शक्यते? अथ च सर्वधर्मपरित्यागे सति कस्तदतिरिक्तधर्मोऽवशिष्यते? अत्र वल्लभीया: स्वपरविवेकपुर:सरं पुन: प्रत्युत्तरन्ति। तदनुसारेण 'स्वधर्मे निधनं श्रेय: परधर्मो भयावह' इति भवगद्वचनं भक्तिमार्गेऽपि युज्यत एव। परधर्मास्तत्र परित्याज्या:, शरणागतिस्वरूप: स्वधर्मश्च सर्वथा स्वीकरणीय एवेति।

भक्तिमार्गस्य स्वपरविवेकं परिपालयद्भिर्विपक्षिभिरुच्यते यदुत्पन्नासु परिस्थितिषु बहुविधानां धर्माणां परस्परं क्वचिदैक्यं सम्भवति न वा? भक्तिवादिनां तत्र यदुत्तरं तदपि विलक्षणमेव। वल्लभीयमतेन तदैक्यं साधयितुमेव भुवि भक्तिराविर्भूता भवति। तदैक्यं समाधातुमेव ब्रह्मवाक्यं सम्भवति **''सर्वधर्मान्....................''** इत्यादि। तत्र शरणागतिस्वरूपो यो धर्म:, स तद्विधैक्यसम्पादने ब्रह्मास्त्रन्यायादमोघ:। स च धर्मो भगवदाज्ञया भगवदादेशेन भगवदुपदेशेन च सर्वथैव सिद्ध: प्रसिद्ध इति।

विट्ठलीये सर्वमूलधरे ग्रन्थे या तृतीया व्याख्या सा गायत्रीव्याख्या विद्यते। तत्र गोस्वामिवर्य: कथयति यत्स्वयं श्रीकृष्ण एव गायत्रीमन्त्रे शब्दब्रह्मतया भासते। निजानां सर्वविधबीजानां प्रसविता सविता नाम देवता स्वयं साक्षात् पुरुषोत्तम एव। इत्येवं वल्लभसम्प्रदायानुसारिणी गायत्रीव्याख्या पञ्चत्रिंशत्परिमितै: अनुष्टुब्भि: कृता।

एतदाश्चर्यं यद्वल्लभसम्प्रदाये भगवद्विरह एव प्रमुखायते। अत एव मूलसङ्ग्रहग्रन्थेऽस्मिन् विट्ठलनाथस्य भगवन्तं श्रीकृष्णं प्रति **दश विज्ञप्तय:** सङ्ग्रहीता: सन्ति। एता: विज्ञप्तय: विट्ठलस्य तानि दश पत्राणि कथ्यन्ते, यानि विरहदशायां भगवन्तं प्रति प्रेषितानि। प्रियेण विरहित एव जन: प्रियं प्रति तद्विधानि पत्राणि प्रेषयति।[1] भगवद्भक्त: सन्नपि जन: कालकर्मादिवशादकस्मादेव पुन: पुन: यद्भगवद्विरहमनु- भवति, तदतीव मार्मिकतया भगवन्तं विज्ञापयति। तेषु च विज्ञापनेषु विरहजन्या तस्य महती पीडा प्रादुर्भवति। वस्तुतो यथा यथा भगवद्विरह: संवर्धते, तथा तथा शरणागति: परिपुष्टतां याति। भगवत: कृपा सर्वप्रथमं भक्तस्य दीनतामेव संवर्धयति। तदुक्तं स्वतन्त्रविज्ञप्तौ तृतीयविज्ञप्तौ[2] च-

**यद्दैन्यं त्वत्कृपाहेतुर्न तदस्ति ममाण्वपि।**
**तां कृपां कुरु राधेश यया तद्दैन्यमाप्नुयाम्॥१॥**

दीनादपि दीनतरो विपन्नादपि विपन्नतर: साधारणादपि साधारणतरो भूत्वा विज्ञाप्यते-

**अद्य श्वो वा परश्वो वा कदाचित् कृपयिष्यति।**
**नाथ इत्याशया सर्वं गतं जन्म, करोमि किम्॥३.१०॥**

विरहं सोढुमशक्त: स कां कां दशां न भजति। कदाचित् सखी कदाचित् प्रेयसी कदाचित् प्रेयस्याश्चरणदासी चापि भूत्वा सकरुणं भगवन्तमाह्वयति। विरहस्यैक: क्षणोऽपि युगायते। तद्यथा सप्तमविज्ञप्तौ-

**वरं मूकीभावो न पुनरपरा काचन कथा।**
**वरं प्राणत्याग: क्षणमपि न तत्सङ्गविगम:॥७.११॥**

कस्याग्रे भक्तस्तां दशां प्रकटयेत्-

**न लब्धस्तादृश: कोऽपि यस्याग्रे स्वमनोगताम्।**
**वार्तामुक्त्वा स्वमात्मानं क्षणं विश्रामयाम्यहम्॥३.९॥**

वल्लभसम्प्रदाये तदीय-त्वदीय-भवदीय-भगवदीय-शब्दानां प्रयोगो बाहुल्येन भवति। तदीयता भगवदीयता वा सर्वोपरि मन्यते। पुष्टिमार्गे तस्याः भगवदीयतायाः स्फूर्तिः स्वत एव भवति। किन्तु यत्र स्वतस्तदीयता नोद्भवति, तत्र पुष्टिमर्यादा प्रवर्तते। पुष्टिमर्यादा लौकिकीमलौकिकीं चोभयविधामनुकूलतां युगपदधिकरोति। वस्तुतो भगवदनुकूलो भूत्वैव जगदनुकूलो भवितुं शक्यते। जगदनुकूलनक्रमे भगवाँस्तथा पुष्टिमर्यादामाविष्करोति, यथा गीतायामवलोक्यते। तदुपपादयितुं विट्ठलनाथेन **गीतातात्पर्यं** नाम लघुलेखो विलिखितः। गीतायामर्जुनः श्रीकृष्णं सारथिं कृत्वापि समराद्विमुखो भवति। तस्य क्षत्रियानुरूपो लौकिको धर्मस्तावदपुष्ट एव तिष्ठति, यावदलौकिकभगवदीय-धर्मेण न युज्यते। यदा पुनः श्रीकृष्णस्य दिव्याज्ञया दिव्यादेशेन दिव्योपदेशेन वा तस्य तदीयता भगवदीयता वा सम्पद्यते, तदासौ 'करिष्ये वचनं तव' इत्युक्त्वा स्वधर्मपालने प्रवर्तते।

विट्ठलदेवेन निजमार्गानुरूपाणि बहुविधानि स्तोत्राणि प्रणीतानि। तत्र **श्रीसर्वोत्तमस्तोत्रं** सर्वप्रथमं स्मर्यते। सर्वोत्तमस्तत्र श्रीकृष्णस्वरूपः शुद्धाद्वैतप्रवर्तको वल्लभाचार्य एव। श्रीकृष्णेन सह वल्लभाचार्यस्य विशुद्धोऽद्वैतभावः स्वीकृतः। श्रीकृष्णस्य मुखाम्बुजादाविर्भावस्तस्य मन्यते। तथाभूतस्य तस्यैव श्रीवल्लभाचार्यस्य नाम्नामष्टोत्तरशतं स्तोत्रेऽस्मिन् पञ्चत्रिंशदनुष्टुब्भिः प्रकाशितम्। द्वितीयं स्तोत्रं **श्रीवल्लभाष्टकं** वर्तते, यत्राष्टाभिः स्रग्धराभिः श्रीवल्लभाचार्यस्य स्तुतिर्विहिता। तृतीयं स्तोत्रं **स्फुरत्कृष्णप्रेमामृतं** नाम शिखरिणीप्रभृतिभिः सप्तभिः श्लोकैर्विहितं वल्लभाचार्यस्यैव कृष्णप्रेमामृतस्वरूपं विवृणोति। **यमुनाष्टपदी** दण्डकायिता गानपरा ध्रुवपदयुता, यत्र शिवकृष्णमिलनान्तरायकारिणी निजनाथमार्गदायिनी यमुना प्रार्थिता। **गोकुलाष्टके** गोकुलसर्वस्वस्य श्रीकृष्णस्य नामसङ्कीर्तनमस्ति। **अष्टाक्षरनिरूपणस्तोत्रे** 'श्रीकृष्णः शरणं मम' इत्यष्टाक्षरमन्त्रस्य निर्वचनं महत्त्ववर्णनं चास्ति। पञ्चपञ्चाशत्पद्यैर्विनिर्मिते **ललितत्रिभङ्गस्तोत्रे** श्रीकृष्णस्य रूपमाधुरी सुललितं वर्णिता। तद्यथा-

**स्वतः सामर्थ्यमप्येतत्त्रिलोकीमोहने बत।**
**स्मितं सहायं सम्प्राप्य यत्करोति न वेद्मि तत्॥**
**तत्रापि चेत्सहायोऽभूदुदारो वेणुनिःस्वनः।**
**त्रिभङ्गस्य त्रिजगति न जाने कीदृशी दशा।**
**विचित्रवेणुतानाब्धितरङ्गान्दोलिताञ्चलम्।**
**स्थिरं वा तरलं वेति नैवाभूदवधारितम्॥**

**व्रजचर्याष्टपदी** चापि स्तोत्रेषु गणयितुं शक्यते, यत्र व्रजस्य चर्या नवनवा क्रियते। विट्ठलदेवः स्तोत्रेषु गभीरां पदशय्यामाविष्करोति। षट्पद इव षड्भिः पद्यैर्विलिखितायां स्वामिनीप्रार्थनायां स एव विट्ठलः प्रार्थनाचाटुकार इव प्रतिभाति। एकं स्वामिन्यष्टकं चापि तेन विलिखितम्। स्वामिनी विशुद्धाद्वैते भगवती श्रीराधा। स्वामिन्यष्टके राधायाः दास्येन परमपुरुषार्थस्य प्राप्तिर्भवति। तस्मादेव विट्ठलकविः पद्यमिदं विलिखति-

**न मे भूयान्मोक्षो न पुनरमराधीशसदनं**
**न योगो न ज्ञानं न विषयसुखं दुःखकदनम्।**
**त्वदुच्छिष्टं भोज्यं तव पदजलं पेयमपि तद्**
**रजो मूर्ध्नि स्वामिन्यनुसवनमस्तु प्रतिभवम्॥**

वल्लभसम्प्रदाये राधा रहस्येन परिपूर्णा विद्यते। श्रीमद्भागवते राधायाः (राधेति) नाम क्वचिदपि नास्ति। तथापि मतेऽस्मिन् राधा स्वामिनी भूत्वा विराजते। सा कदाचित् कृष्णादपि समधिका प्रतिभाति। अत एव गोस्वामिवर्यः स्वामिनीप्रार्थनां विलिख्य स्वामिन्यष्टकं च समुल्लिख्य तदतिरिक्तं तृतीयं स्वामिनीस्तोत्रमपि विलिखति। स्तोत्रेऽस्मिन् स्वामिन्याः दास्यं याचमानः स निजां कामनां प्रकटीकरोति-

**गेहे निकुञ्जे निशि सङ्गतायाः प्रियेण तल्पे विनिवेशितायाः।**
**स्वकेशवृन्दैस्तव पादपङ्कजं सम्मार्जयिष्यामि मुदा कदापि।**

शृङ्गाररसमण्डनं गोस्वामिविट्ठलनाथस्य सुविशालं कृतिरत्नं विद्यते। शृङ्गाररसमयी कृतिरियं भागत्रये विभक्ता। दानलीला रससर्वस्वं दशोल्लासश्चेति। दानलीलायां २०९, रससर्वस्वे २८३, दशोल्लासे च २०० पद्यानि सन्ति। दशोल्लासे शास्त्रीयरागविनिबद्धाः दश गीतिकाः अपि सन्ति। रससर्वस्वे पुनः व्रजचर्याष्टपदी चापि सुनिक्षिप्ता। अथवा व्रजचर्याष्टपदी रससर्वस्वादेव समादाय पृथक्तयापि प्रकाशिता। सम्पूर्णेऽपि शृङ्गाररसमण्डने छन्दसां च्छटा प्रकृष्टा। स्रग्धरा, पृथ्वी, गीतिः, शिखरिणी, अनुष्टुप्, वंशस्थम्, वसन्ततिलका, हरिणी, औपच्छन्दसिकम्, उपजातिः, मालिनी, मञ्जुभाषिणी, मन्दाक्रान्ता, स्वागता, द्रुतविलम्बितम्, शार्दूलविक्रीडितम्, तोटकम्, भुजङ्गप्रयातम्, इन्द्रवंशा, पुष्पिताग्रा, आर्या, इन्द्रवज्रा, शालिनी, पञ्चचामरम्, वैतालीयम्, पदधन्याप्रभृतीनि च्छन्दांसि तत्र भावानुरूपाणि प्रतिभान्ति। त्रिविधासु शृङ्गारवीथिकासु पद्यत्रयं तावदत्र समुपस्थापयिस्यामि। दानलीलायाः वस्तुपरकं प्रथमं पद्यमस्ति-

**मुदा चन्द्रवल्ल्या कुसुमशयनीयादि रचितुं**
**सहासं प्रोक्ताः स्वप्रणयिसहचर्यः प्रमुदिताः।**
**निकुञ्जेष्वन्योऽन्यं कृतविविधतल्पेषु सरसां**
**कथां स्वस्वामिन्याः सपदि कथयन्ति प्रियतमाम्।।**

रससर्वस्वस्य निजागमपरकं द्वितीयं पद्यम्-

**पुरैव जनकात्मजारमणहार्दसम्पादित-**
**स्वभाग्यनिधयो व्रजे प्रकटिता बभूवुः प्रियाः।**
**हरिस्थितिविहारभूरिति विनिश्चयेनोत्तमा-**
**मधिव्रजमकुर्वत स्थितिममन्दमोदायनाः।।**

दशोल्लासस्य प्रथमोल्लासे तृतीयपद्यमस्ति-

**यदैवाविर्भूतश्चिरनिभृतभाग्यैर्व्रजदृशां**
**यशोदायां प्राचीदिशि सकलतारापतिरिव।**
**तदैवासामासीत्सहजरतिरस्मिन् मधुरिपौ**
**परं राधायां स ह्यतिशयितरागः समजनि।।**

रसराजमण्डनपरे विलक्षणेऽस्मिन् भक्तिकाव्ये विट्ठलकविः शृङ्गाराम्भोधौ गभीरादपि गभीरं प्रविशति। एकं वस्तु तत्र पुनरपि विचारणीयं भवति। तद्वस्तु निश्चयेन दार्शनिकम्। शुद्धाद्वैतदर्शनस्य धरातले भक्तिरसो वा शृङ्गाररसो वा युज्यत इति। वैष्णवेषु भक्तिरसपक्षपातिनः सन्त्यनेके। वल्लभसम्प्रदायस्तत्र शृङ्गारप्रियः स्वभावादेव। तदुक्तं तत्र दशमोल्लासे कविनामुना स्वयमपि-

**इति श्रीमद्गोपीजनचरणपङ्केरुयुगा-**
**नुगाभिस्तत्प्रेमामृतजलधिमग्नाभिरनिशम्।**
**बभूवेदं पूर्णं स्मितजितसुधाभिर्विरचितं**
**निकुञ्जे शृङ्गाराभिधरसवरे मण्डनमिदम्।।**

भगवदीयां शृङ्गारप्रियतां प्रकाशयन्ती भक्तिरत्र समधिकतरा प्रतिभाति। भक्तिर्बहुविधा भवति भक्तभावादिभेदतः। तत्र वल्लभसम्प्रदायगतानां भक्तानां भक्तिस्तु प्रेमभक्तिरेव। श्रीकृष्णे अनन्यमयता ममता प्रेमसङ्गता च प्रेमभक्तिरिति दृश्यते। प्रेम्णा विना सेवा न सम्भवति। प्रेम सेवायाः फलमित्युच्यते। भगवत्सेवास्वरूपिणी भक्तिः प्रेमाभिभूता भवति-

**कथं विना रोमहर्षं द्रवता चेतसा विना।**
**विनाऽऽनन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाऽऽशयः।।**

यत्र चैवंविधो प्रेमभावस्तत्र भक्तौ शृङ्गारं को वा वारयितुं शक्नोति। तथापि शृङ्गाररसो वा भक्तिरसो वेति विवादस्तदवस्थ एव।

भक्तिमधिकृत्य विट्ठलनाथेन शोधात्मकं लेखद्वयं विलिखितम्- **भक्तिहेतुनिर्णयः भक्तिहंसश्चेति।** भक्तिहेतुनिर्णये जागतिकं सर्वमपि वस्तु भक्तितत्त्वस्य भक्तिभावस्य वा हेतुतां प्रयाति। भक्तिहंसे विशुद्धाद्वैतस्य भगवदनुग्रहपरा विविक्ता भक्तिरुपपादिता भवति। तत्रत्यं वस्तुविस्तरं विज्ञातुं तल्लेखद्वयं पठनीयम्।

गोस्वामिनो विट्ठलनाथस्य **विद्वन्मण्डनं** तस्य कृतिषु महारत्नमिव चकास्ति। वल्लभसम्प्रदाये दीक्षा ब्रह्मसम्बन्धकारिणी प्रोक्ता। केन ब्रह्मणा सम्बन्ध इत्युक्ते श्रीकृष्णेन ब्रह्मणा सह सम्बन्ध इत्युक्तं भवति। कथं कृष्णः स्वयं ब्रह्म इत्यभियोक्ता वक्तुमर्हति? कथमद्वैतं नाम तत्त्वं तत्र शुद्धतया प्रवर्तते? इति प्रश्नस्तत्र सुतरामुदेति। तस्मादेव गोस्वामिना विद्वन्मण्डनं विरचितम्। वस्तुतः शुद्धाद्वैतदर्शनमेव विद्वन्मण्डनतया परिणतम्। तद्गतवस्तुविवेचनं तु स्वतन्त्रे लेखे सम्भवति।

तथापि विद्वन्मण्डनावलोकनेन प्रतिभाति यदत्र कृष्णभक्तिपरं वैदुष्यं सर्वथैव समर्थितम्। प्रस्थानचतुष्टयीं प्रमाणीकृत्य प्रवर्तमाना श्रीकृष्णपरा विशुद्धा पद्धतिरत्र प्रकाशिता। केवलाद्वैतवादिनां निर्धर्मकं ब्रह्म तिरस्कृत्य सधर्मकं ब्रह्म पर्युपासितम्। मायास्थाने लीला समवतारिता। ग्रन्थान्ते गोस्वामिचरणैरुक्तम्-

**वरीवर्ति श्रद्धा श्रुतिषु यदि वा व्यासवचने**
**तदा विद्वांसोऽस्मद्विरचितमिदं मण्डनवरम्।**
**यथोक्तं कण्ठे वा शुकवदथवाऽर्थे च हृदये**
**मुदा कृत्वाऽऽयत्तं धिनुत रिपुपक्षाभिधतमः।।**

तदेवं 'संस्कृतसाहित्ये गोस्वामिविट्ठलनाथस्य योगदान' मिति तत्कृतिपरिचायकं सङ्क्षिप्तं लेखं विलिख्य तदुपसंहारतया वक्तुं शक्यते यद्गोस्वामिनो विट्ठलनाथस्य संस्कृतसाहित्ये योगदानं यथा सुविशालं तथैव गभीरातिगभीरमपि, यथा च भक्तिभावोद्भावितं तथैव दार्शनिकतत्त्वोल्लासितमपि।

## सन्दर्भसङ्केतः-

1. कृष्णदासाख्येनाधिकारिणा भगवद्दर्शनान्निरुद्धः क्वचिदन्यत्र स्थित्वा विट्ठलनाथो भगवन्तं विज्ञप्तिपत्राणि लिखतीति ग्रन्थान्तरे (चौरासी वैष्णवन की वार्ता) द्रष्टव्यम्। प्रत्येका विज्ञप्तिः पञ्चविंशतिपरिमितैः पद्यैर्विहिता। स्वतन्त्रविज्ञप्तौ 24 नवमविज्ञप्तौ च २६ पद्यानीति विशेषः।
2. विट्ठलीयसर्वमूलग्रन्थे या तृतीया विज्ञप्तिः, सा स्वतन्त्रतया पृथगपि तत्रोल्लिखिता 'अथ विज्ञप्ति'रिति शीर्षकेण स्वल्पेनैव परिवर्तनेन।

■ साहित्यसङ्कायाध्यक्षः, राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.),
लखनऊपरिसरः, लखनऊ

# छन्दःस्वरूपं निरुक्तप्रयोजनं च

■ डॉ. पवनकुमारदीक्षितः

छन्दसः स्वरूपेण निरुक्तस्य प्रयोजनेन वा साहित्यस्य कः सम्बन्ध इति शङ्का न कार्या। छन्दसः सम्बन्धो यथा शब्देन तथैव निरुक्तिरर्थेन सम्बध्नाति। वस्तुतश्छन्दःस्वरूपं निरुक्तप्रयोजनं चेति द्वयमपि काव्यस्य विशेषणम्।

छदिसंवरणे (चुरादिः 1648) धातोः छन्दश्शब्दो निष्पद्यते। त्रयी विद्या छन्दसा एव आच्छादिता विद्यते। छान्दोग्योपनिषदि मृत्युरोधिनी त्रयी छन्दसाच्छादिता प्रोच्यते। तद्यथा- देवा ह वै मृत्योर्बिभ्यतः त्रयीं विद्यां प्राविशन्, ते छन्दोभिश्छादयन् इति[1]। निरुक्तकारः एतदनुरूपं निरूपणं कुरुते ''छन्दांसि छादनात्'' इति[2]। क्षीरस्वामिनः अमरकोशटीकायां ''छन्दयति आह्लादयते इति च्छन्दः'' इति[3]।

छन्दःशास्त्रस्य व्याकरणशास्त्रस्येव वेदाङ्गता विद्यते। छन्दःशब्दस्य छन्दोगशब्देन छान्दोग्यशब्देन च सह सम्बन्धं दर्शयति तत्रभवान् पाणिनिः। तद्यथा ''छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः'' इति[4]।

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥** इति[5]।

इति शिक्षावचनात् छन्दःशास्त्रस्य वेदाङ्गता यतो विद्यते ततश्चास्य चतुर्दशविद्यास्थानमध्यवर्तिताऽपि चकास्ति। यदुक्तम्-

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।**
**वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश॥** इति[6]।

भवति च विद्यानाम् अनादिता। तत एव तु ऋग्वेदेऽपि गायत्रीं प्रारभ्य जगतीपर्यन्तं सप्तानां छन्दसां स्पष्टतया उल्लेखः प्राप्यते।[7] ब्राह्मणग्रन्थेषु अक्षरगणनाधारेण छन्दोनिर्धारणमवाप्यते।[8]

अग्निचयने वेद्याः असंख्यकानाम् इष्टीनां छन्दोरूपता कल्पिता वाजसनेयिसंहितायाम्[9]। मा, प्रमा, प्रतिमाप्रभृतीनां १२ छन्दसाम् उल्लेखः समवाप्यते। मा, प्रमा, प्रतिमा, समा, विमा, उन्मा छन्दसः तैत्तिरीयारण्यके निरूप्यन्ते।[10]

ऋग्वेदे यत्र सप्तानां छन्दसाम् अक्षरात्मकता प्रतिपाद्यते तत्रैव स्तोभमापकता। छन्दःकृत्यमिति प्रतिवर्ण्यते। तद्यथा- गायत्रेण प्रतिमिमीते अर्कम्। इति[11]। यज्ञेषु देवानां यत्स्थानं तदेवच्छन्दसामपि सम्प्राप्यते। तद्यथा-

**स एष यज्ञस्तायमानो देवेभ्यस्तायते.............छन्दोभ्यः।** इति[12]।

विभिन्नानां छन्दसां कृते विभिन्नपशुबलिर्विधीयते।[13] गायत्रीष्टिमध्ये गायत्र्याः ओंकारस्य च कृते नवकपालपुरोडाश-प्रदानं विधीयते।[14]

छन्दसां कृते देविकाशब्दः देवीशब्दः देवतादैवतशब्दश्च प्रयुज्यन्ते।[15] प्रजापतिः स्वयमेव छन्दोरूपतां दधौ अथ च देवानां छन्दोद्वारकं स्वर्गमनमभूत्।[16] वैदिकछन्दःशास्त्रसन्दर्भाः सप्रमाणं यत्र विवेचिताः ते भवन्ति-

1. ऋक्प्रातिशाख्यम् 16-18 पटलेषु
2. ऋक्-सर्वानुक्रमणी
3. निदानम्
4. निदानसूत्रम्
5. पिङ्गलछन्दःसूत्रम्
6. उपनिदानसूत्रम्
7. छन्दोऽनुक्रमणी (वेङ्कटमाधवकृता)
8. जयदेवच्छन्दः (जयदेवकृतः) इति।

पिङ्गलच्छन्दःसूत्रे येषाम् आचार्याणां नामानि उल्लिखितानि ते भवन्ति- 1. तण्डी (3/34), 2. क्रौष्टुकिः (3/29), 3. यास्कः (3/30), 4. सैतवः (5/8), 5. काश्यपः (7/9), 6. रातः (7/33), 7. माण्डव्यः (7/34)।

पिङ्गल-छन्दःसूत्रस्य टीकाकृत् यादवप्रकाशः स्वकृतटीकाया अन्ते श्लोकमुखेन छन्दःशास्त्रपरम्परां प्रतिपादयति। तत्रैका परम्परा- शिवः, बृहस्पतिः, इन्द्रः, शुक्रः, माण्डव्यः, सैतवः, यास्कः, पिङ्गलश्चेति। यदुक्तम्-

**छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां गुरुस्-**
**तस्माद् दुश्च्यवनस्ततोऽसुरगुरुर्माण्डव्यनामा ततः।**
**माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गलस्-**
**तस्येदं यशसः गुरोर्भुवि धृतः प्राप्यास्मदाद्यैः क्रमात्।।** इति।

अन्यापि परम्परोल्लिख्यतेऽत्र। तद्यथा-

शिवः, जुहुः, सनत्कुमारः, बृहस्पतिः, इन्द्रः, पतञ्जलिः (निदानसूत्रकृत्) पिङ्गलश्चेति। तदेवं छन्दःशास्त्रमात्मनि काञ्चन विशिष्टां मर्यादां बिभर्ति। अत एव तु भगवता पाणिनिना 'बहुलं छन्दसि' इत्येवं बहुशः वेदस्य कृते "छन्दस्" इत्येष शब्दः प्रयुज्यते। अथ निर्वचनपरायणस्य निरुक्तशास्त्रस्य वेदाङ्गभूतस्य किमपि वैशिष्ट्यं निगद्यते।

निर्वचनसिद्धान्तः अर्थावबोधे आशयावबोधे च नितान्तमुपयोगी राराजते। ऋग्वेदेऽपि निर्वचनप्रक्रियावीजमवाप्यते। ब्राह्मणग्रन्थेषु तु प्रक्रियाया अस्याः कश्चन विकासविशेषः परिलक्ष्यते। अस्यैव विशिष्टः कश्चन प्रभावो यास्केपु आलक्ष्यते।

निर्वचनसिद्धान्तस्य विषयक्षेत्रं तादृशा एव शब्दाः ये परोक्षवृत्तयः अतिपरोक्षवृत्तयो वा भवन्ति। अत एव प्रत्येकवृत्तीनां शब्दानां निर्वचनं यास्केन न विहितम्।

यत्र व्याकरणप्रक्रियया प्राप्तस्यार्थस्य औचित्यं विहन्यते, धात्वर्थानुगमोऽपि आनुकूल्यं न भजते, तत्र अर्थप्राधान्यबुद्ध्या कृत्साधनेन तद्धितसाधनेन वा शब्दरचना तथा वृत्तिसाम्यपरीक्षणेन वर्णसाम्येन वा निर्वचनप्रक्रिया आलम्बनीया भवति। वृत्तिश्च क्रियागुणस्वरूपा इति केचित्। कृत्तद्धितरूपा इत्यन्ये। धातुनिर्वचनप्रधाना इत्यपरे। जटिलशब्दरचना वर्णानुप्राणिनी इतीतरे।[17]

ततश्चायं निष्कर्षः प्राप्यते यत् व्याकरणेन निर्वचनप्रक्रिया यदा क्रियमाणा भवति विवक्षितार्थलाभश्चेद् जायते तदा निरुक्तशास्त्रीयं निर्वचनं नापेक्ष्यते। व्याकरणशास्त्रप्रक्रियया विवक्षितार्थालाभे तु केनचिद् वृत्तिसामान्येन निर्वचनं विधेयम्। अथाविद्यमाने सामान्ये अक्षरवर्णसामान्याद् निर्वचनं विधेयम्। यावद् विवक्षितार्थप्राप्तिर्न भवति तावन्निर्वचनं शब्दानामावश्यमेव विधेयम्। यदुक्तम्-

"अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येन तद्येषु पदेपु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्। अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्, न त्वेव न निर्ब्रूयात्। न संस्कारमाद्रियेत। विषयवत्यो हि वृत्तयो भवन्ति।" इति[18]।

शब्दरचनामनुविधाय निर्वचनं कार्यमित्यत्र यथा भरः तथा नाम्नां धातुजत्वेऽपि महानादरो यास्कस्य प्रतीयते। यतः प्रभावितो महान् आचार्यः सोऽयमुपजीव्यग्रन्थो भवति। परोक्षप्रिया वै देवाः। तदाधारेणैव मानुषशब्दशब्दनिर्वचनं तत्र प्रतिभाति। तद्यथा-

**यदब्रुन्मेदं प्रजापते रेतो दुषदिति तन्मादुषमभवत्............मादुषं ह वै नामैतद् यन्मानुषमित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।** इति[19]।

अन्यान्यप्युदाहरणानि प्राप्यन्ते निर्वचनप्रक्रियायाः निरुक्तशास्त्रसम्बद्धायाः। तद्यथा-

अग्निस्तोमः = अग्निष्टोमः, ज्योतिः स्तोमः - ज्योतिष्टोमः, चतुःस्तोमः - चतुष्टोमः इति[20] न्युब्जाः = न्यग्रोधाः इति च।[21]

क्वचिद् वैलक्षण्यमपि प्राप्यते। ऐतरेयब्राह्मणे होतृपदनिरुक्तिः आ-वह्धातोः विधीयते[22]। और्णवाभो नैरुक्तः हुधातोः निरुक्तिमेनां सम्पादयन् होतृशब्दः अध्वर्युस्वरूपार्थबोधकः इति समभिप्रैति।[23] आचार्ययास्कस्तु हुधातोः ह्वेधातोर्वा होतृपदनिर्वचनमाध्यमेन ब्राह्मणार्थ-सामीप्यमानयति।[24]

यथा हृदयपदनिर्वचने त्रयः धातवः गृहीताः- हृधातुः, दाधातुः, इण्धातुश्च ब्राह्मणग्रन्थे[25] तथा शाकटायन सत्यपदं निर्वक्ति। अत्र यकारः इण् धातोः निष्पाद्यते, सत् असधातोः निष्पाद्यते तयोः मेलनेन सत्यम् इति निष्पद्यते।

यथा ब्राह्मणकाले अर्थस्यैव प्राधान्यं निभालितं तथैव नैरुक्तैः आधुनिकभाषाविज्ञानविद्भिश्च अर्थप्राधान्यमेवाङ्गीक्रियते। वस्तुतः शब्दसाम्यमकिञ्चित्करमेव भवति अर्थभेदे विवक्षिते। तद्यथा-

1. इष्धातोः इष्टशब्दं निर्माय **न इष्टः** = अनिष्टः इति निष्पद्यते। यज्धातोः क्तप्रत्यये इष्टशब्दं निर्माय **न इष्टः** = अनिष्टः इति अर्थान्तरमेव ब्रूते।

2. अ-वसान शब्दः वस्त्रहीनमर्थं ब्रूते अव-सानशब्दस्तु विश्रामस्थानं ब्रूते।

3. अनुदार शब्दः अन्-उदारः इत्येवं कृपणमर्थं ब्रूते अनु-दारः इत्येवं दारैरनुसृतमर्थं ब्रूते।

शब्दरचनायां विविधाः विकाराः परिवर्तनानि च निरुक्तशास्त्रे प्रतिपाद्यन्ते। तत्र प्रमुखकृत्यानि भवन्ति- धात्वादिविशेषः, अन्तलोपः, उपधाविकारः, वर्णलोपः, आद्यन्तविपर्ययः, आदिविपर्ययः, अन्तविपर्ययः, वर्णागमः, सम्प्रसारणमित्यादीनि च। अद्यत्वे भाषावैज्ञानिकानां कृते एतदुपजीव्यम्, शिरोधार्यं च विद्यते। परिवर्तनं तु क्वचिद् इयदपि जायते येन मूलशब्दस्य परिवर्तितशब्दस्य च मध्ये किमपि अभिज्ञानचिह्नं नावशिष्टं भवति। तदिदमुच्यते-विपयवत्यो हि वृत्तयो भवन्ति।

बहवस्तादृशा धातवो येषां प्रातिपदिकात्मा प्रयोगोऽवलोक्यते वेदे न तु तिङन्तः प्रयोगः। तद्वत् केषाञ्चिद्धातूनां वैदिकसंस्कृते तिङन्तरूपेण प्रयोगोऽवाप्यते नतु प्रातिपदिकरूपेण।

तद्धितान्तशब्दस्य प्रकृतेरपि अवयवा विभाज्यन्ते निरुक्ते। यथा दण्ड्यः इत्यत्र दण्डशब्दः प्रकृतिः यस्याः निष्पत्तिः दम्धातोर्विधीयते। यद् अद्यत्वे भाषावैज्ञानिकैः सम्पृक्तिदोषोऽभ्युपगम्यते तस्य यास्केन कृते निर्वचने उपस्थितिर्विलोकयितुं शक्यते। यदुक्तम्- ककुप्च कुब्जश्च कुब्जतेर्वा, उब्जतेर्वा। कुब्जतेर्वा कौटिल्यार्थस्य, उब्जतेर्वा न्यग्भावार्थस्य, ईषद्भुग्नभावादुभयार्थोपपत्तेः इति[26] (दुर्गः)।

लक्ष्मीशब्दस्य नैरुक्तिकी व्याख्या मनाग् ईक्ष्यताम्- लक्ष्मीर्लाभाद्वा, लक्षणाद्वा, लाञ्छनाद् वा, लषतेर्वा स्यात् प्रेप्सा कर्मणो लभ्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः। इति[27]।

तदेवं निरुक्तशास्त्रस्य यथा उपयोगिता वैदिकानां शब्दानां निरुक्तौ तथैव आधुनिकभाषाविज्ञानमाध्यमेन विश्वभाषाणां स्वरूपावबोधनेऽपि सुतरामवलोक्यते।

**सन्दर्भसङ्केतः-**


1. छान्दोग्योपनिषद्, 1/4/2.
2. निरुक्तम्, 7/12
3. अमरकोशः, 3/2/20.
4. पाणिनीया अष्टाध्यायी, 4/3/129
5. पाणिनीयशिक्षापाठः, 41-42.
6. पा॰ स्मृतिः, 1/3
7. ऋग्वेदः, 8/9/19.
8. ऐतरेयब्राह्मणम्, 1/5
9. वाजसनेयिसंहिता, 14/18.
10. तैत्तिरीयारण्यकम्, 4/5
11. ऋग्वेदः, 1/164/24.
12. शतपथब्राह्मणम्, 1/3/2/6
13. वाजसनेयिसंहिता, 24/24/12.
14. शतपथब्राह्मणम्, 3/4/1/15
15. शतपथब्राह्मणम्, 9/5/1/39.
16. तदेव, 8/2/3/9 एवं 3/9/3/10
17. वेदाङ्ग-कुन्दनलालशर्मविरचिते हिन्दीभाषया इतिहासग्रन्थे, पृ.सं.-209, टिप्पणी-2.
18. निरुक्तम्, 2/1.
19. ऐतरेयब्राह्मणम्, 13/9
20. ऐतरेयब्राह्मणम्, 14/5.
21. तदेव, 35/4
22. तदेव, 1/2.
23. निरुक्तम्, 7/15.
24. तदेव, 4/26
25. शतपथब्राह्मणम्, 14/7/4/1
26. निरुक्तम्, 7/12, 7-8.
27. निरुक्तम्, 4/9


■ पत्रसङ्केतः- सहायकप्राध्यापकः, साहित्यविभागः, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः), लखनऊपरिसरः, लखनऊ।

# नानृषिः कविरित्युक्तम्

■ डॉ. पवनकुमारदीक्षितः

अनुकूलवेदनीयतया सुखमेवाभिलषन्ति जनाः न तु प्रतिकूलवेदनीयं दुःखम्। अथापि आगच्छत्येव दुःखं कदाचिद् विच्छिद्य विच्छिद्य कदाचित्तु अविच्छेदेन कञ्चित् कालं यावत्। तद्वत् अल्पम् कदाचिद् अनल्पं च कदाचित्। तदेवम् अनिच्छताऽपि समागतस्य तस्य तस्य दुःखस्य उन्मूलनाय दुःखोन्मूलने उपायः अन्विष्यते। स चोपायः लोकविज्ञेयः शास्त्रविज्ञेयश्चेति द्विधा विभज्यते। लोकविज्ञेयेन उपायेन औषधादिना दुःखस्यांशिकी निवृत्तिः भवति। कदाचिद् पूर्णनिवृत्तिर्भवति चेत् तदापि दुःखस्य पुनरुत्पत्तिः भवत्येव। तदेवं प्रकृष्टतया चिन्तनेन सुस्पष्टं विज्ञायते यत् दुःखस्य मूलादुन्मूलनं न जायते लौकिकोपायसङ्ग्रहेण न वा पुनर्दुःखानुत्पादो वा। सांख्यदर्शने आचार्यैः निपुणं परीक्ष्य प्रतिपाद्यते- दुःखं त्रिविधं जनैः अनुभूयते- आधिभौतिकम्, आधिदैविकम् आध्यात्मिकञ्चेति। जिहासितस्य चास्य त्रिविधस्य दुःखस्य यद्यपि हानोपायः लौकिकः उपलभ्यते। किन्तु सेवितेऽपि लौकिके हानोपाये अन्नपानौषधिजाते दुःखम् एकान्ततया आत्यन्तिकतया वा निवृत्तं नैव भवतीति। तदेतद् विस्तरशः सुविशदं विचारितं द्वादशदर्शनकाननविहारिणा केसरिणा श्रीवाचस्पतिमिश्रेण। सा चेयं विचारणा यां कारिकामाश्रयति सैषा ईश्वरकृष्णरचिता कारिका जेगीयते-

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततो भावात्॥** इति।

अथ जिहासितस्य दुःखस्य उन्मूलनाय यो विविध उपायः वैदिको भवति तस्य द्वैविध्यमिष्यते- प्रवृत्तिलक्षणो धर्मो यागादिः निवृत्तिलक्षणो धर्मः आत्मदर्शनम् आत्मतत्त्वज्ञानं वा व्यक्ताव्यक्तज्ञविज्ञानं वा साधर्म्यवैधर्म्यद्वारा विविक्तात्मज्ञानं वा।

तत्र यः प्रवृत्तिलक्षणो धर्मः यागादिः मीमांसकसम्मतः, धर्मसाधनं वा यागादिः न्यायवैशेषिकसम्मतः वैदिकः स तावत् बहुवित्तव्ययायाससाध्योऽपि अशुद्ध्या, क्षयेण, सातिशयतया च युज्यमान एवास्ते। अतः ज्योतिष्टोमेन यजेत स्वर्गकाम इत्यादिविधिवाक्याद् बोधितस्य आनुश्रविकस्यापि उपायस्य न तावद् ऐकान्तिकतया आत्यन्तिकतया वा दुःखमुच्छेदहेतुता विलसतीति। ज्ञानात्मक एवोपायः प्रवृत्तिलक्षणाद् धर्माद् व्यतिरिक्तः निवृत्तिलक्षणो धर्मः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्येवमादि श्रुतिवाक्यप्रतिबोधितः उपायः अन्नपानौषधिप्रभृतिभ्यः लौकिकेभ्यः यागप्रभृतिभ्यः वैदिकेभ्यश्चोपायेभ्यो व्यतिरिक्तः अनात्मव्यतिरिक्ततया प्रतिबुद्धः स्वात्मप्रबोधादिरेव उपनिषल्लक्षणश्रुतिवाक्यसमुत्थः पर्यन्ततः त्रिविधदुःखनिवर्तको जयति। सुविशदतया विचारणात्मा सैषा विवेचना निम्नाङ्कितां कारिकामाश्रयते-

**दृष्टवदानुश्रविकः ह्यविशुद्धिक्षयातिशययुक्तः।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥** इति।

एतदुक्तं भवति- परमेश्वरेण भोग्यसृष्टिः भोक्तृसृष्टिश्च विधीयते। तत्र ये भोगाय जीवनमिति प्रतिपद्यन्ते ते शरीरेन्द्रियप्राणादिपरिपोषणाय सततमुद्युक्ता भवन्ति, ये पुनः जीवनाय उज्जीवनाय भोगं नियमयन्ति मनसश्चाञ्चल्यं परिहरन्ति आध्यात्मिकीं चोन्नतिं लभन्ते चेतनतत्त्वाविष्करणेन दुःखसागरमुत्तीर्य निरतिशयसुखभाजस्ते भवन्ति धन्याः।

ये आध्यात्मिकीं समुन्नतिं कामयन्ते उत्तमाधिकारिणां तेषां तु स्वरसतः वेदतन्त्रप्राधान्येन कृतः प्रभुसम्मित-आदेशः परमामुपकृतिं विधत्ते। तेषामेव कृते च उपदेशभूतं नानाविधं शास्त्रं भारतीयैः महर्षिभिः श्रुतिसागररत्नमन्विष्य प्रवर्तितं मनसः शान्तिं विधाय बुद्धितत्त्वसम्पोषणं च विधाय आत्मसाक्षात्कारमप्युपायनीकुरुते। अथ ये मध्यमाधिकारिणस्तेषां कृते सुहृत्सम्मितमुपदेशं प्रदाय नितरामनुग्राहकाणि विभिन्नदैवतान्यपि सत्यैक्यमयानि पुराणानि प्रवृत्तानि। अथ ये सुकुमारमतयस्तेषामप्युपकारभावनया कान्तासम्मितमुपदेशं विधातुं प्रवृत्तानि काव्यनाटकादिभेदभिन्नानि विविधानि काव्यशास्त्राणि

सततप्रवृद्धानि नित्यनूतनानि अद्यापि निर्मीयन्ते। यथा मीमांसाशास्त्रम्, व्याकरणशास्त्रम्, वेदान्तशास्त्रमित्यादि स्वरसतः अभिधीयते तथैव काव्यशास्त्रम्, साहित्यशास्त्रमित्यपि। तत एव तु पद्यरत्नमिदं प्रथते-

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**
**व्यसनेन च मूर्खाणां निद्रया कलहेन वा।।** इति।

व्युत्पत्तिरपि अत्रार्थे आनुकूल्यं भजते। तद्यथा हितेन सह वर्तते इति सहितम्, तस्य भावः साहित्यम्। हितं च वस्तु सर्वस्यात्मैव भवति, स हि निरतिशयप्रेमास्पदं नान्यत्। अत्र च स्फुटार्था श्रुतिः प्रथते-

"आत्मनस्तु कामाय सर्वं प्रियं भवति" इति। साहित्यशास्त्रन्तु शास्त्रान्तरापेक्षया किमपि विशिष्टमेव प्रतीयते। वैशिष्ट्यं किमिति पृच्छायामुच्यते- आत्मनः सम्प्राप्त्यै शास्त्रान्तरेण दूरत एवाङ्गुल्या प्रभुसम्मिताक्षरैर्निर्दिश्य विरतेन भूयते अनन्तरकृत्यमस्माभिः स्वयमेव करणीयं भवति। नेयं स्थितिः साहित्यशास्त्रस्य। सुकुमारमतीनपि हितं हिततरं हिततमं चोपदेष्टुं प्रवृत्तेन एनेन साहित्यशास्त्रेण सहृदयकरग्रहणं सुपेशलं विधाय दुःखार्णवाद् बहिरानयनद्वारा आत्मान्तरङ्गता आनीयते रसाम्भोधौ च निमज्जीक्रियते। तदेवेदमुच्यते कान्तासम्मितया मधुरया वाचा सुधाबिन्दूत्सेचनद्वारा निर्वृतिप्रापणमिति।

तदेवं यथा व्यक्ताव्यक्तज्ञविज्ञानेन आत्मानात्मविवेकेन वा मनसः शान्तिमावेदयति शास्त्रान्तरं तथैव काव्यशास्त्रमपीति सुगमाबोधः न शक्यते अपसपितुम्। तदेवं तत्त्वदर्शनाद् ऋषिरित्यभिधा प्रथते यदुच्यते ऋषिर्दर्शनादिति। ये विचित्रा भावाः यद्वा विलक्षणं तस्य प्रख्यानमेवोच्येते दर्शनमिति। तदेतद् दर्शनं त्रीणि सहायानि वाञ्छति श्रवणं मननं निदिध्यासनं चेति। यदुक्तम्- आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति। तत्त्वदर्शनाद् यथा ऋषिसंज्ञा तथैव कविसंज्ञापि विधीयते। लोके पुनः तत्त्वद्रष्टा तत्त्ववर्णयिता चेद् असौ कविरिति रूढिः प्रथते। तदिदं सुव्यनक्ति भट्टतौतः-

**नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्।।**
**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद् वर्णनाच्चाथ रूढालोके कविश्रुतिः।।** इति।

तदेवं शब्दार्थवपुषः काव्यस्य व्यङ्ग्यार्थो ध्वनिः आत्मा सम्मीयते। वपुर्द्वारा आत्मनोऽप्युत्कर्षं वर्धयन्तः उपमानुप्रासादादयोऽलङ्काराः श्लेषादयः गुणाः प्रसादप्रभृतयः रीतिः वृत्तिः शय्या पाकाश्चेति बहुविधासु काव्यसम्पत्सु व्यङ्ग्यार्थ एवालौकिकसम्पदाराधनीया राधेवाभाति। या कापि काव्यसम्पदतिमधुरा सा यतस्ततः एकैकस्याः कृते आत्मपदप्रयोगः तत्त्वेन प्रतिष्ठा च तत्र तत्र समुपलभ्यते। केचन शब्द एव काव्यम्, अर्थ एव काव्यमित्यपरे, शब्दार्थौ काव्यमिति चान्ये सङ्गिरन्ते। तद्वत् अलङ्कार एवालङ्कृतिरसो वा काव्यस्यात्मा इत्यपरे। ध्वन्यालोककृत् लोचनकृत् प्रकाशकृच्च ध्वनिरेवात्मा काव्यस्येति सयुक्तिप्रतिष्ठापयामासुः।

रसनिष्पत्तिविषये नाट्यशास्त्रस्य सूत्रमेतद् विजयते- 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति। अस्य सूत्रस्य व्याख्या भट्टलोल्लटेन मीमांसकमतमाश्रितवता विधीयते। तद्यथा- आकौमाराद् आच लङ्काविजयाद् दुःखपरम्परां दशरथात्मजो रामो यल्लेभे तदितिहासपुराणादिभ्यो विज्ञायत एवास्माभिः। को वा न जानीते 'प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं व्रजामि विपिनं जटिलस्तपस्वी।' इत्येवमुच्यमानां रामोक्तिम्। विपिनमावसतो रामस्य पितृमरणम्, निशिचरसहवासः, जानकीहरणम्, वानरैः सङ्गप्रार्थनन्, समुद्रलङ्घनम्, उत्कटसङ्ग्रामसहनमित्येवं कष्टपरम्परा, शोकभीतिदुःखपरम्परा च सततमेवानुबध्नाति स्म ज्येष्ठं दाशरथिमिति श्रावं श्रावं वृद्धेभ्यः शास्त्रेभ्यश्चेति। इदमेव कथावस्तु यदा नाटकमाध्यमेन काव्यमाध्यमेन वा अस्माभिरवगम्यते तदा यदस्माकं हृदयं द्रवति, रोमहर्षो वेपथुर्वा जायते अश्रूणि च पतन्ति तदा दुष्प्रवृत्तीन् प्रति द्रोहः, सत्प्रवृत्तीन् प्रति पुनरनुरागः समुदेतीति प्रतीतिप्रत्येयोऽयं विषयः सहृदयानाम्। त्रेतायुगस्य रामः सीता रावणादिर्वा न कलौ कथमपि जीवितं धत्ते। कलाविदानीमस्माभिः तदीया कथा विलोक्यते पठ्यते ज्ञायते वेति द्रोहः अनुरागो वा कथमुदीते। तत्र च न कारणेन विना भाव्यम्। कवेरेतद् वैशिष्ट्यं न तावदेकान्ते न वक्तुं शक्यते- उत्तररामचरितकर्तुः भवभूतेरपि अद्य गतजीवितत्वात्। प्रवक्तुः नटस्य वा काचन अतिशयिता नैपुणी, काव्यस्य नाटकस्य वा सेति कारणतया कथञ्चिदुन्नेतुं शक्या। तत्र यत् काव्यं तत्तु शब्दः, अर्थः तदुभयं वा सदचेतनमेवेति तत्र द्वेषानुरागयोर्जननहेतुता न साक्षादुपपद्यते अपितु रचयितुः कवेरेव कौशलं किमपि स्वीकार्यं भवेत्। यस्तु प्रवक्ता यो वा नटः तस्यापि साधुशिक्षया अभ्यासेन वा हर्षरोषादिजनकत्वमुपपद्यते। तदेवं सहृदयसामाजिकानां हृदयानि

आवर्जयितुम् कञ्चित् कालमवश्यमेव प्रभवति कविरिव प्रवक्ता नटो वा। तदीयान् वर्णप्रवचनाभिनयान् पाटवयुतान् श्रावं श्रावं दर्शं दर्शं वा सामाजिकानां चञ्चलं मनः स्थिरीभवति सांसारिकविषयेभ्यो विरतं च सत् कमपि आनन्दसन्दोहमभिप्रयन्ति। तदेवम् नाट्ये ये नटा अनुकुर्वाणा रामादीनां चरितम् अभिनयन्ति तत्रात्मानं रामादीनिव प्रकटयन्ति। तानेवमाचरतो नटान् रामादिसमानान् अनुभवन्तः सहृदयाः तान् साक्षादुपस्थितान् अनुकार्यानेव मन्वाना भवन्ति।

**अयमत्र विशेषः**- सहृदयः पुराणेतिहासश्रवणादिना शाब्दं ज्ञानं धत्ते। योऽयम् अनुकार्यो दाशरथिः रामः तत्र सीतालम्बनः शोकः विभावानुभावादिना प्राप्तपरिपोष आसीदिति। अथ नाट्याभिनयदर्शनसमकालं रामादिसमानाकारम् अनुकर्तारं नटं यत्पश्यति सहृदयः तस्य उपर्युक्तं शाब्दं ज्ञानम् प्रत्यक्षात्मकमुपजायते चित्तवृत्तौ स्थिरीक्रियमाणायां सत्यामेव नान्यथा। न च नटकौशलेन विना सामाजिकः स्थिरीकृतचित्तवृत्तिः सम्भवति। प्रवाहधर्मिणी चित्तवृत्तिः न कौशलं विना स्थिरतामश्नुते नवा अनुकार्यगतं रसमनुभवन् तृप्तिसमावर्जितमना भवितुमर्हति। तथा चेदमाकूतं भवति- रसो नाम अनुकार्ये रामादौ आश्रितो भवति। नाट्ये सोऽयं रसः कुशलेन नटेन अभिनयमाचरता सामाजिकैः स्वनिष्ठतया रस्यते इत्येवमातिष्ठन्ते भट्टलोल्लटप्रभृतयो मीमांसकाः वाक्यार्थविचारचातुरीदक्षाः। आस्तां तावत् प्रमुखतया अनुकार्ये रामादौ आश्रितो रसः तथापि ये नटाः अनुकर्तारः रामादिभावनाहितचेतसो भवन्ति तेषु रामादिसमानाकारताम् आकलितवतः सामाजिकस्य रसास्वादः न प्रतिहन्यते। या च सम्यक्शिक्षा यो वा अभ्यासातिशयः तेन अनुकर्तुः नटस्य रामादिभावनावेशे नृत्तगीतवाद्यानाम् एकतानतारूपस्य लयस्यानुवर्तनमप्युपपद्यते। अथ सामाजिकः नटाभिनयसामर्थ्यात् 'रामः सीताविषयकशोकवान्', 'रामः सुखी' इत्येवमादिना चित्तवृत्तिविशेषेण समुदितेन सम्यग् आनन्दरसमनुविन्दति। तदेवं कञ्चित् कालं यावद् बाह्यं यज्जगत् तत्सम्पर्कराहित्यं न केवलमभिनेतरि प्रत्युत सामाजिकेष्वपीति रामैकतानमतीनां समेषां सांसारिकदुःखराहित्यमनुभूयते इति आनन्दस्यास्य चमत्कृतिजनकत्वमपि सुतरां सङ्घटते। तदेतत् मीमांसकमतानुयायिनः श्रीभट्टलोल्लटप्रभृतयः सङ्गिरन्ते।

अथ नैयायिकमतमवलम्ब्य श्रीशङ्कुकप्रभृतयः आलङ्कारिकाः अनुकर्तृभूते नटे रामादिगतं भावम् अनुमिनोति सामाजिकः इत्येवमङ्गीकुर्वन्ति। नहि कश्चिदपि सामाजिकः इदं न वेत्ति यद् अनुकार्यः रामादिः नात्र विद्यते इति। प्रत्युत इदमेव विजानाति नट एव रामादिवेषं स्वीकृत्य अभिनयं विधत्ते इति। तदेवं सामाजिकस्य सहृदयस्य चित्तवृत्तिः नटस्य कौशलेन महिम्ना चित्रतुरगन्यायमनुसृत्य अनकर्तरि नटे अनुकार्यस्य रामादेः स्थायिभावमनुमिनोति। तदेवं स्थायिभावविशेषम् उद्दिश्य सामाजिकः सहृदयः नटकर्तृकान् विभावानुभावव्यभिचारिणो यदनुभवति स ताविदत्थम् अनुमितिं प्रमां स्वात्मनि जनयति तद्यथा- अयं नटो रामः, सीताविषयकशोकवान् तत्तदनुकूलोविभावादिमत्त्वाद् इति। एतदेव चरितार्थयति सदुक्तिमिमाम्-प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः इति। तदेवं मीमांसकमते नटे पुरोवर्तिनि अनुकार्यस्य आरोपो विधीयते नैयायिकमते तु पक्षे नटे अनुकार्यस्य रामादेरनुमितिर्विधीयते। न चैतावता वस्तुनि कश्पन भेदः प्रसज्यते प्रकार एव न्यूनाधिकभावः भासते। स च कथं नाट्यरस इति जिज्ञासायां मीमांसका वदन्ति- नाट्यसम्बन्धी रसः नाट्यरसः इति। नैयायिकास्तु नटाश्रयत्वाद् नाट्याश्रयकत्वं रसस्येति नाट्यरस इत्यभिधानं सङ्गच्छते इति वदन्ति। प्रथममते अनुकार्ये रामादौ यद्यपि रस आश्रितो विद्यते तथापि नाट्ये कुशलः नटः अभिनयमाहात्म्येन तं सामाजिकं ग्राहतीति उपपत्तिसहनीया भाति।

यथा यजमानः अध्वर्युप्रभृतीन् ऋत्विजो वृणीते अथ ते कर्माणि मन्त्रोच्चारपुरःसरं कुर्वन्ति। मन्त्रैः देवतानां स्वरूपं प्रकाशते। मन्त्रार्थबोधपुरःसरं अध्वर्युप्रभृतिभिः ऋत्विग्भिः देवतागुणाः कीर्त्यन्ते चेत् कर्मठैः सामाजिकैः सहितो यजमानः यज्ञमण्डपे हविषो ग्रहणाय प्रत्यक्षम् आगतानिव देवान् इन्द्रप्रभृतीन् यदवगच्छन्ति तेन निर्वृतिं काञ्चिल्लभन्ते। यजमानस्य फलस्वाम्यं विशेषः अथ या तु सन्तृप्तिः शान्तिश्च सा तु यजमानस्येव होतॄणां कर्मठानां सामाजिकानां च समानैव भवति। तद्वत् रसस्याश्रयः समवायेन अनुकार्यो रामादिरेव, यां रसास्वादस्तु नटे अनुकर्तरि रामादिभावनाहितचेतसां सामाजिकानामपि समानो भवति। व्यापारः श्रौतः साध्यं, साधनम् इतिकर्तव्यता चेति त्रयम् अपेक्षते- किं भावयेदिति साध्याकाङ्क्षा, केन भावयेदिति साधनाकाङ्क्षा अथ कथं भावयेदिति च इतिकर्तव्यताकाङ्क्षा भवति। ज्योतिष्टोमेन यजेतेति श्रौते व्यापारे स्वर्गः साध्यम्, ज्योतिष्टोमयागः साधनम्, अङ्गकलापश्च इतिकर्तव्यता प्रोच्यते। तथा च भावको वेदः फलकामिनः पुरुषस्य साङ्गेन यागादिना करणेन स्वर्गादिस्वरूपमानन्दं भावयतीति स्थितिः। तद्वत् काव्यं नाटकं वा यद्भावकं विद्यते तदपि प्रत्यक्षव्यापारेण, अनुमानव्यापारेण भोगकृत्त्वव्यापारेण ध्वननव्यापारेण वा साधनेन गुणालङ्कारादिस्वरूपया इतिकर्तव्यता च सामाजिकसहृदयस्य रसस्वरूपम् आनन्दं भावयतीति स्थितिः।

रससूत्रस्य यत् तृतीयं व्याख्यानं प्रथते तत्र न रसस्य प्रतीतिः, न वा उत्पत्तिः न च अभिव्यक्तिराद्रियते प्रत्युत काव्यशब्दे नटशब्दे वा त्रयो व्यापाराः स्वीक्रियन्ते- अभिधायकत्वम्, भावकत्वम्, भोगकृत्त्वं चेति। तत्र अभिधया सामान्यार्थोपस्थितिः भवति, भावकत्वव्यापारेण अभिनयविषयाणां विभावादीनाम् रामसीतादिसम्बन्धपरित्यागः, नायकनायिकासम्बन्धसाधारणीकरणं जायते। अथ भोगकृत्त्वव्यापारेण सामाजिकस्य पुरतः रसस्य भोगः सम्पद्यते। भोगश्चायम् नानुभवः, न स्मरणम्, न प्रतिपत्तिमात्रम् प्रत्युत विलक्षण एवैतेभ्यः। वैलक्षण्ये च त्रीणि कारणानि भवन्ति- द्रुतिः, विस्तारः विकासश्चेति। रजसा चित्तद्रुतौ तमसा विस्तारे च सति उद्रिक्तो विकासः सत्त्वप्राचुर्यमयः सामाजिके सहृदये विगलितवेद्यान्तरतया अवस्थितो भोग इत्याख्यायते। सोऽयं भोगः कुशलेन नटेन प्रकाशितानां विभावादीनाम् यावद् अनुवर्तनं भवति तावद् सामाजिके सहृदये लोकोत्तरमानन्दमनुविन्दयति- अहं रामः सीताविषयशोकवानित्येवमादिकमिति।

रससूत्रस्य पार्यन्तिकं चतुर्थं व्याख्यानम् आनन्दवर्धनप्रवर्तितम् अथ चाभिनवगुप्तपादपोषितं विजृम्भते। नह्येतस्मिन् मते भावकत्वमाद्रियते भोगकृत्त्वं वा। एकेनैव ध्वननव्यापारेण सामाजिकः सहृदयः रसाभिव्यक्त्या सन्तृप्तिं शान्तिं चानुविन्दति। काव्यं नाटकं वा यद्भावकं तद्ध्वननव्यापारद्वारा साधनभूतेन गुणादियोजनात्मभूतया इतिकर्तव्यतया साध्यं रसमानन्दापरपर्यायं भावयतीति नूनं भारती कवेर्जयति। यथोक्तम्-

**नियतिकृतनियमरहितामाह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति।।**

सेयं कविभारती लोकसमृद्धिमिव सम्पदं बिभ्रती सत्यपि अलौकिकीं लोकोत्तरसम्पदं व्यञ्जनां नितरामनुरञ्जयति। तद्यथा-

**शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम्।**
**हारादिवदलङ्कारास्तत्र स्युरुपमादयः।।**
**श्लेषादयो गुणास्तत्र स्वभावा इव रीतयः।**
**शोभामाहार्थि कीं प्राप्ता वृत्तयो वृत्तयो यथा।।**
**पदानुगुण्यविश्रान्तिः शय्या शय्येव सम्मता।**
**रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः।।**
**प्रख्याता लोकवदियं सामग्री काव्यसम्पदः।** इति।[1]

न चैषा भारती कवेः अनृषित्वं न प्रतिषेधति। तत एवाह तत्रभवान् भट्टतौतः-

**नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्।।**
**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद् वर्णनाच्चाथ हृदा लोके कविश्रुतिः।।**[2] इति।

**सन्दर्भसङ्केतः-**

1. उद्धृतम्- सारस्वतीसुषमा, पृ.सं.-3 (23वर्षे ।अङ्के ज्ये. 2025वि.)।
2. उद्धृतम्- अभिनवकाव्यालङ्कारसूत्रम्, काव्यलक्षणप्रकरणम्, पृ.सं.-23.

■ पत्रसङ्केतः- सहायकप्राध्यापकः, राष्ट्रियसंस्कृतसंस्थानम्(मा.वि.वि.),
लखनऊपरिसरः, लखनऊ।

# संस्कृतसाहित्यस्य अभिनवाः गद्यप्रवृत्तयः

■ डॉ. जयप्रकाशनारायणः

संस्कृतवाङ्मये वैदिकसाहित्यमारभ्य आधुनिकसंस्कृतसाहित्यं यावत् गद्यकाव्यस्य सुदीर्घा महती च परम्परा वर्तते। यजुर्वेदे उत्कृष्टं गद्यं समुपलभ्यते। ततो ब्राह्मणोपनिषद्-ग्रन्थेषु गद्यस्योपलब्धिः दृश्यते। तदनु सूत्र-भाष्यादिग्रन्थेषु गद्यस्य विकासो दृक्पथमायाति। अनन्तरं लोके प्रसिद्धाः कथाः साहित्यस्य स्वरूपमाप्नुवन्। कथाः खलु वर्तन्ते अस्माकं गौरवपूर्णो ज्ञाननिधिः। ततो गद्यकाव्यस्य द्रुततया विकासो जातः। इत्येवं प्रकारेण गद्यस्य रोचकः इतिहासो वर्तते। महान्तो राजानो राजाज्ञाः शिलालेखेषु लेखापितवन्तः। तेषां नैकेषु शिलालेखेषु गद्यस्य उत्कृष्टानि उदाहरणानि दृश्यन्ते।

बौद्धसंस्कृतग्रन्थेषु उत्कृष्टतरं गद्यं समुपलभ्यते। बौद्धसंस्कृतसाहित्यं द्वादशाङ्गेषु वर्तते। तत्र अवदानग्रन्थेषु मिश्रितसंस्कृतेन विरचितं गद्यं नूनमेव अतीव मनोहरं वर्तते। जैनसंस्कृतेऽपि रमणीयकथासंवलितं गद्यं द्रष्टुं शक्यते।

सुबन्धु-दण्डि-वादीभसिंह-नारायणपण्डितादिभिः रचितं गद्यं तु संस्कृत-साहित्यस्य गौरवभूतानि रत्नानि वर्तन्ते। चम्पूकाव्येष्वपि महद् गद्यं समुपलभ्यते।

'गद्यम्' इति पदं गद्-धातुना निर्मितं वर्तते। गद् इत्युक्ते कथनम्, अर्थात् कमपि विषयं साक्षात् प्रस्तोतुं गद्यस्य प्रयोगः क्रियते। वक्तव्यविषयस्य सहजतया सरलतया च प्रस्तुतेः कृते इयं सर्वाधिका उपयुक्ता विधा वर्तते। प्राचीनकाले श्रुतित्वात् स्मृतिसौविध्याय पद्यानामेव प्रचलनमासीत्। वैदिककाले श्रुतिपरम्परायां पद्यानि स्मर्तुं सौविध्ययुतानि आसन्। अनेन समाजे पद्यस्य एव प्रतिष्ठा जाता आसीत्। एतादृशायां परिस्थितौ गद्यस्य प्रतिष्ठा कठिना आसीत्। सहजवाक्यैः वर्णनीये विषये रसप्रवाह-भावाभिव्यक्ति-रचनावैचित्र्याणां सञ्चारः उपस्थापनं वा न तथा सरलं भवति। कवेः अर्थवैचित्र्येण भावगाम्भीर्येण च एतादृशी गद्यरचना प्रभावपूर्णा भवितुमर्हति। वस्तुतो गद्ये रचनावैचित्र्यस्य गुणो दृश्यते। अनेन च अवश्यं काव्यं प्रभावपूर्णं भवत्येव। किन्तु तथापि गद्ये तादृशस्य प्रभावस्य उत्पादनं न सहजम्। अतः खलु **'गद्यं कवीनां निकषं वदन्ति'** इति आभाणकं संस्कृते प्रसिद्धिं गतम्।

गद्यकाव्ये तत्रत्यं कथावस्तु काव्यात्मकं चमत्कारिकं च विधातुं कवयः तत्र नैकाः शैलीः अलङ्कारादयश्च संयोजयन्ति। कल्पनात्मकतासंवलितैः गुणैः काव्यालङ्करणैश्च मण्डितं गद्यकाव्यं चमत्कारपूर्णं सञ्जायते। एतादृशं काव्यतत्त्वसंयुक्तं गद्यकाव्यं संस्कृतसाहित्यस्य गौरवभूतं वर्तते।

काव्यं द्विविधं भवति- दृश्यकाव्यं श्रव्यकाव्यं च। श्रव्यकाव्यस्य विभागद्वयं भवति- पद्यकाव्यं गद्यकाव्यं च। एतयोः अतिरिक्तं श्रव्यकाव्यस्य अन्योऽपि कश्चन विभागः भवति - चम्पूकाव्यमिति। इदं चम्पूकाव्यं गद्यपद्यमयं भवति। इत्येवं श्रव्यकाव्यं त्रिविधं वर्तते- 1. पद्यकाव्यं, 2. गद्यकाव्यं 3. चम्पूकाव्यं च।

काव्यस्य विभागान् अधोलिखितेन रेखाचित्रमाध्यमेन अवगन्तुं शक्नुमः -

छन्दोबद्धं काव्यं पद्यम्। यत्काव्यं छन्दोबद्धं न भूत्वा मुक्तं भवति, तत् गद्यकाव्यत्वेन निगद्यते। साहित्यदर्पणे गद्यकाव्यस्य लक्षणं वर्तते- **वृत्तबन्धोज्झितं गद्यम्।**[1]

गद्यकाव्यस्य भेदानां विषये विद्वत्सु मतभेदो विद्यते। केचन विद्वांसः गद्यकाव्यस्य द्वौ एव भेदौ इति मन्यन्ते, केचन च अधिकान् भेदान् स्वीकुर्वन्ति। अष्टादशपुराणेषु प्राचीनतमे अग्निपुराणे सर्वादौ विषयदृष्ट्या शैल्याधारेण च गद्यकाव्यस्य भेदा वर्णिताः। तत्र गद्यस्य आख्यायिका-कथा-खण्डकथा-परिकथा-कथानिकेति पञ्चभेदाः समुपलभ्यते। तद्यथा -

**आख्यायिका कथा खण्डकथा परिकथा तथा।**
**कथानिकेति मन्यते गद्यकाव्यं च पञ्चधा।।**[2]

वस्तुतः विद्वद्भिः बन्धाधारेण गद्यकाव्यस्य द्वौ एव भेदौ स्वीकृतौ- 1. कथा, 2. आख्यायिका च।

उपर्युक्तयोः भेदयोः एव अन्येषां समस्तानां गद्यकाव्यस्य भेदानां समाहारो सञ्जायते इति विदुषां मतं वर्तते। अतः कथा आख्यायिका च गद्यकाव्यस्य मुख्यौ भेदौ आख्यानोपाख्यानादि च गौणभेदाः इति स्वीकर्तव्यम्।

**कथायाः स्वरूपम्-**

कथा गद्यसाहित्यस्य मुख्यः प्रकारो वर्तते। कथायां कथावस्तु काल्पनिकी भवति। कविः स्वचेतसि कल्पनां कृत्वा एव कथायाः कथावस्तुनो निरूपणं करोति। तत्र सर्वं प्रणयनं गद्यमाध्यमेनैव भवति। साहित्यदर्पणे कथायाः स्वरूपमित्थं निरूपितं वर्तते-

**कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।**[3]
**क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।।**
**आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्।।**[4] यथा - कादम्बर्यादिः। इति।

शृङ्गारप्रकाशे कथाविषये इत्थमुक्तं वर्तते। यथा-

**याऽनियमितगतिभाजा दिव्यादिदिव्योभयेतिवष्टत्तवती।**
**कादम्बरीव लीलावतीव वा सा कथा कथिता।।**[5]

**कथासाहित्यस्य विकासः-**

संस्कृतकथासाहित्यस्य इतिहासः अत्यन्तं पुरातनो वर्तते। वस्तुतः कथासाहित्यस्य उद्भवो वैदिककालादेव सञ्जातः। ऋग्वेदस्थ-इन्द्रादिसूक्तानाम् अध्ययनेन ज्ञायते यत् तेषां चित्रणे तत्र-तत्र कथातत्त्वानि अवश्यं तिष्ठन्ति इति। पुरुरवा-उर्वश्योः प्रणयकथा संवादसूक्तेषु वर्तते। सा एव कथा ब्राह्मणग्रन्थेषु परिपुष्टतामाप्नोत्। वैदिकवाङ्मये कथानां समृद्धं भाण्डागारं वर्तते। यथा- सरमा-पण्युपाख्यानं, शुनःशेपोख्यानं, लोपामुद्रागस्त्योपाख्यानं, नृपसुदासोपाख्यानं, नहुषोपाख्यानं, यम-नचिकेतसोपाख्यानं, सत्यकाम-जाबालोपाख्यानमित्यादिः।

पुराकाले मनोरञ्जनसाधनानाम् अभावः आसीत्। अतः पुराकालतः एव गृहे-गृहे कथानां श्रुतिपरम्परा अस्माकं देशे जीवति। प्राचीनकाले भटाः चारणाः कुशीलवाः वा भ्रमित्वा-भ्रमित्वा कथावाचनं कुर्वन्ति स्म। इत्येवं देशे लोककथानां समृद्धा परम्परा आसीत्।

महाभारतं तु उपाख्यानादिकथारूपस्य महत्सङ्कलनमेव तिष्ठति। तत्र सावित्र्युपाख्यान-नलोपाख्यान-शकुन्तलोपाख्यानादि नैकानि उपाख्यानानि वर्तन्ते। अतः महाभारतं उपाख्यानादिकथानां कोशः इति निगद्यते। पुराणेषु कथामाध्यमेन जीवनस्य साररूपा शिक्षा उपस्थाप्यते स्म। पुराणेषु कथानां महत्सङ्कलनं वर्तते। इत्येवं पौराणिककथानां संस्कृते महान् सङ्ग्रहो वर्तते।

ततः राज्ञां प्रशंसायां चारणाः कवयो वा कथाः निर्माय श्रावयन्ति स्म। तादृशीनां कथानां काचित्सुदीर्घा शृङ्खला वर्तते। संस्कृतकथासाहित्ये सिंहासनद्वात्रिंशिका-सदृश्यः कथा तस्यां शृङ्खलायां समायान्ति। बौद्धावदानानि जातककथाश्च संस्कृतकथापरम्परायां विशिष्टं स्थानमर्हन्ति। दिव्यावदान-अवदानशतकादिसाहित्यं तत्र प्रसिद्धम्। जैनकथासाहित्येऽपि नैकाः रम्याः कथाः सन्ति।

पैशाचप्राकृतभाषया गुणाढ्यप्रणीता बृहत्कथा अत्र मूर्धन्ये स्थाने वर्तते। बृहत्कथा खलु मूलरूपेण नोपलभ्यते, किन्तु प्रसिद्धित्वात् अस्याः नैकानि संस्कृतरूपान्तराणि जातानि। तद्यथा- क्षेमेन्द्रकृता बृहत्कथामञ्जरी, सोमदेवकृतः कथासरित्सागरः, बुधस्वामिनी बृहत्कथाश्लोकसंग्रहः, वामनभट्टविरचिता बृहत्कथामञ्जरी च। बृहत्कथाशैलीमाधृत्य पञ्चतन्त्रसदृशाः ग्रन्थाः विरचिताः अभूवन्। संस्कृते नैके कथासङ्ग्रहात्मकाः ग्रन्थाः अपि समुपलभ्यन्ते। तद्यथा- जातकमाला, प्रबन्धकोशः भोजप्रबन्धः इत्यादि। इत्येवं संस्कृतकथासाहित्यस्य सुसमृद्धा परम्परा वर्तते।

ततः आधुनिककथासाहित्येऽपि नैका कथा प्रणीताः वर्तन्ते। तत्र वेदाख्यानकल्पद्रुमः, कथासूक्तं, कथावल्लरी, उपाख्यानमञ्जरी, कथाकौमुदी, इक्षुगन्धा, राङ्गडा इत्यादयः कथासङ्ग्रहाः सन्ति। अत्र विश्वेश्वरपाण्डेयस्य मन्दारमञ्जरी, राधावल्लभत्रिपाठिकृतो महाकविकण्टकः, पण्डिताक्षमारावप्रणीता कथामुक्तावली, श्रीधरभास्करवर्णेकरस्य संस्कृतभवितव्यं, महालिङ्गशास्त्रिणः कथानककोशः, रमेशचन्द्रशुक्लस्य चारुचरितचर्चा इत्यादिसङ्ग्रहाः प्रसिद्धाः वर्तन्ते। साम्प्रते काले डुप्कथास्पशकथा इत्यादि कथाप्रणयनस्य अभिनवाः विधाः अपि विकासं गताः।

**आख्यायिकायाः स्वरूपम्-**

आख्यायिका गद्यकाव्यस्य अपरो भेदः वर्तते। आख्यायिका अपि कथासदृशी एव भवति, किन्तु तत्र कश्चित् भेदः दृश्यते। आख्यायिकायाम् ऐतिहासिकी कथा भवति। आख्यायिकायां कवेः वंशस्य अनुकीर्तनं गद्यमाध्यमेनैव भवति। आख्यायिकायां अन्येषां कवीनां चरित्रचित्रणं भवति, तत्र कविः क्वचित् क्वचित् पद्यानि प्रयुज्यते।

आख्यायिकायां कथाभागस्य विभागः उच्छ्वासेन आश्वासेन वा पदेन भवति। आश्वासस्य मुखे एव आदौ आश्वासे विवर्णितस्य वृत्तान्तस्य वर्णनं विधीयते। अत्र नायकेनैव स्वघटितस्य वृत्तान्तस्य वर्णनं विधीयते।

साहित्यदर्पणे आख्यायिकायाः स्वरूपमित्थं प्रकारेण निरूपितं वर्तते-

**आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम्।**
**अस्यामन्यत्कवीनाञ्च वृत्तं पद्यं क्वचित्क्वचित्।**
**कथांशानां व्यवच्छेदः आश्वास इति कथ्यते।**
**आर्यावक्त्राऽपवक्त्राणां छन्दसा येन केनचित्।**
**अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।**[6]

यथा- हर्षचरितादिः। इति।

**गद्यकाव्यस्य अन्ये भेदाः-**

अग्निपुराणे हेमचन्द्रस्य काव्यानुशासने अन्येषु च ग्रन्थेषु गद्यकाव्यस्य नैके भेदा उक्ताः वर्तन्ते। अग्निपुराणे गद्यकाव्यस्य पञ्चभेदाः कथिताः सन्ति। तद्यथा -

**आख्यायिका कथा खण्डकथा परिकथा तथा।**
**कथानिकेति मन्यते गद्यकाव्यं च पञ्चधा।।**[7]

काव्यानुशासने आख्यान-उपाख्यान-निदर्शना-प्रवह्लिका-क्षुद्रकथा-मणिकुल्या-परिकथा- खण्डकथा-सकलकथा-उपकथा-बृहत्कथादीनां गद्यभेदानां चर्चा समुपलभ्यते।

**आधुनिकसंस्कृतसाहित्ये अभिनवाः गद्यप्रवृत्तयः-**

प्रायः एकोनविंशशताब्दादेव संस्कृतसाहित्यस्य आधुनिककाल इति अभिज्ञा जाता वर्तते। तस्मिन् आधुनिके संस्कृतसाहित्ये महत्या संख्यया काव्यानि रचितानि। महाकाव्य-खण्डकाव्य-नाटक-लक्षणग्रन्थ-कथा-आख्यायिका-चम्पूकाव्य-प्रभृतिप्राच्यपद्धत्या विरचितानां काव्यविधानाम् अत्र प्राचुर्यं तु दृश्यत एव, किन्तु अत्र युगानुरूपस्य अभिनवकाव्यविधासंवलितस्य साहित्यस्यापि प्रणयनं जातम्।

सैव प्रवृत्तिः आधुनिकगद्यप्रणयने अपि अभिलक्ष्यते। अत्र निबन्ध-उपन्यास-कथा-संस्मरण-रेखाचित्र-आत्मकथा-जीवनवृत्त-यात्रावृत्त-लघुकथा-निबन्ध-प्रभृतीनाम् अभिनवानां गद्यविधानाम् अत्र आविष्कारोऽभूत्। अधुना दैनन्दिनी-पत्रकाव्यादीनामपि लेखनस्य समारम्भो जातः। न केवलं तदेव, अपितु आधुनिकैः आचार्यैः एतासां विधानां व्यवस्थितरीत्या लक्षणानि अपि कृतानि।

**उपन्यासः-**

उपन्यासः आधुनिकसंस्कृतसाहित्यस्य गद्यरचनायाः अभिनवा विधा वर्तते। उपन्यासः गद्यबद्धा सुदीर्घा कथा वर्तते। उपन्यासे यथार्थवादः आधिक्येन दृश्यते। आचार्य-राधावल्लभत्रिपाठी स्वीये आधुनिकलक्षणग्रन्थे अभिनवकाव्यालङ्कारसूत्रे उपन्यासलक्षणम् इत्थं वर्तते- **गद्यबद्ध उपन्यासो महाकाव्यमयी कथा।**[8]

अर्थात् अत्र महाकाव्यमिव जीवनस्य सम्पूर्णं वर्णनं भवति। उपन्यासस्य कथावस्तुनि चतस्रः अवस्थाः भवन्ति। तद्यथा - कथारम्भः, संघर्जः, आरोहः अवसारं (समाप्तः) च।

उपन्यासस्य नैके भेदाः भवन्ति। यथा- 1. घटनाप्रधानः, 2. सामाजिकः, 3. राजनैतिकः, 4. ऐतिहासिकः, 5. मनोवैज्ञानिकः, 6. आञ्चलिकः, 7. जीवनचरितात्मकः च।

**कथासंग्रहः-**

आधुनिकसंस्कृतसाहित्ये प्रणीयमानाः कथाः नैकाभिः दृष्टिभिः प्राचीनकथानाम् अपेक्षया शिल्पभावयोः दृष्ट्या भिद्यन्ते। आधुनिकं संस्कृतकथासाहित्यं वैदेशिकसाहित्येन नूनं प्रभावितं वर्तते। अतः आचार्यैः एतस्याः आधुनिककथाविधायाः लक्षणानां विवेचनमपि वैदेशिकसाहित्यस्य आधारेणैव कृतम्। कथायां कानिचन तत्त्वानि अवश्यं भवितव्यानि। यथा- 1. कथा-वस्तु, 2. पात्र-चित्रणं, 3. संवादः (कथोपकथनं), 4. देशकालः, 5. भाषाशैली, 6. उद्देश्यं च। आधुनिकैः आचार्यैः कथावस्तुनः क्रमिकस्य विकासस्य पञ्च अवस्थाः मताः- 1. प्रारम्भः, 2. आरोहः, 3. चरमा स्थितिः, 4. अवरोहः, 5. अन्तः (उपसंहारो वा) च।

**कथावस्तुनः पञ्च अवस्थाः**

प्रारम्भः | आरोहः | चरमा स्थितिः | अवरोहः | अन्तः (उपसंहारो वा)

आचार्यराधावल्लभत्रिपाठ्यनुसारेण कथालक्षणमित्थं वर्तते- **जीवनस्यैकदेशनिरूपणपरमाख्यानं कथा।**[9]

साम्प्रतिके काले बहूनां कथां सङ्ग्रहं कृत्वा तस्य प्रकाशनं क्रियते। तदेव कथासङ्ग्रहत्वेन व्यवह्रियते।

**निबन्धसाहित्यम्-**

विचारविशेषस्य भावविशेषस्य वा गद्येन बन्धो निबन्धः। आचार्यस्य राधावल्लभस्य लक्षणानुसारेण विचाराणां भावानां च मिथो निबन्धनात् 'निबन्धः' इति कथ्यते। इयं 'निबन्धः' इति गद्यविधा नितान्तमाधुनिकी विधा वर्तते। अत्र निबन्धो द्विप्रकारको भवति- विषयप्रधानो विषयिप्रधानश्च। विषयप्रधाने निबन्धे विचारस्य चिन्तनस्य वा प्राधान्यं भवति, किन्तु विषयिप्रधाने निबन्धे वैयक्तिकाः भावा एव प्राधान्यं भजन्ते।

**यात्रावृत्तम्-** यथा आधुनिके संस्कृतसाहित्ये गद्यस्य नैका: विधा: समाविष्टा, तथैव अत्र यात्रावृत्तम् इति अभिनवा विधा अपि स्थानं प्राप्नोत्। यात्रायां यथा दृष्टं यथानुभूतं तत्सर्वं गद्यरूपेण यल्लिख्यते, तदेव यात्रावृत्तम्। राधावल्लभत्रिपाठिनो लक्षणमत्र दीयते- **यात्रायां यथानुभूतं वर्णनं यात्रावृत्तम्।**[10]

यात्रावृत्ते कस्यचित्स्थलविशेषस्य तीर्थविशेषस्य वा ऐतिहासिकं, भौगोलिकं, सांस्कृतिकं धार्मिकं चेति समग्रं विवरणं विस्तरेण प्रस्तूयते। यात्रावृत्ते वैयक्तिकानां भावानां, भावनानां, विचाराणां चापि प्राधान्यं भवति।

**जीवनवृत्तम्-** आधुनिकसंस्कृतसाहित्यप्रणयनस्य इयं काचित् अतीव लोकप्रिया विधा वर्तते। कस्यचित् अतीव उत्कृष्टस्य महापुरुषस्य व्यक्तित्त्वस्य जीवनचरितस्य वा वर्णनं जीवनवृत्तं जीवनचरितं वा कथ्यते। यद्यपि जीवनवृत्तमिव आख्यायिकेति काचित् पुरातना गद्यविधा अस्माकं संस्कृतवाङ्मये वर्तत एव, किन्तु आधुनिकजीवनचरितविध आख्यायिकाया: भिन्ना विधा वर्तते। आचार्य: राधावल्लभत्रिपाठी जीवनवृत्तस्य वर्णनमित्थं करोति-

**कस्यचिन्महापुरुषस्य प्रेरणाप्रदं चरितनिरूपणं जीवनचरितम्।**[11]

आधुनिके संस्कृतसाहित्ये प्रणीतानां जीवनवृत्तानां जीवनचरितानां वा संख्या सहस्रशो वर्तते।

**दैनन्दिनी-** संस्कृतसाहित्ये दैनन्दिनी-लेखनस्य तत्प्रकाशनस्य वा प्रचलनम् अत्यल्पं वर्तते। भवान् जानाति खलु यत् प्राचीना: कवय: स्वख्यातिं नेच्छन्त: स्वकाव्येषु आत्मनो विषये अधिकं न लिखन्ति स्म। तेषां व्यक्तिगतं जीवनं प्राय: अन्यै: न ज्ञायते स्म। अत: खलु साम्प्रतं बहूनां महतां कवीनां जीवनचरितम् अज्ञातप्रायं लक्ष्यते। किन्तु आधुनिके काले पाश्चात्यपद्धतिमाधृत्य कवय: काव्यानि रचमाना: दृश्यन्ते। दैनन्दिनी-लेखनं खलु मुख्यत: पाश्चात्यविधा वर्तते। तामेव विधामाश्रित्य केचन कवय: दैनन्दिनी-लेखनम् अपि अकुर्वन्। तेषु आचार्यस्य सत्यव्रतशास्त्रिणा: दैनन्दिनी, आचार्यस्य राधावल्लभत्रिपाठिन: आत्मनाऽऽत्मानम् इत्यादय: मुख्या संस्कृतदैनन्दिन्यो वर्तन्ते।

**पत्रकाव्यम्-** गद्यविधायाम् इयं नूनमेव अभिनवा विधा वर्तते। भारतीये वैदेशिके वाङ्मये वा पत्रकाव्यानि साहित्यस्य अङ्गत्वेन स्वीकृतानि अभूवन्। कश्चित् कवि: यदा स्वस्य आत्मीयान् हृदयस्थान् विचारान् साहित्यिकसौन्दर्यसमन्वितै: गुणै: सम्पूर्य अन्येभ्य: आत्मीयेभ्य: प्रेषयति, तत्सर्वं साहित्यरूपेण परिणमते। केचन कवय: स्वरचितानि काले काले च अन्येभ्य: प्रेपितानि वा पत्राणि कालान्तरेण ग्रन्थाकाररूपेण प्रकाशयन्ति। तत्सर्वं पत्रकाव्यत्वेन एव अभिज्ञायते। अद्यत्वे नैके कवय: सम्पादकेभ्य: साहित्यिकगुणयुतानि पत्राणि प्रेषयन्ति, एतत्सर्वमपि पत्रकाव्यमेव। नैकधा सम्पादका: अपि राष्ट्रे बहुत्र पत्राचारं कुर्वन्ति, तदपि पत्रकाव्यत्वेन स्वीक्रियते।

आचार्येण सत्यव्रतशास्त्रिणा प्रेषितानां पत्राणां सङ्कलनभूतो ग्रन्थ: 'पत्रकाव्यम्' अतीव प्रसिद्धिं गतो वर्तते। आचार्यस्य नवलकिशोरकाङ्करस्य पत्राणि अपि ग्रन्थाकाररूपेण प्राकाश्यं गतानि वर्तन्ते। अप्पाशास्त्रिराशिवडेकर: निरन्तरं देशस्य संस्कृतपण्डितै: सह पत्राचारं करोति स्म। स: पत्रिकासु तानि च पत्राणि प्रकाशयति स्म। इत्येवम् एतत्सर्वं पत्रजातं साहित्यरूपेण संस्कृतस्य निधि: वर्तते।

**आत्मकथा-** संस्कृतसाहित्ये इयम् अत्यन्तम् अल्पप्रचलिता विधा वर्तते। आरम्भत एव संस्कृतकवय: आत्मनो विषये न लिखन्ति। अत: नैकेषां महतां कवीनां जीवनस्य घटना अन्धकाराच्छन्ना सन्ति। तेषां जीवनस्य सम्पूर्णम् इतिवृत्तं नाद्यापि उपलभ्यते, किन्तु अन्यान्यभाषासाहित्यविधाभि: (विशेपत: आंग्लसाहित्येन) प्रभाविते आधुनिके संस्कृतसाहित्येऽपि आत्मकथात्मकं साहित्यं समुपलब्धं दृश्यते। पं. हृषीकेशभट्टाचार्यस्य आत्मवायोरुद्गार: संस्कृते प्रथमा आत्मकथा मन्यते। डॉ. मङ्गलदेवशास्त्रि-पं. रमेशचन्द्रशुक्ल-तपोवनस्वामि-प्रभृतय: प्रमुखा: आत्मकथाकारा: वर्तन्ते। प्रो. सत्यव्रतशास्त्री अपि संस्कृतेन आत्मकथामलिखत्।

**पत्रकारिता-** पत्रकारिता आधुनिकसंस्कृतसाहित्यस्य अत्यन्तं महत्त्वपूर्णा विधा वर्तते। पत्रकारिता लोकतन्त्रस्य 'चतुर्थ: स्तम्भ:' इति उच्यते। विधायिका, कार्यपालिका न्यायपालिका चेति लोकतन्त्रस्य महत्त्वाधायि स्तम्भत्रयमिति अधुना पत्रकारिता चतुर्थस्तम्भत्वेन प्रतिष्ठिता अस्ति।

साम्प्रतं वार्तानां लेखानाञ्च आहरण-सङ्कलन-प्रकाशन-मुद्रणादिकायर्यार्थं 'पत्रकारिता' इति शब्दं प्रयुज्यते। य: पत्रं पत्रिकां वा लिखति, लेखयति, पत्रं प्रेषयति, वार्ता: प्रसारयति, मुद्रापयित्वा प्रसारयति वा स: पत्रकार:, पत्रकारिन् (पत्रकारी) वा कथ्यते। तस्य भाव: 'पत्रकारिता' पत्रकारता चेति वक्तुं शक्यते।

पत्रकारितायाः अन्तर्गतं गद्यलेखनं महत्त्वपूर्णं कार्यं भवति। पत्रकारितायां फीचर-रिपोर्ताज-साक्षात्कार-ई-संस्कृतपत्रिका-प्रभृतिगद्यविधाः अन्तर्भवन्ति।

**संस्मरणम्-**

स्मृतेः आधारेण कस्मिंश्चित् विषये कस्याश्चित् व्यक्तेर्वा विषये आलेखनं संस्मरणं वर्तते। पूर्वं यथा साक्षात्कृतं तस्य यथातथं निरूपणं संस्मरणस्य लक्षणमित्थं वर्तते- **यथावृत्तस्य स्मृत्या आख्यानं संस्मरणम्।**[12]

**लघुकथा-**

आधुनिकसंस्कृतसाहित्ये लघुकथा अत्यन्तं प्रचलिता विधा वर्तते। प्राचीनकाले यथा पशु-पक्षीणां माध्यमेन मनोरञ्जनार्थं शिक्षाप्रदानार्थं च कथा प्रणीयते स्म, आधुनिके काले साहित्ये तादृशी प्रवृत्तिः न अवस्थिता। अधुना साहित्यं समधिकं यथार्थपरकं सञ्जातम्। पुनः मानवस्य समयाभावोऽपि जातः खलु अतः तदनुसारेण साहित्येऽपि लघुकथ्येन महतः प्रभावस्य प्रवृत्तिः जागरिता। लघुकथालेखनस्य सा एव परिणतिः।

लघुकथायां न्यूनैः शब्दैः प्रभावोत्पादकं कथ्यं कथ्यते। लघुकथायां जीवनस्य कस्यचिदंशस्य मार्मिकं वर्णनं वर्तते। यथा महाकाव्यस्य खण्डविशेषस्य निरूपणं खण्डकाव्ये भवति, तथैव कथायाः अंशविशेषस्य वर्णनं लघुकथायां जायते। अद्यत्वे संस्कृते टुप्-कथाऽपि लिख्यते, या खलु अतीव सङ्क्षिप्ता भवति।

डॉ. बनमालीविश्वाल-डॉ. रवीन्द्रकुमारपण्डा-देवर्षिकलानाथशास्त्रि-प्रभृतयः आधुनिकलघुकथासाहित्ये मूर्धन्ये स्थाने विराजन्ते।

**रेखाचित्रम्-**

**शब्दैर्घटनया व्यक्तेश्चित्रमिव निर्मितं रेखाचित्रम्।** इति लक्षणानुसारेण शब्दैः एव कस्याश्चित् घटनायाः व्यक्तेः वा सजीवं वर्णनं रेखाचित्रं कथ्यते। रेखाचित्रं विषयप्रधानं भवति।

आधुनिके संस्कृतसाहित्ये रेखाचित्रलेखनस्य बहु प्रचलनं वर्तते।

एवं गद्यकाव्यसय अजस्रा धारा आधुनिकसंस्कृतसाहित्ये प्रवाहमाना वर्तन्ते। अस्य विविधाः विधाः प्रवृत्ताश्च विकसन्ति। सामाजिकपरिस्थित्यणुगुणं काव्यस्य विधाः वर्धन्ते प्रवर्तन्ते च। अतः अधुना गद्यकाव्यलेखनस्य अभिनवाः विद्याः विकसिताः दृश्यन्ते।

**सन्दर्भसङ्केतः-**


1. साहित्यदर्पणम्, 6.330
2. अग्निपुराणम्, 337.12
3. साहित्यदर्पणम्, 7.332
4. तदेव, 7.333
5. शृङ्गारप्रकाशः, 11.339
6. साहित्यदर्पणम्, 7.334-335
7. अग्निपुराणम्, 337.12
8. अभिनवकाव्यालङ्कारसूत्रम्, 3.1.13
9. तदेव, 3.1.12
10. तदेव, 3.1.18
11. तदेव, 3.1.16
12. तदेव, 3.1.14


■ **पत्रसङ्केतः- सहायकाचार्यः, राष्ट्रियसंस्कृतसंस्थानम्(मानितविश्वविद्यालयः), नवदेहली।**

# गद्यकाव्यपरम्परायां बाणभट्टस्य वैशिष्ट्यम्

■ डॉ. प्रदीपकुमारपाण्डेयः

लोकोत्तरवर्णनानिपुणकविकर्मरूपकाव्यस्यालङ्कारिकैः विविधानि लक्षणानि कृतानि। तत्र "शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद् द्विधा" इति भामहाचार्यप्रतिपादितदिशा विशिष्टसाहित्यसमन्वितशब्दार्थरूपकाव्यस्य गद्यं एकः प्रभेदः। गद्यते सुव्यक्तं प्रतिपाद्यते यदिति व्युत्पत्त्या गद् धातोः कर्मणि यत् प्रत्ययेन निष्पन्नो गद्यशब्दो रचनाविशेषे प्रयुज्यते। गद्यस्योत्पत्तिसहिताऽत्र गद्यकाव्यपरम्परा बाणभट्टस्य वैशिष्ट्यं च प्रकाश्यते-

**(क) गद्यस्योत्पत्तिः-**

गद्यसाहित्योद्भवः वैदिकयुगे अभवत्। वेदेषु गद्यस्य बहुप्रयोगः दृश्यते। ऋग्वेदात्, अथर्ववेदात्, यजुर्वेदात्, ब्राह्मणग्रन्थेभ्यः, उपनिषद्ग्रन्थेभ्यश्च गद्यस्य परम्परा प्रवाहिता दृश्यते। वैदिककाले गद्यस्य प्रचुरः प्रसारः आसीत्। संस्कृतवाङ्मये गद्यस्य सर्वप्रथमं दर्शनं संहितासु भवति। कृष्णयजुर्वेदस्य तैत्तिरीयसंहितासु गद्यस्यास्तित्वं दृग्गोचरी भवति। ऋग्वेदस्य दशममण्डले कृष्णयजुर्वेदे च गद्यस्योन्मेषः दृश्यते। तत्र यथा- "ऋतं च सत्यञ्चाभीद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत, ततः समुद्रोऽर्णवः समुद्रादर्णवादधि संवत्सरोऽजायत, अहोरात्राणि विदधविश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीञ्चान्तरिक्षमथो स्वः"। काठकसंहितायां मैत्रायणीसंहितायां चापि गद्यस्य प्रयोगः दृश्यते। अथर्ववेदस्य षष्ठभागोऽपि गद्यनिर्मितः वर्तते। अथर्ववेदस्य पञ्चदशे काण्डे प्रथमे सूत्रे गद्यप्रयोगः समुपलभ्यते।

समस्तब्राह्मणग्रन्थाः गद्ये लिखिताः सन्ति। मण्डलब्राह्मणे गद्यस्योदाहरणं यथा- "यदेतन्मण्डलं नयति तन्महदुक्थं ता ऋचः, स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं, तानि सामानि, स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः"। आरण्यकेऽपि गद्याधिक्यमास्ते। उपनिषद्ग्रन्थे कथोपकथनरूपेण गद्यस्य प्रयोगः प्राप्यते। छान्दोग्योपनिषदि गद्यस्योदाहरणं यथा- "श्वेतकेतुर्ह्यारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्, न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति, स ह द्वादशवर्षं उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्वब्ध एयाय। तं ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानो स्तब्धो अस्युत तमादेशमप्राक्ष्यः। (छान्दोग्योपनिषदि, 6/1/2)

एवं दृश्यते यद् वैदिकसाहित्ये गद्यप्रयोगः प्राचुर्येण अभवत्। वैदिकगद्यैः प्रशस्तीकृते वर्त्मनि लौकिकगद्यसाहित्यस्य आविर्भावः सञ्जातः। लौकिकगद्यस्य प्रथमं दर्शनं निरुक्ते भवति। नैघण्टुककाण्डे गद्यस्योपयोगः दृश्यते- "सर्वरसाः अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति, यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।"

एवमेव दर्शनसिद्धान्तविवेचने, चरकसंहितायाम्, ज्योतिषशास्त्रे, पुराणेषु चापि बहुगद्यप्रयोगः अभवत्। दर्शनशास्त्रे शबरस्वामी-शङ्कराचार्य-जयन्तभट्टादिभिः गद्यप्रयोगाः कृताः। शबरस्वामिनः भाष्ये- "इच्छया आत्मानमुपलभामहे, कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रत्यस्माकमिच्छा भवति" इति उपलभ्यते। शङ्कराचार्योऽपि "न हि पद्भ्यां पलायितुं पारयमानो जानुभ्यां रंहितुमर्हति" इति वर्णयति। गिरनारशिलालेखेऽपि "रुद्रदाम्ना सेतुं सुदर्शनान्तरं कारितम्" इति। व्याकरणे, पुराणे महाभारतादिषु ग्रन्थेषु च गद्यप्रयोगः समुपलभ्यते। कात्यायनः पतञ्जलिश्च गद्येन परिचितौ। विष्णुपुराणस्यावतरणमत्र द्रष्टुं शक्यते- "यथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किञ्चन्न प्रसादीकृतं विशेषमुपलक्ष्याभीतयुक्ते भगवता सूर्येण निजकण्ठादुन्मूच्य स्यमन्तकनाम महामणिः परमवतार्य एकान्ते न्यस्तम्।" (विष्णुपुराणम्, 4/13/4) आलङ्कारिकेषु भामहोऽपि गद्येन सुपरिचितः आसीत्। साहित्यग्रन्थेषु गद्यस्य साम्राज्यमास्ते। कालिदास-अश्वघोषादयः गद्यरचनायामपि प्रवृत्ता आसन्। कालिदासस्य नाटकेषु गद्यप्रयोगः सुतरां समुपलभ्यते। अश्वघोषस्य शारिपुत्रप्रकरणे गद्यस्योदाहरणं मिलति। गुणाढ्योऽपि गद्यकारः।

गद्यस्य विकासक्रमः त्रिषु भागेषु द्रष्टुं शक्यते। यथा- वैदिकसाहित्यम्, शास्त्रीयं दार्शनिकं वा गद्यसाहित्यम्, लौकिकं काव्यात्मकं गद्यसाहित्यञ्च। कस्यापि विशिष्टविदुषः मतेन तु गद्यं द्विधा विभक्तमस्ति। वैदिककालस्य सरलं गद्यम् एवञ्च लौकिकसंस्कृतस्य प्रौढं गद्यम्।

**(ख) गद्यकाव्यपरम्परा-**

परवर्तियुगे स्वतन्त्ररूपेण गद्यकाव्यानां रचनाऽभवत्। तत्र दण्डी सुबन्धुः बाणभट्टश्चेति प्रसिद्धाः गद्यकाराः अभूवन्। एतद्विषये उक्तमपि-

**आदौ दण्डी ततश्चासीत् सुबन्धुः श्लेषमार्मिकः।**
**ततः श्रीबाणभट्टश्च त्रयो गद्ये प्रकीर्तिताः॥**

**1. दण्डी-** दण्डी संस्कृतसाहित्यस्य प्रथमः गद्यकविरस्ति। दाक्षिणात्योऽयं दण्डी विदर्भदेशीय इति विद्वांसः कथयन्ति। दण्डिनः समयविषये विद्वत्सु नास्ति मतान्तरम्। दशकुमारचरिते भारतस्य यद् भौगोलिकं निरूपणमस्ति तत् हर्षवर्धनात् पूर्वकालिकं भारतं प्रतिभाति। तदनुसारं सः षष्ठशतकस्य पूर्वकालीनः निश्चीयते। एष दण्डी भामहस्य प्राक्तनः समकालिको वा आसीत्। दण्डिनः अवन्तिसुन्दरीकथायां तस्य भारविवंशजत्वमुक्तम्। तदनुसारं दण्डी किरातार्जुनीयस्य रचयितुः महाकवेः भारवेः परममित्रस्य दामोदरस्य प्रपौत्रः आसीत्। अस्य पिता वीरदत्तः माता च गौरी देवी आस्ताम्। शैशवे तस्य मातापितरौ दिवंगतौ। अस्य जन्मस्थानं काञ्चीपुरी अस्ति। ततः प्रस्थाय दण्डिनः पूर्वजाः गुर्जरप्रान्तस्थिते आनन्दपुरे अतिष्ठन्। ततस्ते दक्षिणदेशावस्थितं एलिचपुरसंज्ञया प्रथमानमचलपुरं नाम स्थानमायाताः। दण्डिना काञ्ची-कावेरी- चोल-कलिङ्ग-मलयाचलप्रभृतिदक्षिणप्रसिद्धस्थानादीनां भूयसोल्लेखः कृतः। अनेनापि दण्डेर्दाक्षिणात्यभावः सिद्ध्यति। दण्डिनः कृतिविषये पद्यमेकं दृष्टिपथमायाति-

**त्रयो दण्डास्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।**
**त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥**

काव्यादर्शः, दशकुमारचरितम्, अवन्तिसुन्दरीकथा चेति तिस्रः रचना महाकवेर्दण्डिनः सन्ति। केचित् ''छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः'' इति दण्डिवचनेन 'छन्दोविचिति' नामकमप्यन्यदेकं तत्कृतित्वेन कल्पयन्ति, परं तन्नास्ति युक्तम्। यतोहि छन्दोविचितिशब्दस्य छन्दःशास्त्रपरत्वात् सा विद्या तत्रोच्यते। तस्य काव्यादर्शः काव्यशास्त्रमस्ति। काव्यादर्शस्य चतुर्षुः परिच्छेदेषु प्रथमे काव्यलक्षणम्, द्वितीये अलङ्काराणां लक्षणोदाहरणानि, तृतीये यमकविमर्शः चतुर्थे च दोषविमर्शः प्रदर्शितः।

दशकुमारचरितं सुबोधं सरसं प्रवाहमयञ्च गद्यकाव्यमस्ति। तत्र संस्कृतगद्यानि चमत्कारिवस्तुव्यञ्जनधिया ललितानि भवन्ति। ''ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्'' इति कथनमपि तत्र युज्यते। दशकुमारचरिते दशसंख्याकानां कुमाराणां वर्णनमस्ति। सौन्दर्यस्य वर्णनमत्युत्तेजकम्। कथायां कौतूहलादिकानां मनोरमं वर्णनमस्ति। क्वचिद् वने सञ्चरतां हिंस्रजन्तूनां चीत्कारः, क्वचिद् समुद्रे नौमज्जनम्, क्वचिद् वेश्यावञ्चनम्, क्वचिद् गृहिणीगौरवं विवृतम्। दम्भी, तपस्वी, कपटी ब्राह्मणः छलपरायणो वेश्याजनश्चात्र वर्णिताः। धूमिनीसमा क्रूरस्त्री गोमिनीसदृशी पतिप्राणा कुलवधूश्चात्र चित्रिता। समाजस्य रम्यारम्यभागौ समभावेनालोचितैः। अत्रागतासु घटनासु विस्मयजनकानां घटनानां प्राचुर्येणाद्भुतरसः प्रधानः। अर्थावबोधसौकर्येण प्रसादगुणस्यात्र प्राधान्यम्। दशकुमारचरिते यत् गद्यसौष्ठवं रचनाशैली च वर्तते तदन्यत्र दुर्लभम्। पूर्वपीठिका उत्तरपीठिका चेति भागद्वयात्मकेऽस्मिन् दशकुमारचरिते व्यञ्जनाक्षमस्य सरसस्य सरलस्य च प्रवाहस्यादर्शं प्रस्तौति दण्डी। गद्यशैली सुबोधा प्रवाहशालिनी च विद्यते। उदाहरणं यथा- ''अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी''। अवन्तिसुन्दरीकथां केऽपि दण्डिनः रचनां मन्यन्ते केऽपि च नापि मन्यन्ते। राजकुमार्याः अवन्तिसुन्दर्याः रूपवर्णने कवेरस्य सौन्दर्यानुभूतेरुत्कृष्टमुदाहरणं दृश्यते। दण्डिनः रचनात्रयविषये शार्ङ्गधरपद्धतौ समुल्लिखितं पद्यमिदं दृग्गोचरी भवति-

**त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।**
**त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥**

दण्डिनः रचनायां पदलालित्यं दृश्यते। तस्य प्रौढा प्राञ्जला च गद्यरचना वैदर्भीरीत्याः काव्यसौन्दर्यं द्विगुणीकरोति। दण्डिनः रचनायां न केवलं शब्दानां ललितविलासचातुरी दृश्यते, अपितु लोककथानां सरसप्रयोगे,

सौन्दर्यवर्णने चापि नैपुण्यं विलसति। केनचित्समालोचकेन "कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः" इति कथितम्। सुभाषितरत्नभाण्डागारे अपि प्रशंसितम्-

**जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।**
**कवी इति ततो व्यासे, कवयस्त्वयि दण्डिनि॥**

**2. सुबन्धुः-** सुबन्धुः कदा कुत्र वा आजयत इत्यस्मिन् विषये स्पष्टतया किमपि न ज्ञायते। विश्लेषकैः दण्डिनोऽनन्तरमस्य समयोऽवधारितः। अनेन सुबन्धुः षष्ठशतकस्योत्तरार्धे जनिं लेभे इति निर्णीयते, यतोहि सुबन्धुप्रणीतायां वासवदत्तायां "छन्दोविचितिरिव कुसुमविचित्रा" इति प्रतिपादितम्। "छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः" इति दण्डिना पूर्वमेव प्रतिपादितम्। अनेन सुबन्धुः दण्डिनः परवर्ती सिध्यति। बाणभट्टः हर्षचरिते "कविदर्पदलने समर्था या वासवदत्ता" इत्युल्लिखितम्। अनेन सुबन्धुः बाणात् पूर्ववर्ती सिध्यति। राघवपाण्डवीयस्य लेखकः कविराजः लिखति-

**सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।**
**वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥**

अनेन प्रतीयते यत् सुबन्धुः बाणः कविराजश्च यथाक्रममजायन्त। सुबन्धुः बाणकविराजाभ्यां पूर्ववर्ती आसीत् इति स्पष्टमस्ति। सुबन्धोः वासवदत्ता प्राप्यते। अत्र नायकः राजपुत्रः कन्दर्पकेतुः स्वप्ने स्वप्रियतमां नायिकां वासवदत्तामपश्यत्। सः स्मरपीडामनुभवन् तामन्वेष्टुं प्रयतते। शुकसारिकासाहाय्येन नायकनायिकयोः संयोगो भवति। वासवदत्तायाः सखी नायकाय सन्देशं प्रेषयति नायकनायिकयोः प्रथमं मेलनं च कारयति। वासवदत्ता पाटलिपुत्रस्य राज्ञः शृङ्गारशेखरस्य पुत्री अस्ति, कन्दर्पकेतुश्च चिन्तामणिनामकस्य राज्ञः सुतः। कन्दर्पकेतोः मित्रं मकरन्दः प्रियान्वेषणे तस्य सहायतां करोति। स्वप्नस्थाने अपरिचितां कामपि सुन्दरीं दृष्ट्वा कामपीडितं राजकुमारं कन्दर्पकेतुं यदा मकरन्दः चारित्रेणोपदिशति, तदा कन्दर्पकेतुः कथयति- "नायमुपदेशकालः पच्यन्त इव मे अङ्गानि, कुप्यन्त इवेन्द्रियाणि, भिद्यन्त इव मर्माणि, निस्सरन्तीव प्राणाः, उन्मूल्यन्त इव विवेकाः, नष्टेव स्मृतिः"। वासवदत्तां यथातथोपलभ्य विन्ध्याटवीमागत्य श्रान्तः कन्दर्पकेतुः निद्राति। वासवदत्ता भ्रमणाय गच्छति। भ्रममाणां वासवदत्तामवाप्तुं द्वयोः किरातवर्गयोः मध्ये युद्धं भवति। तदा भीता वासवदत्ता कस्यचिद् ऋषेः आश्रमं प्रविशति। ऋषेः शापात् च शिलारूपमाश्रयते। कन्दर्पकेतुः निद्रापगमे समुत्थितः वासवदत्तामदृष्ट्वा मरणाय प्रयतते। आकाशवाणीं श्रुत्वा सः विरमति। तेनान्विष्टा स्पृष्टा च शिलारूपी वासवदत्ता मानवी भवति। तौ सङ्गतौ भवतः। इत्यस्ति वासवदत्तायाः कथा।

वासवदत्तायाः कथावस्तु लघु किन्तु वर्णनविस्तारस्य तत्र प्राधान्यमस्ति। सुबन्धोः पाण्डित्यं कल्पनामतिशेते। सौन्दर्यवर्णनम्, प्रशस्तिवर्णनम्, विरहोत्कण्ठावर्णनं संयोगवर्णनञ्च अस्य वैशिष्ट्यम्। सूर्योदय-सूर्यास्त-चन्द्रोदय-पर्वत-वन-नदीप्रभृतीनां वर्णने कविप्रतिभा प्रभावपूर्णा। वासवदत्तायाः हृदये उदितस्य प्रथमप्रणयभावस्य तत्प्रभावस्य च चित्रणं स्वाभाविकं प्रतीयते। अत्र गद्ये गौडीरिति प्रयुक्तः शैली अनुप्रासातिशयोक्तिसमासप्रधाना विद्यते। गर्वोक्तिरियं सत्यनुभूयते-

**प्रत्यक्षरश्लेषमयप्रपञ्चविन्यासवैदग्ध्यनिधिप्रबन्धम्।**
**सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः॥**

यद्यपि वासवदत्तायामुपमोत्प्रेक्षाविरोधाभासादयो अलङ्कारास्तथापि सर्वत्र श्लेषालङ्कारस्याधिपत्यं दृश्यते। श्लेषालङ्कारस्य चमत्कारिता प्रशस्यतरा। दृश्यत यथा श्लेषस्यैकमुदाहरणं वासवदत्तायाम्-

**विषधरादप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः।**
**यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः॥**

एवं वासवदत्तायाः चरित्रचित्रणं, प्रकृतिचित्रणं सौन्दर्यवर्णनञ्चातीव महत्त्वपूर्णं सहृदयश्लाघ्यञ्चास्ति। सुबन्धोः वासवदत्ता प्रौढा गद्यमयीरचना गद्यपरम्परायां महत्त्वपूर्णं स्थानं भजति। सर्वमिदमालोच्य एवास्याः वासवदत्तायाः प्रशंसायां हर्षचरिते बाणभट्टः लिखति-

**कवीनामगलद्दर्पो नूनं वासवदत्तया ।**
**शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥**

**3. बाणभट्टः**– बाणभट्टः गद्यपरम्परायां स्वविशिष्टं स्थानं स्थापयति। बाणभट्टस्य जन्म सप्तमशताब्द्यां बिहारप्रान्तस्य शेणनद्यास्तटे प्रीतिकूटनामके ग्रामे वात्स्यायनवंशे बभूव। अस्य पिता चित्रभानुः माता च राजदेवी आस्ताम्। पाशुपतः अस्य प्रपितामहः आसीत् प्रपितामही च राजदेवी। बाणभट्टः संस्कृतकाव्यस्यैकमात्रकविरस्ति यस्य परिचयविषये सम्यक् ज्ञानं भवति। बाणेन कादम्बर्यां हर्षचरिते च स्वविषये विस्तरेण विवृतम्। कादम्बर्यां तेनोक्तम्–

**बभूव वात्स्यायनगोत्रसम्भवो द्विजो जगद्गीतगुणोऽग्रणी सताम्।**
**अनेकगुप्तार्चितपादपङ्कजः कुबेर नामांश इव स्वयंभुः।।**

पुरा बभूव दधीचेः अनुजवधूः अक्षमाला। अक्षमालायाः पुत्रः वत्सः सञ्जातः। वत्सः सरस्वती–दधीच्योः पुत्रस्य सारस्वतस्य पितृव्यपुत्रः आसीत्। वत्सवंशे वात्स्यायनः जातः। वात्स्यायनवंशे कुबेरः बभूव। कुबेरस्य चत्वारः पुत्राः आसन् अच्युतः, ईशानः, हरः, पाशुपतश्च। पाशुपतस्य अर्थपतिनामकः पुत्रः आसीत्। अर्थपतेः एकादशपुत्राः आसन् भृगुः, हंसः, शुचिः, कविः, धर्मः, जातवेदाः, चित्रभानुः, ऋक्षः, अहिदत्तः विश्वरूपश्च। चित्रभानुकुलस्य कुलदीपकः बाणभट्टः आसीत्। बाणभट्टस्य पुत्रः भूषणभट्टः बभूव।

शैशवे बाणभट्टस्य मातापितरौ दिवंगतौ। तस्य पार्श्वे प्रचुरा पैतृकी सम्पत्तिरासीत्। संरक्षणाभावाद् स निरङ्कुशः अभवत्। पश्चात् सः देशाटनं कृत्वा मेधावी अनुभवी च सञ्जातः। देशाटनानन्तरं सः विद्याध्ययनं कृत्वा विद्वान् अभवत्। बाणभट्टस्य गुरुः कश्चिद् भर्वुनामा महायशाः आसीत्। अस्य गुरुः मौखरिराज्ञामपि परमपूज्यः आसीत्। पश्चात् बाणः हर्षवधनस्य सभाकविरभवत्। हर्षवर्धनः बाणं ''वश्यवाक् कविचक्रवर्ती'' इत्युपाधिना अलङ्कृतवान्। हर्षवर्धनः 606 ईस्वीतः 648 ईस्वीपर्यन्तं थानेश्वरस्य राजा आसीत्। अनेन बाणभट्टस्य समयः सप्तमशतकः निर्विवादेन सिद्ध्यति। हर्षवर्धनस्य राज्यसभायाः महाकविः महापण्डितश्चासीत् बाणभट्टः। गोवर्धनाचार्यः बाणविषये सत्यमेवाकथयत्–

**जाता शिखण्डिनी प्राक् यथा शिखण्डी तथावगच्छामि।**
**प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव।।**

बाणभट्टस्य नवग्रन्थाः श्रूयन्ते– कादम्बरी, हर्षचरितम्, चण्डीशतकम्, पार्वतीपरिणयः, मुकुटताडितकम्, पद्यकादम्बरी, शिवशतकम्, शारदाचन्द्रिका रत्नावली नाटिका च। समुपलब्धग्रन्थेषु कादम्बरी हर्षचरितं ग्रन्थद्वयमेव।

कादम्बरी सर्वोत्कृष्टगद्यस्य महनीयरचनाऽस्ति। ''कादम्बरी रसज्ञानामाहारोऽपि न रोचते'' इत्युक्तिः प्रसिद्धा। कादम्बर्याः कथायाः आधारः गुणाढ्यस्य बृहत्कथा मन्यते। कादम्बर्यां जन्मत्रयस्य कथाः आवद्धाः। कादम्बरीचन्द्रापीडयोः महाश्वेतावैशम्पायनयोश्च जन्मत्रयस्य मार्मिकप्रेमकथाऽत्र वर्णिता। तदनुसारं विदिशानगर्यां शूद्रको नाम राजा बभूव। तस्य सभायामेकदा चाण्डालकन्या राज्ञे पञ्चरस्थं शुकमेकमुपाहरत्। शुकः कथयति यत्तस्य मातापितरौ बाल्यकाल एव दिवङ्गतौ। वृक्षादधः पतितं भूमौ सरन्तं शुकं जाबालिपुत्रो हारीतः स्वगुरोराश्रममानीतवान्। शुकं दृष्ट्वा जाबालिः तत्पूर्वजन्मवृत्तान्तमित्थं श्रावयति–

उज्जयिन्यां तारापीडो नाम राजा आसीत्। तस्य पत्नी विलासवती अमात्यश्च शुकनासः आसीत्। गतवयसि राज्ञः पुत्रः चन्द्रापीडोऽभवत्। तस्मिन्नेव समये शुकनाशस्य पुत्रः वैशम्पायनोऽपि अजायत। चन्द्रापीडवैशम्पायनौ गुरुकुले सहैव पठितौ। अमात्यः शुकनासः राजपुत्राय चन्द्रापीडाय यथोचितमुपदेशमददात्। दिग्विजययात्राप्रवृत्तः चन्द्रापीडः गन्धर्वमिथुनमनुधावन् एकं सरोऽच्छोदमपश्यत्। महाश्वेता नाम कापि सुन्दरी तत्र तपः प्रवृत्ताऽऽसीत्। महाश्वेता चन्द्रापीडं स्ववृत्तान्तमुक्तवती। सा कथयति– ''मया पुण्डरीकनामके मुनितनये स्नेहः कृतः। सः लोकान्तरं गतः। तमनुकर्त्तुकामां मां कापि दिव्याङ्गना भूयोऽपि युवयोः सङ्गमो भावीति मां विबोध्य तच्छरीरं लोकान्तरमनैषीत्'' इति। महाश्वेता चन्द्रापीडाय कादम्बरीवृत्तान्तमपि कथितवती। कादम्बरीचन्द्रापीडयोः साक्षात्कारे सति द्वयोरनुरागः सञ्जातः। तस्मिन्नेव काले पितुर्दूतः समागतः चन्द्रापीडश्च स्वराजधानीं प्रत्यावर्तितः। कादम्बर्या चन्द्रापीडविरहे शरीरं त्यक्तुमुद्यतायां तत्सखी पत्रलेखा तां सान्त्वयित्वा चन्द्रापीडस्य पार्श्वमागत्य तदवस्थां तस्मै न्यवेदयत्। राजधानीं गच्छन् चन्द्रापीडः स्वमित्रं वैशम्पायनं तदनुरोधात् महाश्वेतायाः आश्रमे स्थापितवान्। पत्रलेखया सह यदा चन्द्रापीडस्तत्र पुनरागतः तदा शोकमाप्तः महाश्वेता कथयति यत्तव मित्रं ब्राह्मणकुमारः मां कामयमानो मया शापितः तदा सः शुकोऽभवत्। चन्द्रापीडः समाचारमिदं श्रुत्वा विह्वलो भवति प्राणं विसर्जयति च। तदनन्तरं कादम्बरीमहाश्वेते ''शापवशात् युवयोः युष्मद्दयिताभ्यां सह सङ्गमो भावी'' इति दिव्यां वाचं श्रुत्वा तथैव तस्थतुः। पश्चात् पुण्डरीकस्य सखा कपिञ्जलः कादम्बरीमहाश्वेते सूचयति यत् चन्द्रापीडः चन्द्रस्य, वैशम्पायनः पुण्डरीकस्य इन्द्रायुधश्च कपिञ्जलस्यावताराः सन्ति।

शुकः जाबालिऋषेः मुखात् कथाश्रवनानन्तरं ज्ञातवान् यद् स एव पूर्वजन्मनि पुण्डरीकावतारो वैशम्पायनन इति। तेन तस्य जन्मत्रयं पुण्डरीकवैशम्पायनशुकरूपेण प्रसिद्धम्। चन्द्रापीडस्य जन्मत्रयमपि चन्द्रचन्द्रापीडशूद्रकरूपेणाजायत। शापावधेः पूर्णत्वात् शूद्रकस्य देहत्यागः कादम्बरीभुजान्तरालगतस्य चन्द्रापीडस्य सुप्तोत्थितस्य इव विबोधः भवति। शुकस्य देहत्यागात् पुण्डरीकोऽपि पूर्वस्थित्यामायाति। चन्द्रापीडपुण्डरीकयोः सम्मेलनं सञ्जायते। अनन्तरं चन्द्रापीडः कादम्बरीं वैशम्पायनश्च महाश्वेतामवाप्तवान्। कादम्बरीपठनेन ज्ञायते यत् बाणभट्ट मानवहृदयस्य स्फुरद्भावचित्रणस्य, प्रेमालापस्य, करुणालापस्य, भयस्य, विस्मयस्य, चरित्रचित्रणस्य, अलङ्कारप्रयोगस्य प्रकृतिवर्णनस्य च चित्रणे अप्रतिमः। कादम्बर्यां तत्तदलङ्काराणां यादृशः मनोहरः प्रयोगः दृश्यते तद् संस्कृतजगति अन्यत्र नावलोक्यते। अर्थचयने शब्दगुम्फने च न केवलं गद्यकाव्यानि एव अपितु समस्तमपि संस्कृतभाषानिबद्धं वाङ्मयमतिशेते कादम्बरी।

कादम्बर्यां मानवहृदयपक्षस्य प्राधान्यं वर्तते। मानवीयभावनानामभिव्यक्तौ कोमलमनोभावानां च मार्मिकविश्लेषणेऽस्य लेखनी अग्रसरा आसीत्। सः नारीपात्राणां हृदयेषु प्रविश्य स्वानुभूतानां वार्तानां विवरणं प्रस्तौति। कादम्बरीचन्द्रापीडयोः प्रथममिलनप्रसङ्गे उत्पन्नस्य रागोद्बोधस्य चित्रणमतीव मनोहरम्। कादम्बर्याः आमस्तकात्पादपर्यन्तं वर्णने सर्वाः कल्पनाः अहमहमिकया अधावन्। गौरवर्णायाः महाश्वेतायाः वर्णने बाणेनाद्वितीयकल्पनायाः सृष्टिः कृता। तेन चाण्डालकन्या इत्थमलङ्कृत्य प्रस्तुता यत्सा अतिशीघ्रं परिवर्तमाना इन्द्रनीलमणिपुत्रिका इव शोभते। चाण्डालकन्यायाः सौन्दर्यचित्रणे बाणः यासां कल्पनानां मूलोद्भावनाः कृताः ताः सर्वथा स्वाभाविकाः मौलिकाश्च वर्तन्ते। पुरुषपात्राणां वर्णनेऽपि बाणः कुशलः। शूद्रकचन्द्रापीडयोः वर्णनं चित्ताकर्षकम्। बाणेन शबरसेनापतेर्मातङ्गस्य भयङ्कराकारस्य वर्णने अद्भुतं कौशलं दर्शितम्। शुकनासस्य चरित्रचित्रणमपि हृदयावर्जकम्। कादम्बर्याः पात्राणि सर्वत्र सजीवानि सन्ति। प्रजापालकः वीरशूद्रकः, व्यवहारपटुरमात्यः शुकनासः, शुभ्रवसना तपस्विनी महाश्वेता, कमनीयकलेवरा कादम्बरी च सर्वेषां हृदयमाकर्षयन्ति।

कादम्बरी कथाऽन्तर्गता आयाति। पाश्चात्यविद्वांसः तामुपन्यासमपि स्वीकुर्वन्ति। साहित्यदर्पणकारः विश्वनाथस्तु कादम्बरीमनुसृत्य एव कथाकाव्यस्य लक्षणं करोति। अग्निपुराणे कथाविषये लिखितमस्ति-

**श्लोकैः स्ववंशं सङ्क्षेपात् कविर्यत्र प्रशंसति।**
**मुख्यास्यार्थावताराय भवेद्यत्र कथान्तरम्॥**
**परिच्छेदो न यत्र स्यात् भवेद्वातम्भर्कः क्वचित्।**
**सा कथा नाम, तद्गर्भे निबध्नीयाच्चतुष्पदीम्॥**

हर्षचरितं राज्ञो हर्षवर्धनस्य प्रशंसायां लिखितमाख्यायिकाकाव्यं वर्तते। ग्रन्थेऽस्मिन्नष्टौ उच्छ्वासास्सन्ति। बाणभट्टः प्रारम्भे उच्छ्वासत्रये स्वविवरणं अलिखत्। अनन्तरं हर्षवर्धनस्य चरितं वर्णितम्। तदनुसारं हर्षवर्धनस्य पिता प्रभाकरवर्धनः, माता यशोमती ज्येष्ठभ्राता च राज्यवर्धनः आसीत्। हर्षचरितस्य चतुर्थे उच्छ्वासे राजकुमारयोः जन्मवृत्तान्तं वर्णितम्। पञ्चमे उच्छ्वासे राजकुमारयोः विजययात्रा, हूणानां जयार्थं युद्धं हर्षस्य मृगया च विवृता। षष्ठे उच्छ्वासे राज्यवर्धनस्य परावर्तनम्, ग्रहवर्मणः मृत्युः, राज्यश्रियो बन्दीभावः तदुद्धाराय राज्यवर्धनस्य प्रस्थानम्, गौडेश्वरशशाङ्केन तस्य वधश्च वर्णितः। सप्तमे उच्छ्वासे हर्षस्य दिग्विजययात्रा मालवेश्वरविजयश्च वर्णितः। अष्टमे उच्छ्वासे राज्यश्रियः प्राप्तिर्दिवाकरमित्राख्यबौद्धभिक्षुणा सङ्गतिश्च भवति।

हर्षचरिते तत्कालीनस्य समाजस्यातिभव्यं वर्णनमास्ते। विभिन्नानां प्रदेशानां प्रथानाम्, राजप्रसादानाम्, राजनीतीनाम्, सेनाशिविराणाम्, नराणाम्, नगराणाम्, जनपदानाम्, आरामाणाम्, तपोवनानामुपवनानाञ्च चित्रणं वर्तते। अत्र वैभवविलासवर्णनम्, मधुरप्रकृतिचित्रणम्, मौलिकोद्भावना, अलङ्काररञ्जिता छटा सजीवा शैली च महत्त्वपूर्णा। शैली अलङ्कारप्रधाना कल्पनाप्रचुरा च विद्यते। हर्षचरितस्य कथावस्तुचित्रणमपूर्वम्, पदविन्यासस्य सौन्दर्यं लोकोत्तरम्, वर्णनाशक्तिः अप्रतिमा, रचनाचातुरी चानुपमा वर्तन्ते। एतत्सर्वमवलोक्य हर्षचरितस्य श्लाघायां सोड्ढलो कथयति-

**बाणः कवीनामिह चक्रवर्ती चकास्ति यस्योज्ज्वलवर्णशोभम्।**
**एकातपत्रं भुवि पुष्पमूर्ति वंशाश्रयं हर्षचरित्रमेवम्॥**

■ पत्रसङ्केतः- दिल्लीप्रशासने भाषाऽध्यापकः, सर्वोदयबालविद्यालयः,
सी-ब्लॉक, सुल्तानपुरी, दिल्ली-86.

# कालिदासस्य छन्दःशास्त्रपाटवम्

■ डॉ. तुलसीदास परौहा

लौकिकसंस्कृतसाहित्यस्य छन्दोमयीकाव्यरचनापरम्परायाः शुभारम्भः आदिकविमहर्षिवाल्मीकेर्जात इत्यस्ति विपश्चितां मतम्। अत एव प्रतिजानीते ध्वनिकार आनन्दवर्धनः-

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**

**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥** -ध्वन्यालोकः, 1/5

अस्ति प्रथमं काव्यं तावत् वाल्मीकेः यन्निर्गतं तमसातटे क्रौञ्चद्वन्द्ववियोगोत्थम्-

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**

**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥** -वा.रा., 2/15

एवं महर्षिवाल्मीकिसमारम्भा संस्कृतकाव्यरचना विश्वस्मिन्नपि विश्वे साहित्यरचनाक्षेत्रे महतीं प्रौढिं वहन्ती, निष्यन्दन्ती भागीरथीव, मोदयन्ती कामिनीव, पोषयन्ती जननीव, उपदिशन्ती सखेव, शिक्षयन्ती गुरुरिव, आह्लादयन्ती चन्द्रिकेव, पाययन्ती नवरसरुचिरां काव्यसुधां सहृदयहृदयान्, सम्प्राप्य कविताकामिनीविलासं महाकविकालिदासं किमप्यनिर्वचनीयं सौन्दर्यं सौधेयं च दधाना वरीवर्ति। महाकवेः काव्यरचनापाटवं कलापक्षभावपक्षयोरद्भुतं समन्वयं सन्दधाति। शास्त्रदृष्ट्या लोकदृष्ट्या च महाकविरयं सर्वान् अतिशेते। अत एव-

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**

**अद्यापि तत्तुल्यकवेरभावात् अनामिका सार्थवती बभूव॥** इति सङ्गच्छते।

अहमत्र कालिदासस्य छन्दःशास्त्रपाटवमधिकृत्य यथाशास्त्रं चर्चये। यथा हि पृथक् पृथग् रसानां, भावानामलङ्काराणां चाभिव्यञ्जनाय पृथक् पृथग् वर्णानां विधानं क्रियते तथैव पृथक् पृथक् रसानां व्यञ्जनायै पृथक् पृथग् छन्दसां प्रयोगव्यवस्था विद्यते। कस्य रसस्य पुष्ट्यै केन छन्दसा विरचिता रचना भवेदत्र बहुशः सुचिन्तितं शास्त्रकारैः। अत्र क्षेमेन्द्रः कथयति सुवृत्ततिलके-

**काव्ये रसानुसारेण वर्णनानुगुणेन च।**

**कुर्वीत सर्ववृत्तानां विनियोगं विभागवित्॥** -सुवृत्ततिलकम्

रसानुकूलछन्दोविधानस्य कर्तारो रससिद्धाः वाल्मीकिव्यासकालिदाससदृशाः महाकवय एव सन्ति। अतः छन्दोयोजनायाः परिज्ञानाय तेषामेव काव्यानि प्रमाणानि। अत एव काव्यप्रकाशे मम्मटः काव्यहेतुषु काव्यज्ञशिक्षयाभ्यासः (काव्यप्रकाशः, 1/3) इत्यकथयत्। छन्दोयोजनायाः शिक्षणाय महाकवीनां काव्येषु कृता छन्दोयोजनैवाध्येयेत्याशयः। आचार्यः क्षेमेन्द्रः स्वीये सुवृत्ततिलके विविधछन्दसां प्रयोगौचित्यं निर्दिशन् वक्ति-

**आरम्भे सर्गबन्धस्य कथाविस्तारसङ्ग्रहे।**

**समोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम्॥**

**शृङ्गारालम्बनोदारनायिकारूपवर्णनम् ।**

**वसन्तादितदङ्गं च सच्छायमुपजातिभिः॥**

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु।**

**षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते ॥**

वसन्ततिलकं भाति सङ्करे वीररौद्रयोः।
कुर्यात् सर्गस्य पर्यन्ते मालिनीं द्रुततालवत्॥
उपपन्ने परिच्छेदकाले शिखरिणी मता।
औदार्यरुचिरौचित्य-विचारे हरिणी मता॥
साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा।
प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते॥
शौर्यस्तवे नृपादीनां शार्दूलविक्रीडितं मतम्।
सावेगपवनादीनां वर्णनं स्त्रग्धरा मता॥
दीर्घकतौटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम्।
निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः॥
शेषाणामप्यनुक्तानां वृत्तानां विषयं विना।
वैचित्र्यमात्रपात्राणां विनियोगो न दर्शितः॥
इत्येष वश्यवचसां सर्गवृत्तप्रसङ्गिनाम्।
अदो विभागः सद्वृत्तविनिवेशे विशेषवान्॥ इत्यादि।

क्षेमेन्द्रस्य काल एकादशशताब्द्याः पूर्वार्द्धकालो विद्यते। महाकविः कालिदासो विद्यते तस्मात् पूर्ववर्ती। अतः सुवृत्तलिके वर्णितः छन्दोयोजनानिर्देशः परवर्तिनां काव्यचिकीर्षूणां कृते कालिदासकृतछन्दोयोजनानुगुणमेव कृतः क्षेमेन्द्रेण। कालिदासीयं छन्दोविधानपाटवं दर्शं दर्शं, हर्षप्रकर्षं चानुभवन् वक्ति स एव-

सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना॥
सुवर्णार्हप्रबन्धेषु यथास्थाननिवेशिनाम्।
रत्नानामपि वृत्तानां भवत्यभ्यधिका रुचिः॥

महाकविक्षेमेन्द्रस्य छन्दोविधानात्मको निर्देशः सर्वथा श्लाघनीयतां भजति। छन्दसां विषये महदावश्यकमेतत् यत् कुत्र किं छन्दः प्रयुज्येत। कस्मिन् प्रसङ्गे किं युक्तं किमयुक्तमिति। रीतिग्रन्थकाराः काव्यदोषान् परिगणयन्ते हतवृत्तत्वं नाम दोषमपि स्वीकृतवन्तः। मम्मटोऽपि सप्तमोल्लासे हतवृत्तत्वं काव्यदोषत्वेन स्वीकुर्वन् वक्ति- हतं लक्षणानुसरणेऽप्यश्रव्यं, अप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तत् हतवृत्तम्।

एतेन छन्दःशास्त्रीयं पाटवं कविषु, रसानुगुणं च छन्दोविधानं काव्येषु कियदावश्यकमिति ध्वन्यते। इह केवलमेतद् विचार्यते यत् महाकविः स्वीयकाव्येषु कुत्र रसभावयोः प्रकर्षाय तदनुगुणं कीदृशं छन्दोविधानमकरोदिति।

महाकविकालिदासेन स्वीयकाव्येषु वंशवर्णनाय, तपोवर्णनाय, नायकनायिकासौन्दर्यं च वर्णयितुं प्रयुक्तमुपजातिवृत्तम्। यत्र सुदीर्घकथायाः सङ्क्षेपः, उपदेशो वाऽभीष्टस्तत्रानुष्टुप् प्रयुक्तम्। वंशस्थस्य प्रयोगोऽकारि वीरतानिदर्शने, वैतालीयस्य च करुणप्रसङ्गे। द्रुतविलम्बितं समृद्धिवर्णने प्रयुक्तं लसति। एवमेव खेदप्रकटने (तत्र खेदो रतिजनितो, दुष्कर्मजनितो भवेत् पश्चात्तापजनितो वा) कामक्रीडाऽऽखेटादि- वर्णनप्रसङ्गे च रथोद्धतायाः प्रयोगो दृश्यते। मन्दाक्रान्तां पश्यामश्चेत् प्रवासस्य विरहजनितपीडायाः, वर्षर्तोश्च वर्णनप्रसङ्गे चारुतरं प्रयुक्तम्। एवमेव सफलतया सह पूर्णतां प्राप्तवति सर्गेऽन्तिमे पद्ये मालिनी, हर्षेण सह पूर्णतां याते सर्गान्ते प्रहर्षिणी प्रयुक्ता कविना। अन्यत्रापि प्रहर्षिण्याः प्रयोगो विद्यते चेत् तत्र दुःखान्ते हर्षानुभूतिर्हर्षातिरेको वा गम्यते। हरिणीवृत्तस्य प्रयोगो नायक-नायिकाऽभ्युत्थाने सौभाग्यवर्णने वा, वसन्ततिलकायाश्च कार्यस्य सफलतायां, ऋतुवर्णने च प्रयोगो विद्यते। सफलतार्थं प्रस्थाने प्राप्तौ वा पुष्पिताग्रा, निराशया सह निवृत्तौ त्रोटकम्। कृतकृत्यतायाः प्रकाशने

शालिनी, वृथावीरताप्रदर्शने चौपच्छन्दसिकं प्रयुक्तम्। संयोगतः स्वयमेव प्राप्तायां विपत्तौ सम्पत्तौ वा स्वागता, विभ्रमे मत्तमयूरः, प्रपञ्चपरित्यागे नाराचः, वीरतावर्णने च शार्दूलविक्रीडितं प्रयुक्तं विद्यते।

उपर्युक्तेषु रसभावानुकूलप्रयुक्तेषु छन्दःसु अनुष्टुप्छन्दसः प्रयोगो विलसति कालिदासीयकाव्येषु रघुवंशे प्रथमे, चतुर्थे, दशमे, द्वादशे, पञ्चदशे, सप्तदशे च सर्गे, कुमारसम्भवे च द्वितीये, षष्ठे, दशमे, षोडशे च सर्गे। उपजातिः प्रयुक्ता रघुवंशे द्वितीये, पञ्चमे, षष्ठे, सप्तमे, त्रयोदशे, चतुर्दशे, षोडशे, अष्टादशे च सर्गे, कुमारसम्भवे प्रथमे, तृतीये, सप्तमे, नवमे, एकादशे, द्वादशे, त्रयोदशे च सर्गे, ऋतुसंहारे च प्रथमे, द्वितीये, चतुर्थे, पञ्चमे, षष्ठे च सर्गे कविताकामिनीविलासेन कालिदासेनैव।

प्रयुक्तो वंशस्थः कविना रघुवंशे तृतीये सर्गे, कुमारसम्भवे पञ्चमे, चतुर्दशे, पञ्चदशे च सर्गे। वैतालीयस्य प्रयोगः रघुवंशे अष्टमे सर्गे, नवमे च सर्गे विद्यते। एतदेव कुमारसम्भवे चतुर्थे सर्गे। द्रुतविलम्बितं लभ्यते रघुवंशे नवमे। रथोद्धतायाः प्रयोगो रघुवंशे नवमे, एकादशे, एकोनविंशतिसर्गे च कुमारसम्भवे च अष्टमसर्गे विद्यते।

मन्दाक्रान्तायाः प्रयोगो रघुवंशेऽष्टमे, चतुर्दशे, पञ्चदशे, षोडशे, सप्तदशे, एकोनविंशतौ च मेघदूतं च प्रतिपद्यं कृतो विलसति। एवमेव मालिन्याः प्रयोगो रघुवंशे द्वितीये, पञ्चमे, षष्ठे, सप्तमे, नवमे, दशमे, एकादशे, द्वादशे च सर्गे। कुमारे तु प्रथमे द्वितीये, तृतीये, सप्तमे, अष्टमे, त्रयोदशे, चतुर्दशे, सप्तदशे च कृतो विभाति। एतदेव विद्यते ऋतृसंहारे, प्रथमे, द्वितीये, तृतीये, चतुर्थे, पञ्चमे, षष्ठे च सर्गे। प्रहर्षिण्याः प्रयोगो लभ्यते रघुवंशे चतुर्थे, अष्टमे, त्रयोदशे च सर्गे। प्रयुक्तं हरिणीवृत्तं रघुवंशे तृतीये, कुमारे चैकादशे, द्वादशे, षोडशे च सर्गे। लभ्यते वसन्ततिलकेव वसन्ततिलका रघुवंशे पञ्चमे, अष्टमे, नवमे, एकादशे, द्वादशे, त्रयोदशे, षोडशे, अष्टादशे, एकोनविंशतौ च सर्गे, कुमारे च तृतीये, चतुर्थे, पञ्चमे, सप्तदशे सर्गे, ऋतुसंहारे तु द्वितीये, तृतीये, चतुर्थे, षष्ठे च सर्गे।

पुष्पिताग्राप्रयोगः कविना कृतो रघुवंशे पञ्चमे, षष्ठे, नवमे च सर्गे, कुमारसम्भवे च चतुर्थे, षष्ठे, नवमे, सप्तदशे च विलसति। त्रोटकप्रयोगं द्रष्टुमिच्छामश्चेत् द्रष्टव्यं तत् रघुवंशेऽष्टमे सर्गे। शालिनीवृत्तस्य प्रयोगो रघुवंशे नवमे, औपच्छन्दसिकं रघुवंशे नवमे सर्गे, स्वागतायाश्च प्रयोगो नवमे सर्गे रघुवंशीये कृतो विद्यते। कालिदासीयकाव्येषु नृत्यति मत्तमयूरो नवमे सर्गे रघुवंशस्य, विलसति नाराचो रघुवंशे द्वादशे सर्गे, विक्रीडति च शार्दूलविक्रीडितं कुमारे पञ्चदशे सर्गे, ऋतुसंहारे च षष्ठे सर्गे। तत्र मालिन्याः प्रयोगः साफल्ययुक्ते पूर्णे सति कुमारसम्भवस्य सप्तदशसर्गान्ते रुचिरतया विभाति तद्यथा-

**इति विषमशरारेः सूनुना जिष्णुनाजौ**
**त्रिभुवनवरशल्ये प्रोद्धृते दानवेन्द्रे।**
**बलरिपुरथ नाकस्याधिपत्यं प्रपद्य**
**व्यजयत सुरचूडारत्नघृष्टाग्रपादः॥** -कुमारसम्भवम्, 17/55 इत्यादि।

एवं विविधकाव्यशास्त्रीयतत्त्वेषु अन्यतमं रसानुगुणं छन्दोविधानम् महाकवेः काव्येषु मृदु मौखर्यं सन्दधाति। कालिदासस्य यथा विद्यते अलङ्कारशास्त्रपाटवं तथैव किल विलसति छन्दःशास्त्रीयपाटवत्वम्। न हि कालिदासमन्तराऽन्ये कवयः एतावच्चातुर्येण छन्दांसि व्यदधुः।

**सन्दर्भग्रन्थाः-**

1. रघुवंशमहाकाव्यम्।
2. कुमारसम्भवम्।
3. मेघदूतम्।
4. ऋतुसंहारम्।
5. छन्दःशास्त्रम्।
6. सुवृत्ततिलकम्।
7. ध्वन्यालोकः।
8. वाल्मीकिरामायणम्।

■ पत्रसङ्केतः- सहाचार्योऽध्यक्षश्च, संस्कृतसाहित्यदर्शनविभागः,
महर्षिपाणिनिसंस्कृतवैदिकविश्वविद्यालयः,
उज्जयिनी (म.प्र.)।

# संस्कृतवाङ्मये 'महाकरुणा'

■ डॉ. ग़ज़ाला अंसारी

बुद्धवचनानि त्रिधा विभज्यन्ते- सुत्तपिटकं विनयपिटकम् अभिधम्मपिटकञ्चेति त्रिष्वपि पिटकेषु ब्रह्मविहाराणां विवेचनम्प्राप्यते। 'विहरन्ति एतेहि विहारा:, ब्रह्मणो विहारा ब्रह्मविहारा"[1] इति। एते ब्रह्मविहारा: चत्वार: सन्ति- मैत्री (मेत्ता), करुणा, मुदिता उपेक्षा (उपेक्खा) चेति।[2] एतेषु 'मैत्री' समसत्त्वान् प्रति जायते, 'करुणा' अवरसत्त्वान् प्रति भवति, मुदिता अपरसत्त्वान् प्रति सम्भवति उपेक्षा च शत्रुत्वभावम्प्रति प्रतीयते। अनुमीयते यन्मैत्र्या एव सकारात्मकपरिणति: मुदिता भवति। करुणा तु सकारात्मकत्वेनैव प्रवर्त्तते। सा अपि यदा ताटस्थ्येन प्रवर्त्तते, तदा 'उपेक्षा' भवति।

रीज् डेविसमहाभागस्य शब्दकोशे 'करुणा' इत्यस्य पदस्य कृते आङ्ग्लभाषायां 'Composition' इति पदं प्राप्यते यस्य व्याख्या एवं क्रियते-

**"Karuna is one of the qualities of character significant of a human being who has attained enfaranahisement of heart (ceto-vimutti) in the setiments."**[3] -(R. Devis - 197)

'परदुक्खे सति साधूनं हदयकम्पनं करोतीति करुणा'[4] यथा वा 'किणातीति करुणा परदुक्खे सति कारुणिकं'[5] विनासेति करुणा उता हो 'परदुक्खे सति कारुणिकानं हदयवेदनं करोतीति करुणा'[6] एवञ्च 'करुणा परदुक्खं विक्खिपति अपनेतीति'[7], 'करुणा सङ्गहिताति दठ्ठब्बं'[8], 'करुणा सब्बगुणानं मूलन्ति'[9]। "दुक्खितेसु वा किरयति पसारयति करुणा, अथ वा किणातीति करुणा"[10] "पर दुक्खे सति साधूनं हदयखेदं करोतीति वा करुणा अथ वा कमिति सुखं, तं रुन्धतीति करुणा"[11] "किरयति वा दुक्खितेपु पसारियतीति करुणा।"[12]

इयमेव करुणा यदा रसवत् साधारणीकृता भवेत्तदा 'महाकरुणा'रूपेण परिचीयते पालिसाहित्ये। 'यदा च दु:खितबालप्रियेष्विव दु:खोद्धारेच्छाकारा स्वरसवाहिनी सर्वसत्त्वेषु समप्रवृत्ता कृपायै भवति, तदा सा महाकरुणा व्यपदेशं लभते'। पालिभाष्यकोशे महाकरुणाविषये उल्लिखितमस्ति 'अथ वा महापिसयताय महानुभावताय महाबलताय च महती करुणाति महाकरुणा'[13] महाकारुणिकस्साति एत्थ सब्बसत्तविसयत्ता महुस्साहप्पभवत्ता च महती करुणा महाकरुणा[14]।

ध्यातव्यमत्र यत् भगवतो बुद्धस्यापरं नाम 'महाकारुणिक' इति। अस्य पदस्यापि विवेचनं पालिभाष्यकोशे प्राप्यते, 'महाकारुणिकस्साति यो करुणाय कम्पितदहयत्ता लोकहितत्थं अतिदुक्कर किरियाय अनेकप्पकारं तादिसं संसारदुक्खमनुभवित्वा आगतो, तस्स महाकारुणिकस्याति अत्थो। भगवतो हि करुणा निरवसेसेसु सत्तेसु पवत्तति, पवत्तमाना च अनञ्ञसाधारणा पवत्तति, दिट्ठधम्मिकादिभेदञ्च महन्तमेव सत्तानं हितसुखं एकन्ततो निप्फादेति महाकारुणाय नियुत्तोति महाकारुणिको महन्तो कारुणिकोति महाकारुणिको। अथ वा महती पसत्था करुणा अस्स अत्थीति महाकारुणिको।[15]

अर्थात् भगवतो हि करुणा निरवशेषेसु सत्त्वेषु प्रवर्त्तते प्रवर्त्तमाना च दृष्टिधर्मिकादिभेदेन सत्त्वानां हितं सुखं (च) एकान्ततो निष्पादयति, महाकारुण्याय नियोजयति, महाकारुणिक इति अथवा महती प्रशस्ता करुणा अस्य अस्तीति महाकारुणिक इति।

संस्कृतवाङ्मय इयं करुणा 'करुणा' इति पदेन व्यवह्रियते। नवरसरुचिरा कवेर्भारती। तेषु नवरसेषु करुणो[16]ऽपि एको रस:। रामायणे हि करुणो रस: स्वयमादिकविवाल्मीकिना संसूचित:। करुणरसस्य स्थायिभाव शोक:। स खलु लौकिकशोकव्यतिरिक्तां स्वचित्तद्रुतिस्वरूपतां प्रतिपन्न: हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां चावाप्त: करुणरसरूपतामातनोति। तमसानदीं गच्छतो व्याधेन निहतङ्क्रौञ्चन्दृष्ट्वा मुनेरयमेव शोक: श्लोकरूपतामवाप्तो यथा-

**मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**

**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**[17]

श्लोकोऽयत्र तु मुनेरपि तु क्रौञ्चाक्रन्दनेन तच्चेतसः कारुणिकतया तथाभूतविभावतदुत्थाक्रन्दाद्यनुभाव-चर्वणतया साधारणीकरणेन चर्वणोचितशोकस्थायिभावात्मककरुणतामापद्यते।

नवनवोन्मेषशालिनीप्रतिभायाः कृते भारतीया धरा नितान्तमुर्वरा। अत्र वाल्मीकिना या करुणस्य धारा प्रादुर्भाविता सैव बुद्धकाले सुविस्तृता सागरतया परिवर्तिता 'महाकरुणा' इति रूपेणैव परिणमति यतो हि बुद्धवचनेषु बौद्धग्रन्थेषु च सर्वत्र करुणाया एव प्राधान्यन्दरीदृश्यते। मैत्रीकरुणामुदितोपेक्षाः सन्ति ब्रह्मविहाराः इति पूर्वमेवोक्तम्। एतेषु चतुर्षु ब्रह्मविहारेषु 'करुणा' अल्पसत्त्वानाम्प्रति प्रामुख्येन दृश्यते। तस्मिन् बुद्धकाले अल्पसत्त्वानाम्बाहुल्यं वर्तत एव। सर्वसंसारं दुःखमयमेव दृष्टवान् भगवान् बुद्धः। तच्चेतसि सर्वजनानां दुःखनिवृत्त्यर्थं महाकरुणायाः प्रादुर्भावोऽभूत्। यतो हि तेषां जनानां दुःखनिवारणार्थं करुणा एव सर्वसमर्था। बुद्धस्य ये अनुयायिनः सन्ति तेऽपि करुणामार्गानुगामिनो भूत्वैव सर्वदुःखनिवृत्त्यर्थमेव प्रयतन्ते। ते सर्वथा महाकरुणामेवानुपालयन्ति।

वाल्मीकेः क्रौञ्चवधानन्तरं काव्यसर्जनात् प्राक् या करुणा वर्तते सा शोकरूपेणैवासीत्। सा तदानीं रसरूपा नासीत्। यदा सा श्लोकत्वरूपेण निःसरति तदा ब्रह्मानन्दसहोदरसदृशी दुःखनिवृत्तिरूपा एव भवति अर्थात् यथा यथा श्लोकरूपेण परिणमति तथा तथा रसरूपतामावहति। सैव स्थिति बुद्धस्यापि वर्त्तते। यदा सः सर्वसंसारं दुःखमयं पश्यति तदा स सांसारिकस्य दुःखनिवृत्त्यर्थं तपोमार्गेण प्रयतते। तदा पुनः बुद्धत्वोपलब्धिर्भवति। तदैव सः दुःखनिरोधगामिसरणिमनुवर्तते। सा सरणिः महाकरुणरूपा एव आसीत्।

शिक्षासमुच्चये प्राप्यते, 'न भगवन् बोधिसत्त्वेन अतिबहुषु धर्मेषु शिक्षितव्यम्। एक एव धर्मो बोधिसत्त्वेन स्वाराधितः कर्त्तव्यः सुप्रतिबद्धः। तस्य करतलगताः सर्वे बुद्धधर्मा करतलगता भवन्ति। --एवमेव भगवन् महाकरुणायां सत्यां बोधिकारणानां धर्माणां प्रवृत्तिर्भवतीतिः।[18] करुणया एव बोधिसत्त्वस्य चर्यारम्भो जातः, बोधि चर्यावतारपञ्जिकायामुल्लिखितमस्ति, 'किमारम्भा मञ्जुश्रीः बोधिसत्त्वानां चर्या किमधिष्ठाना?' मञ्जुश्रीराह- 'महाकरुणारम्भा देवपुत्र, बोधिसत्त्वानां चर्या सत्त्वाधिष्ठाना।"[19]

'समाहितचेतसो यथाभूतदर्शनं भवति। यथाभूतदर्शिनो बोधिसत्त्वस्य सत्त्वेषु महाकरुणा प्रवर्तते। इदं मया समाधिमुखं सर्वतत्त्वानां कृते निष्पादयितव्यम्। स तया महाकरुणया संचोद्यमानोऽधिशीलमधिचित्तमधिप्रज्ञं च शिक्षाः परिपूर्य अनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते।[20]

अत्र एको विचारणीयः प्रश्नो यत् वाल्मीकिः रामचरित्रेणैव लोकव्यवहारं दृष्टवान्। यत्र रामे सर्वदुःखानां चरमोत्कर्षः परिलक्ष्यत एव, तत्रैव तस्मिन्नेव रामे सर्वदुःखनिवृत्तिरपि सम्भवति इति वाल्मीकिना प्रतिपादितम्, परञ्च बुद्धो यत् संसारं पश्यति स प्रतिसत्त्वानां कृते इत्यमुमेवानुपालयति। वाल्मीकिः अलौकिकतामवतारयति लोके। बुद्धस्तु लोकमेव लोकोत्तरं कर्तुं चेष्टते। इत्यनयोर्मध्ये विभेदोऽपि दृश्यते। वाल्मीकेः करुणा पक्षिणः प्रारभ्य परमतत्त्वपर्यन्तमासीत्, बुद्धस्य करुणा व्यष्टेरारभ्य समष्टिपर्यन्तमासीत्।

भवभूतिः एकतस्तु वैदिकपरम्परां न परित्यजति अपरतश्च बुद्धस्य सिद्धान्तानपि सहर्षमङ्गीकरोति। एवम्प्रकारेण वैदिकबौद्धयोर्मध्ये भवभूतेः साहित्यं सुशोभते। बुद्धस्य या करुणा दृश्यते तदवच्छिन्नमेव भवभूतेः कारुण्यमपि प्रवर्त्तते। तदुक्तमेव-

**एको रसः करुण एव निमित्तभेदाद्**

**भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्।**

**आवर्तबुद्बुदतरङ्गमयान् विकारान्**

**अम्भो यथा सलिलमेव हि तत्समस्तम्।।**[21]

भवभूतिकृत उत्तररामचरितविषये आनन्दवर्द्धनस्य कथनं समीचीनं प्रतीयते यत्-

**प्रसिद्धेऽपि प्रबन्धानां नाना रसनिबन्धने।**

**एको रसोऽङ्गी कर्त्तव्यस्तेषामुत्कर्षमिच्छता।।**[22]

भवभूतिः करुणरसमेवाङ्गीकरोति। करुणाश्रयस्य स्थितिरत्र मार्मिकरूपेण चित्रिता यथा-

**दलति हृदयं शोकोद्वेगाद् द्विधा न तु भिद्यते**

**वहति विकलः कायो मोहो न मुञ्चति चेतनाम्।**

**ज्वलयति तनुमन्तर्दाहः करोति न भस्मसात्**

**प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्।।**[23]

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्'[24] 'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथा पुटपाकसमाकाशो रामस्य करुणो रसः'[25] 'करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी'[26] प्रभृतीभिरुक्तिभिर्भवभूतौ करुणरस एव प्रामुख्यम्भजते।

उत्तररामचरितं महावीरचरितं चेति भवभूतेर्नाटकद्वयस्योपजीव्यं वाल्मीकिप्रणीतरामायणमहाकाव्यम्। वाल्मीकिं रामञ्च स्तौति भवभूतिः-

**प्राचेतसो मुनिवृषा प्रथमः कवीनां यत्पावनं रघुपतेः प्रणिनाय वृत्तम्।**

**भक्तस्य तत्र समरंसत मेऽपि वाचस्तत्सुप्रसन्नमनसः कृतिनो भजन्ताम्।।**[27]

भवभूतिः रामायणं शब्दब्रह्मणो विवर्तं कथयति- अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।[28]

भवभूतेः तृतीयं काव्यं 'मालतीमाधवम्' इति प्रकरणम्। तत्रापि बौद्धसंस्कृतिः दृश्यते। महाकरुणावशादेव मालतीमाधवप्रकरणे बौद्धभिक्षुणीकामन्दकी चीरचीवरविरुद्धमेव स्वकीय- म्परिचयम्प्रस्तौति।[29] प्रकरणेऽस्मिन् एकतो बुद्धप्रभाववशाद् 'अत्तदीपो भव' इत्यस्यावधारणा दृश्यते अपरतश्च वैदिकपरम्पराम्प्रति महतो निष्ठाऽपि परिलक्ष्यते। बुद्धवचने सर्वलोकमङ्गलकामना वर्तते- **"चरतु भिक्खवे चारिकं बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय अत्थाय हिताय सुखाय देवमनुस्सानं"**।[30] भवभूतिरपि बुद्धवत् सर्वसत्त्वानाङ्कृते मङ्गलमेव कामयते-

**शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।**

**दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः।।**[31]

वस्तुतस्तु बुद्धस्य वाल्मीकेश्च या करुणा सैव भवभूतेः चित्तस्य विषयीभूता भवति। एकतस्तु वाल्मीकिरामायणस्य प्रारम्भः करुणावशादेव सम्भवति अपरतश्च भवभूतिसाहित्येऽपि कारुणिकताया एव प्राधान्यन्दरीदृश्यते। अतः एवं वक्तुं शक्यते यत् वाल्मीकिबुद्धभवभूतीनां करुणाविषये न किञ्चिदपि वैभिन्न्यम्। तत्कालीनसामाजिकराजनैतिकार्थिक-परिस्थितिम्परिलक्ष्य तथा वैयक्तिकवैशिष्ट्यमप्यङ्गीकृत्य यत्किञ्चित् वैभिन्न्यं दृश्यते, ततु स्वाभाविकमेव। किञ्च अन्तर्मुखीभूता या महाकरुणाया भावना सा वाल्मीकिबुद्धभवभूतिषु न काचिद् भिन्ना अपि तु समभावेनैवाङ्गीकृता इति मे मतिः।

नूनमियमेव 'महाकरुणा' काव्यकारिणी। करुणां विहाय कस्यापि कवेः काव्यम्मार्मिकन्न भवितुमर्हति। काव्ये चित्तद्रवीभूतकरणाय करुणामतिरिच्य कापि शक्तिर्न परिलक्ष्यते। अत एव आर्तत्राणपरता प्राप्यते कविपरिभाषायाम्-

**नानृषिः कविरित्युक्तो नाप्रभुर्नाप्यधार्मिकः।**

**नानासक्तो न चासक्तो नार्तत्राणपराङ्मुखः।।**[32]

करुणाभिभूतो कविः 'नार्तत्राणपराङ्मुखो भूत्वा' एव कवित्वपदमलङ्करोतीति। किञ्च यदा कवौ करुणा प्रादुर्भवति तदा स कविर्भवति परञ्च तस्मिन्नेव कवौ यदा महाकरुणा सञ्जाता तदा स एव महाकवित्वपदवीमवाप्य चकास्ति। स एव महाकारुणिकः सुकृती रससिद्धः कविर्भूत्वा सर्वोत्कर्षेण जयति, यस्य यशःकाये जरामरणजं भयन्नास्ति।

**सन्दर्भसङ्केतः-**


1. संयुत्तनिकाय, अट्ठकथा, CSCD 3, वि.वि.वि. प्रकाशन, इगतपुरी, महाराष्ट्र।
2. मज्झिमनिकाय, 1/356.
3. R. Devis, pp. 1975.
4. अट्ठसालिनी, मूलपर्यायवग्ग, मूलपण्णासटीका मज्झिमनिकाय-1.
5. अट्ठसालिनी, एककनिपात, अंगुत्तरनिकाय टीका-2.
6. परमत्थदीपिनी, सङ्गहमहाटीका पाठ, सूत्र सं.-115.
7. मूलपण्णास टीका, मज्झिमनिकाय, टीका-1.
8. मूलपण्णास टीका, मज्झिमनिकाय 1-3.
9. मूलपण्णास टीका, मज्झिमनिकाय 1-260.
10. विमतिविनोदिनीटीका, विनयपिटकटीका, 1/3.
11. सीलक्खवग्गटीका, दीघनिकाय-1.
12. नेत्तिप्रकरणटीका, खुद्दक...............
13. सारत्थदीपिनीटीका, 1/7, विनयपिटकटीका।
14. वजिरबुद्धिटीका, विनयपिटकटीका, 0.8, पाराजिकपण्णना।
15. सारत्थदीपिनीटीका, विनयपिटकटीका।
16. साहित्यदर्पणः, 3/222-225.
17. ध्वन्यालोकः, 1/6, वृत्तिः।
18. शिक्षासमुच्चयः, पृ.सं.-151, चतुर्विंशतीति कारिकायाः पञ्जिका, मिथिला विद्यापीठम्, 1999..
19. प्रज्ञापारमिता, नवमो परिच्छेदः, पञ्चसप्ततीति कारिकायाः पञ्जिका, दरभङ्गास्थ मिथिला विद्यापीठेन प्रकाशितम्, 1988.
20. शिक्षासमुच्चयः, पृ.सं.-67, अष्टमकारिकाया वृत्तौ।
21. उत्तररामचरितम्, 3/47.
22. ध्वन्यालोकः, 3/21.
23. उत्तररामचरितम्, 3/31.
24. उत्तररामचरितम्, 1/28.
25. उत्तररामचरितम्, 3/1.
26. उत्तररामचरितम्, 3/4.
27. महावीरचरितम्, 1/7.
28. उत्तररामचरितम्, 2/16.
29. मालतीमाधवम्, तृतीयाङ्कः।
30. विनय महावग्ग, दीघनिकाय, खण्ड-2, महापदानसुत्तं-1.
31. मालतीमाधवम्, 10/24.
32. शाकुन्तलं धर्मविज्ञानम्।


■ पत्रसङ्केतः- सहायकाचार्या, साहित्यविभागः, राष्ट्रिय संस्कृत संस्थान (मा.वि.वि.), लखनऊ परिसर, लखनऊ।

# भवभूतेः केचन विशेषाः

■ डॉ. सिद्धिदात्री भारद्वाजः

**उत्तरे रामचरिते भवभूतिर्विशिष्यते** इत्युक्तिः सर्वानपि सहृदयान् समाकर्षति। उत्तररामचरिताद् अतिरिक्तं महावीरचरितम्, मालतीमाधवं च नाट्यरत्नं तद्रचयितुर्भवभूतेः प्रतिभाविशेषं प्रचुरं समभिव्यनक्ति। (750-800)-वैक्रमाब्दान्तरालवर्ती भवभूतिः कान्यकुब्जेश्वरस्य यशोवर्मणः सभापण्डितोऽभूदिति राजतरङ्गिणी स्फुटमभिधत्ते। तद्यथा-

**कविवाक्पति - राजश्रीभवभूत्यादिसेवितः ।**
**जितो ययौ यशोवर्मा तद्गुणस्तुति-वन्दिताम्।।** इति[1]।

790 वैक्रमाब्दे काश्मीरनरेशेन लाटादित्येन यशोवर्मा विजित इत्येतद् सुस्पष्टं विज्ञायते उपर्युक्तपद्येन। 857 वैक्रमाब्दे वामनाचार्येण महावीरचरितस्य पद्यविशेषः समुद्ध्रियते। तद्यथा-

**दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतष्-**
**टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।**
**द्राक्पर्यस्तकपालसम्पुटमिलद्-ब्रह्माण्डभाण्डोदर-**
**भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति।।** इति[2]।

यशोवर्मणः सभापतिना वाक्पतिराजेन कविना **गउडवहो** काव्ये 797 वैक्रमाब्दात् प्रागेव भवभूतिः स्मर्यते। तद्यथा-

**भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति।**
**यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु।।** इति[3]।

हर्षसभा-कविना बाणभट्टेन 715 वैक्रमाब्दात् प्राग्भवेन अस्मृतस्य भवभूतेः बाणवामनान्तरालवर्तिनः परिचयः मालतीमाधवे महावीरचरिते च प्रस्तावनामध्ये समुल्लिख्यते। तदनुसारं विज्ञायते यद् भवभूतिः विदर्भस्थ-पद्मपुराभिजनः तैत्तिरीयशाखामधीते स्म। उदुम्बरवंशयस्यास्य पितामहः भट्टगोपालो विद्वत्प्रवरो बभूवाथ नीलकण्ठोऽस्य पिता च। श्रीकण्ठनामासौ यत्स्वपद्यांशद्वयमधिकृत्य भवभूतिं नाम प्रपेदे तदेतद् निभाल्यताम्-

**साम्बा पुनातु भवभूतिपवित्रमूर्तिरिति[4] गिरिजायाः कुचौ वन्दे भवभूतिसिताननौ** इति च।[5] भवभूतेः प्रथमा कृतिः मालतीमाधवं विद्यते। प्रकरणसंज्ञकेऽस्मिन् नाटके दश अङ्काः परिकल्पिताः। आसीत् पद्मावतीनरेशस्य मन्त्री भूरिवसुः यस्य पुत्री मालतीसंज्ञया पप्रथे। अथ यो विदर्भराजस्य मन्त्री देवरातः तस्य सुतः माधवनाम्ना सुप्रथितः। सतीर्थ्याभ्याम् भूरिवसुदेवराताभ्याम् प्रथमे वयसि यत् प्रतिज्ञातं तयोरपत्ययोः वैवाहिकसम्बन्धो भविष्यतीति। सत्यपि अन्तराये सोऽयं मालती-माधवयोः विवाहो मिलनसुखं च समजायतेति मालतीमाधवप्रकरणे कवेः रसपाको नितरां प्रशंस्यते। अत्र शृङ्गाररसस्य प्राधान्यं चेद् वीरबीभत्सयोरङ्गरूपता सुतरां चकास्ति।

कवेरस्य द्वितीया कृतिः महावीरचरितं विद्यते। रामायणकथामाश्रित्य विरचिते **महावीरचरितनाटके** वीररसस्य प्राधान्यं विद्यते। सप्तसु अङ्केषु विभाजितेऽस्मिन् विश्वामित्रयज्ञरक्षार्थं सिद्धाश्रमं गतस्य लक्ष्मणानुगस्य रामस्य माहेश्वरधनुर्भञ्जनं, रावणकर्तृकसीताभिलापस्य जनककृतप्रत्याख्यानम्, माल्यवतः परामर्शेन समुत्तेजितस्य परशुरामस्य रामावधिकः पराजयः, रामाभिषेकप्रस्तावस्य कैकेयीकृतोऽन्तरायः, रावणकृतं सीताहरणम्, रामसुग्रीवयोरैक्यं, रामकर्तृकं रावणहननम्, वह्निविशुद्धायाः सीतायाः स्वीकरणम्, श्रीरामस्य पट्टाभिषेकमहोत्सवायोजनं च तथा विहितं यथा रसपरिपाकस्य हृद्यता संवृत्ता। तृतीया कृतिर्भवभूतेः प्रथतेतमाम्- **उत्तररामचरितम्**। सप्तसु अङ्केषु विभाजितेऽस्मिन्

नाटके करुणरसस्य प्राधान्यं विद्यते। अत्र नाटके रामायणस्य उत्तरकाण्डवृत्तं समाश्रित्य सीतापरित्यागः, रामविलापः, लवकुशप्राप्तिः, सीतास्वीकारश्च प्रामुख्येन वर्ण्यते। तमसामुखेन करुणरसस्य महात्म्यमसौ सुस्पष्टं गायति–

**एको रसः करुण एव निमित्तभेदाद् भिन्नः पृथक् पृथगिव श्रयते विवर्तान्।**
**आवर्तबुद्बुदतरङ्गमयान् विकारान् अम्भो यथा सलिलमेव हि तत्समग्रम्।।** इति[6]।

करुणस्य परिपाकः श्लोकाभ्याम् मनागीक्ष्यतां सुकवेर्भवभूतेः–

**परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।**
**करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी।।** इति[7]।

**दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते**
**वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।**
**ज्वलयति तनुमन्तर्दाहः करोति न भस्मसात्**
**प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्।।** इति च[8]।

शृङ्गारपरिपाकोऽप्यस्य नितरां विलक्षणः समाभाति। तद्यथा–

**विनिश्चेतुं शक्यो न सुखमिति दुःखमिति वा**
**प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।**
**तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो**
**विकारश्चैतन्यं भ्रमयति च सम्मीलयति च।।** इति[9]।

दम्पत्योः प्रेम्णः तात्त्विकं मर्मप्रकाशनमस्य धन्यस्य कवेः अनितरसाधारणं कृत्यं हृद्यतममाभाति। तद्यथा–

**अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यो**
**विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।**
**कालेनावरणात्ययात् परिणते यत्प्रेमसारे स्थितं**
**भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्रार्थ्यते।।** इति[10]।

कविपरम्पराबन्धमसौ नियमेन पालयितुं विवशो नानुभूयते। चरित्र-चित्रणकर्मणि वाक्यसंरचनायां चास्य नावीन्यमाभाति। नह्ययं महाकविरिव प्रकृतेः कोमलरूपं चित्रयति प्रत्युत कठोरं रूपमुद्भासयति। तत एवासौ रङ्ग एव व्याघ्रश्मशानादिकमपि समुपस्थापयति। न ह्यसौ कालिदास इव रसिकं काल्पनिकं वा पात्रजातं वर्णयति प्रत्युत सांसारिकं वास्तविकं च। गम्भीरभावाभिव्यक्तौ त्वसौ महाकविं पराभवति। ओजस्विवाक्यैः प्रतिपाद्यमसौ विस्तरेणोपस्थापयति। अनुभूतं तथ्यमसौ प्रतिपादयन् विशिष्टं सन्देशमभिव्यनक्ति। यदुक्तं स्वयमनेन–

**यत् प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं**
**तच्चेदस्ति ततस्तदेव यमकं पाण्डित्यवैदग्धयोः।** इति[11]।

करुण-रस-माध्यमेन जडस्य सचेतनता सचेतनस्य जडता यथाऽनेन आपाद्यते न तथाऽन्येन केनचित्। धनपालोक्तिरियं निभाल्यताम्–

**स्पष्टभावरसा चित्रैः पदन्यासैः प्रवर्तिता।**
**नाटकेषु नटस्त्रीव भारती भवभूतिना।।** इति[12]।

तदनुसारमेतस्य वर्णनमन्यत्र नैव सम्प्राप्यते। प्रीतेः संश्रयः कश्चनान्तरो हेतुर्विजृम्भते न तु बाह्य उपाधिरिति सदृष्टान्तं कमनीयतरमसौ विलक्षणमेव भावमुदाहरति। तद्यथा–

**व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।**
**विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः।।** इति[13]।

श‍ृङ्गारस्य कृते वैदर्भीं प्रयुञ्जतो भवभूतेः वीररसस्य कृते गौडीमपि प्रयुञ्जतो भावातिशयः कवित्वं न्यूनयतीव। शिखरिण्या वैशिष्ट्यमेतदीयम् अन्यान् कवीन् नितरामतिशेते। तत एवेयं सूक्तिर्विजृम्भते क्षेमेन्द्रस्य-

**भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।**
**रुचिरा घनसन्दर्भे या मयूरीव नृत्यति।।** इति[14]।

केन वाऽन्येन साहित्यिकं स्वरूपमतिमनोज्ञं शक्यते निरूपयितुमपत्यस्य सर्वस्वभूतयोर्दम्पत्योरविकलयोः?

**प्रेयो मित्रं बन्धुता वा समग्राः सर्वे कामाः शेवधिर्जीवितं वा।**
**स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्तु।।** इति[15]।

**अन्तःकरणतत्त्वस्य दम्पत्योः स्नेह-संश्रयात्।**
**आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते।।** इति च[16]।

चित्रां कथामसौ विदग्धया वाचा प्रस्तौति। तद्यथा स्वयमेवासौ ब्रूते-

**भूम्ना रसानां गहनः प्रयोगः सौहार्दहृद्यानि विचेष्टितानि।**
**औद्धत्यमायोजितकामसूत्रं चित्रा कथा वाचि विदग्धता च।।** इति[17]।

एतदीयं श‍ृङ्गाररसविवर्तवर्णनमतिसङ्क्षिप्तमपि विस्तृतवर्णनमन्यदीयं परिहसतीव भाति। तद्यथा-

**विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा**
**प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।**
**तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो**
**विकारश्चैतन्यं भ्रमयति च सम्मीलयति च।।** इति[18]।

मर्यादासंवृतमेतदीयश‍ृङ्गारवर्णनमान्तरीं वृत्तिमपि सुप्रकाशयति यत् तदन्यत्र न लभ्यते क्वापि। तद्यथा-

**किमपि किमपि मन्दं मन्दमासक्तियोगादविरलितकपोलं जल्पतोरक्रमेण।**
**अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्।।** इति[19]।

वीररसस्योद्दामवर्णनमेतदीयं सबहुमानमुदीरयति वरिष्ठः अलङ्कारशास्त्राचार्यो वामनः। तद्यथा-

**दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतष्-**
**टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।**
**द्राक्पर्यस्तकपालसम्पुटमिलद्-ब्रह्माण्डभाण्डोदर-**
**भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति।।** इति[20]।

स्फुरद्रसकणकाव्यामृतजलधिमेनं स्तौति वाक्पतिराजश्चारुतरम्। तद्यथा-

**भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति।**
**यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु।।** इति[21]।

बलदेवोपाध्यायः सप्रमाणं कुमारिलभट्टशिष्यम् उम्बेकम् भवभूतिं चाभिन्नं प्रतिपादयति। चित्सुखीकृता बहुधा स्मृतस्यास्य भवभूतिसंज्ञकस्य उम्बेकस्य विषये चित्सुखीग्रन्थटीकाकृता स्पष्टमुच्यते-

'उम्बेकस्तु **सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना** इत्यत्र लिङ्गधर्मस्येति दर्शनाद् व्याप्यैकधर्मो व्यापकनिरूप्यो व्याप्तिः, न पुनरुभयनिष्ठा इत्यब्रवीत्।' इति[22]।

यथा श्रीबलदेवोपाध्यायः उम्बेकाभिन्नं भवभूतिं प्रसाधयति तथा प्रमाणं चेन्न खण्ड्यते तदा पण्डितकवेः भवभूतेर्वैदिकप्रस्थानमण्डयितुः यावच्छक्यं प्रशंसनीयता संवर्धतेतमाम्। इदं चातीव गहनं कृत्यं तावदितिहासलेखकानां यदि ते शास्त्रज्ञाः सन्तः तथ्यं गवेषयन्ति विदुषां व्यक्तित्वं चिन्वन्ति प्रकाशयन्ति चेति तादृशान् सादरभरं धन्यवादैः नतिततिसमर्पणेन च सत्करोमि धन्यतां चानुभवामि।

**भक्तिर्भवे न विभवे**- इत्येवं प्रशंसनीयस्य तत्रभवतो भवभूतिकवेः व्यक्तित्वं कृतिवैशिष्ट्यं चात्र लघुकलेवरे समावेशितुं येषामुपजीव्यता, तान् प्रति कृतज्ञतां सम्बिभर्मि।

कीर्तिर्यस्य स जीवति वचनमेतद् भवभूतिमद्यापि जीवयति चेद् निम्नाङ्कितं वचनपीयूषं तेषां यशःकायस्य भयराहित्यमवद्योतयति-

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशःकाये जरामरणजं भयम्।।** इति शम्।।

**सन्दर्भसङ्केतः-**


1. राजतरङ्गिणी, 3/144
2. महावीरचरितम्, 1/54
3. उद्धृतम्, संस्कृतसाहित्येतिहासः, पृ.सं.-424 (आचार्यलोकमणिदाहालविरचितः)
4. उद्धृतम्, संस्कृतसुकविसमीक्षा, पृ.सं.-319
5. तदेव।
6. उत्तररामचरितम्, 3/47
7. उत्तररामचरितम्, 3/4
8. तदेव, 3/31
9. तदेव, 3/31
10. तदेव, 1/39
11. उद्धृतम्, संस्कृतसाहित्येतिहासः, पृ.सं.-429
12. तदेव
13. उत्तररामचरितम्, 6/12
14. सुवृत्ततिलकम्, 3/33
15. मालतीमाधवम्, 6/18
16. उत्तररामचरितम्, 3/17
17. मालतीमाधवम्, 1/4
18. उत्तररामचरितम्, 1/35
19. तदेव, 1/27
20. महावीरचरितम्, 1/54
21. उद्धृतम्, संस्कृतसाहित्येतिहासः, पृ.सं.-424
22. चित्सुखीटीका, पृ.सं.-235, निर्णयसागरसंस्करणम्


■ पत्रसङ्केतः- बी. 34/140, ए 3 के, गायत्रीनगर, शुकुलपुरा, वाराणसी-221010

# शब्दस्वरूपविमर्शः

■ डॉ. रामबहादुरदुबे

अस्मिन् जगतितले खलु स्वानुभूतान् पदार्थान् बोधयितुं शब्दातिरिक्तं किमपि तत्त्वं न भाति यत् व्यवहारस्य मूलकारणं स्यात्। शब्दो हि व्यवहारस्य मूलकारणम्। व्यवहारमन्तरा समेषां प्राणिनां जीवनं सुदुर्लभं भवति। स चासौ व्यवहारः शब्दार्थाभ्यां प्रवर्तते। व्यवहारकारणीभूतस्य वाक्तत्त्वस्य महत्त्वं प्रतिपादितं खलु वैदिकसंहितासु यथा- वाग् वै ब्रह्म। वाग् वै विश्वकर्मा। वागेव सुपर्णा। वागेव मतिः। वागे विराट्। वाग् एवाग्निः। वाग् तु सरस्वती। वाग् वै समुद्रः। इत्यादिभिः विविधरूपैः प्रतीयते यत् वागेव सृष्टिमूला। तां विना नहि वस्तु किञ्चित्।

सृष्टेः आदौ इयमेवास्ति इति मन्यन्ते बुधाः। सुस्पष्टशब्देनैव तैत्तिरीयब्राह्मणे प्रोक्तम्- "सा भूरिति व्याहरत्। सा भुवमसृजत्। सा भुव इति व्याहरत्।" न खलु वैदिकवाङ्मये अपितु बाइबिलग्रन्थेऽपि बहुधा निदर्शितोऽस्ति यथोक्तं तत्र- "सृष्टेः आदौ शब्द एवाऽऽसीत् स एव परमात्मा चासीत्। स च प्रकाशरूपः आसीत्। तेनैव परमात्मना चादिष्टं प्रकाशः भवेत् अथ च प्रकाशो जातः। संसारेऽस्मिन् शब्दातिरिक्तं नहि किञ्चिदस्ति यदस्ति चलाचलं तत्सर्वं भासते। प्रोक्तं भर्तृहरिणा-

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**

शब्देनैव सम्पूर्णभुवनत्रयं प्रकाशितं किल अन्यथा लोकत्रयमिदं अन्धतमसि निमग्नं स्यादिति ध्रुवम्। अत एवोक्तम्-

**इदमन्धंतमः कृत्स्नं जायते भुवनत्रयम्। यदि शब्दाह्वयः ज्योतिरासंसारान्न दीप्यते।।**

इयमेव ब्रह्मरूपा वाणी महाभारते नित्या स्वयम्भुवा सृष्टिमूलेति डिण्डिमघोषैरुद्घोषिता खल्वत्र तद्यथा-

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदत्रयी दिव्या यतः सर्वाः प्रवृत्तयः।।**

श्लोकमिदं वीक्ष्य हठात् वाक्यपदीयब्रह्मकाण्डस्य कारिका स्मृतिपथे आयाति-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**

महान्वैयाकरणः भर्तृहरिणः शब्दतत्त्वं ब्रह्मरूपं अक्षरमुद्घोषयति। घटपदादयः तस्यैव शब्दब्रह्मणः विकारः किल न तु प्रकृतिरूपेण वर्तते। यः खलु अर्थभावेन दृश्यते। वस्तुतस्तु निश्चप्रचं यत् शब्दब्रह्म एकमेव एतद्विषयेऽपि पदवाक्यप्रमाणपरावारीणेन भर्तृहरिणा प्रतिपाद्यते वाक्यपदीये ब्रह्मकाण्डे-

**एकमेव यदाम्नातं शक्तिव्यापारसंश्रयात्। अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते।।**

यथा सलिलमेकमेव परमावर्तबुद्बुदतरङ्गादयः अस्य विकाराः तथैव किल शब्दब्रह्म एकमेव घटपदादयः तु तस्य विकाराः।

**आवर्त्तबुद्बुदतरङ्गमयान् विकारान्। एको यथा सलिलमेव हि तत् समस्तम्।।**

वाक्यपदीये ब्रह्मकाण्डस्य प्रदीपकारस्तु यथा आवर्त्तबुद्बुदतरङ्गाख्या जलविकाराः परस्परं भिन्ना-भिन्ना रूपा जलमपि जलमेव न ततो व्यतिरिक्तं तथा घटपटादयो विकाराः परस्परं भिन्नाऽपि पृथिव्यामेव न व्यतिरिक्ता इति घटपटादीनां भेदेऽपि पृथिव्याः एकत्वमिव विलक्षणं कार्यादयोऽनुमीयमानवैलक्षण्याः शक्तयो भिन्नाऽपि ब्रह्मणा एकत्वमिति परस्परं न विरोधः।

शब्दविभागविषये नैयायिकशाब्दिकयोः मध्ये महान् मतभेदः वर्तते। नैयायिका दृष्टादृष्टपदार्थभेदेन द्विधा शब्दम् स्वीकुर्वन्ति। भाट्टस्तु पौरुषेयापौरुषेयभेदेन द्विधा शब्दविभागमकुर्वन, तत्र आप्तवाक्यं पौरुषेयं, वेदवाक्यं अपौरुषेयमिति कृत्वा उभयमपि प्रमाणतया परिगृह्यते। प्रभाकरोऽपि द्विधा स्वीकुर्वतीति कृत्वा शब्दविषये विचारः शास्त्रेषु प्राप्यते। किन्तु निष्कर्षस्तु शब्दब्रह्मैव तत्सर्वमिति मन्यते विद्वद्भिः। इति शम्।

■ पत्रसङ्केतः- सहायकाचार्यः, साहित्यविभागः, राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः, लखनऊ।

# 'ककुद्मन्तः' इति पदविषयकसाध्वसाधुविचारः

■ डॉ. यदुवीरस्वरूपब्रह्मचारी

ककुद्मन्त इति पदविषयकसाध्वसाधुविचारात् प्रागादौ तद्विषयकवार्तिकार्थो विचार्यते। यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्याद् इत्यर्थकं सूत्रं 'यरोऽनुनासिकेऽनुनासिको वा'(8-4-45) इति। तस्योदाहरणम्- एतन्मुरारिः एतद्मुरारिः। अत्र प्रसङ्गे 'प्रत्यये भाषायां नित्यम्' इति वार्तिकमपि उपन्यस्तम्। एतस्यार्थस्तु- भाषायाम् इत्युक्ते लौकिकप्रयोगे न तु वैदिकप्रयोगे। भाष्यते=उच्यते व्यवहारकर्तृभिरिति व्युत्पत्तिबलात्। तथा च लौकिकप्रयोगव्यवहारकाल इत्यर्थः। 'यरोऽनुनासिकेऽनुनासिको वा' इति सम्पूर्णं सूत्रमनुवर्तते वेति विहाय। 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तादित्यनुवृत्तं सत् षष्ठ्यन्ततया विपरिणम्यते। एवञ्च वार्तिकार्थः फलति यरः पदान्तस्य अनुनासिकादौ प्रत्यये परेऽनुनासिकादेशो नित्यं स्याल्लौकिकप्रयोगव्यवहारकाल इति।

तत्प्रमाणमस्येत्यर्थे 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (5/2/37) इति शास्त्रेण मात्रच्प्रत्यये कृते तद्+मात्र इत्यवस्थायां 'प्रत्यये भाषायां नित्यम्' इत्यनेन तकारस्यानुनासिके नकारे तन्मात्रम् इति सिध्यति। महाकविना कालिदासेन रघुवंशमहाकाव्ये चतुर्थसर्गे-

**मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजः।**
**लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम्॥**[1]

इति श्लोके "ककुद्मन्तः" इति प्रयोगो व्यधायि। तस्य कथं साधुत्वमिति? ककुन्मन्तः इति रूपेण भवितव्यङ्खलु। यतो हि ककुदेषामस्तीत्यर्थे 'तदस्यास्त्यस्मिन्निति मतुप्' (5/2/94) इत्यनेन मतुपि ककुद्+मत् इति स्थितौ अनुनासिकादिप्रत्ययाव्यवहितस्य पूर्वत्वविशिष्टस्य पदान्तस्य यरः स्थाने नित्यमनुनासिकादेशो भवति भाषायामित्यर्थकस्य 'प्रत्यये भाषायां नित्यम्' इति वार्तिकस्य उद्देश्यतावच्छेदकसत्वादिति। एवञ्च ककुन्मन्तः इत्येव रूपं स्यादिति। कथन्तर्हि ककुद्मन्त इति। अत्र प्रसङ्गे श्रीमता भट्टोजिदीक्षितेन समाधिद्वयं प्रादायि। प्रथमः- 'यवादिगणे दकारनिपातनाद् दकारस्य नानुनासिकादेश इत्यर्थः[2]'।

अयमाशयो दीक्षितमहाशयस्य यवादिगणे 'ककुद्मत्' इति प्रकृतिप्रत्ययसमुदितस्य पाठः कृतः पाणिनिना। यदि तत्रानुनासिक एव इष्टः स्यात्तर्हि ककुन्मन् इति नकारविशिष्टे पठितव्ये दकारविशिष्टं किमर्थं पठ्यते। तेन ज्ञायते अन्यथा प्राप्तस्य आचार्येण अन्यथाकरणरूपनिपातनान्न नकारभाव इति। अतः ककुद्मन्त इति साध्वेवेति।

ननु ककुद्+मत् इत्यवस्थायां 'झयः' इति सूत्रेण मतुपो मकारस्य स्थाने वत्वादेशः प्राप्तः, तन्मा भूदेतदर्थमेव यवादिगणे पाठः, तेन 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः'(8-2-9) इत्यत्र 'अयवादिभ्यः' इति पर्युदासः प्रवर्तते। अतो यवादिगणे पाठस्य फलं वत्वनिवृत्तिर्न त्वनुनासिकनिवृत्तिरिति। अतः अनुनासिक- निवृत्तिर्दुरुद्धरा। इति चेदुच्यते- यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे भगवान् पाणिनिः ककुन् इत्येव पठेन् न तु ककुदिति। ककुन् इति पाठेऽपि 'अयवादिभ्यः' इति पर्युदासः प्रवर्तत एव। अत दकारविशिष्टोच्चारणमनुनासिकनिवृत्यर्थमेवेति। न च यवादिगणे यरोऽनुनासिकप्रवृत्त्या 'ककुन्' इति नकारविशिष्टपाठे झयन्तत्वाभावेन 'झयः' इत्यनेन मतुप्प्रत्ययमकारस्य वत्वस्याप्रसक्त्या तत्र पाठ एव निरर्थकः स्यादिति वाच्यम्। 'झयः'(8/2/10) इति पूर्वत्रिपादीदृष्ट्या 'यरोऽनुनासिके'(8/4/45) इति परत्रिपादीसूत्रस्थवार्तिकविहितानुनासिका- सिद्धत्वेन झयन्तत्वस्यानपायाद् गणे तत्पाठस्य सार्थक्यमस्त्येवेति। अतो दकारनिपातनं यरोऽनुनासिकाभावार्थमिति। न च गणे नकारविशिष्टोच्चारणे अन्यत्रापि ककुन् इत्येव प्रयोगः स्यान्न तु ककुदिति वाच्यम्। मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्वनिपातनेऽपि अन्यत्र दकारान्तप्रयोगो निर्बाधतया भवत्येव। अन्यथा तत्कुलम् इत्यादीनामसिद्ध्यापत्तिरिति। यतो हि सर्वादिगणे 'तद्' इत्याकारकदकारविशिष्ट एव पाठो न तु तकारविशिष्ट इति। अत्र प्रसङ्गे लघुशब्देन्दुशेखरस्य ज्योत्स्नाटीकाकारः उदयङ्करपाठकस्यापि मतमवश्यञ्ज्ञेयमस्ति- "वैकल्पिकेषु भावानुष्ठानं धर्माधिक्यफलकमित्येतदनभ्युपगम्येदम्। तदभ्युगमे तु यवादिपाठप्रयोज्ये मतुपो वत्वाभावे तत्प्रयुक्तकार्यं ककुच्छब्दे दकारस्य यत्प्राप्तं त'द्वावसाने' इत्येतत्प्रवृत्या तान्तनिर्देशे कर्तव्ये ककुदिति दान्तप्रकृतिमात्रनिर्देशेनापि वारयितुं शक्यत इति बोध्यम्[3]"।

वस्तुतस्तु उदयङ्करपाठकस्य प्रकृतप्रसङ्गे प्रदत्तसमाधानन्न साधीय:। यतो हि वैकल्पिकेषु भावानुष्ठानं धर्माधिक्यफलजनकम्भवतीत्यभ्युपगमे तु सर्वादिगणे पठितानां त्यदादीनां शब्दानामपि अनुनासिकत्वं न स्यात्। तन्मात्रमित्यादिर्न सिध्येत। तत्कुलमित्यत्र चर्त्वञ्च न स्यादिति। उक्तञ्च सदाशिवभट्टेन सदाशिवभट्टीये ''प्रकृतिपाठेपि चर्त्वाकरणान्निपातनमिति' तु न युक्तम्। त्यदादिष्वपि तथात्वापत्तौ तत्कुलमित्यादौ चर्त्वानापत्तेः। तस्मान् नाग्रहो भावानुष्ठाने गणपाठे चेति[4]''।

ननु यवादिगणे ककुदित्येव पठ्यते न तु ककुद्मन्त इति प्रकृतिप्रत्ययसमुदायः, तथा च तत्र गणे- यव, दल्मि, उर्मि, भूमि इत्येवं प्रातिपदिकमात्रं पठितम्। एवञ्च ककुदिति प्रातिपदिकस्यैव पाठो न तु विशिष्टस्य, तेन केवले ककुदिति प्रातिपदिके दकारनिपातनस्यावसर एव नास्ति। तथा च यरोऽनुनासिको दुर्वारः। न च दान्तरूपनिपातनादेव निर्वाह इति प्रलपनीयम्। सर्वादिगणे तदिति दान्तनिपातनेन 'तन्मात्रम्' इत्यादावपि दकारश्रवणापत्तेः। इत्थं 'गणे दकारनिपातनात्' इत्याकारकसमाधाने अरुचिं वीक्ष्य स्वरचितप्रौढमनोरमाग्रन्थे भट्टोजिदीक्षितेन समाधानान्तरमभ्यधायि। तद्यथा- ''यचि भन्तसौ मत्वर्थे इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्[5]''।

**अयमभिप्राय:-**

'तसौ मत्वर्थे' (1-4-19) इत्यत्र तकारात् पूर्वं दकारः प्रश्लिष्यते, (द्+तसौ) दकारस्य 'खरि च' (8-4-55) इति सूत्रेण चर्त्वे तकारे, (त्+तसौ) 'झरो झरि सवर्णे' (8-4-65) इत्यनेन वैकल्पिकत्वेन लोपे तसौ इत्येव भवति। तथा च सूत्रार्थो भवति 'दान्तः तान्तः, सान्तश्च भसंज्ञका भवन्ति मत्वर्थे प्रत्यये परे''। न च तात्पूर्वं यदि दकारप्रश्लेषः स्यात्तदा 'तसौ' इति द्विवचनान्तत्वन्न स्यादपितु बहुवचनान्तत्वमेव। अतो ज्ञायतेऽत्र दकारप्रश्लेषो नास्तीति वाच्यम्। तसावितिद्विवचननिर्देशस्तु दश्च तश्चेति दतम्। समाहारद्वन्द्वसमासं विधायं दतञ्च सश्चेति तसावितीतरेतरयोगद्वन्द्वसमासे कृते समुपपद्यत इति। एवञ्च ककुद्+मत् इत्यत्र दान्तत्वाद् भसंज्ञायान्नानुनासिकादेशः तस्य पदसंज्ञायामेव विधानादिति। एवं रूपेण कालिदासीयप्रयोगः ककुद्मन्तः इति सङ्गतो भवतीति। न च भसंज्ञापक्षे मृन्मान् इत्यादौ अतिप्रसङ्ग इति वाच्यम्। यवादिगणे मृच्छब्दस्य पाठाभावात् मृद्+मत् इत्यत्र 'झयः' (8-2-10) इत्यनेन वत्वे मृद्वान् इत्येव रूपं भवति, न तु मृन्मानिति। उक्तञ्च शब्दरत्नकारेण ''इति केचित्तन्न, मृन्मानित्यादावतिप्रसङ्गात् इति तु क्वाचित्कोऽसाम्प्रदायिकः पाठः[6]''।

बृहच्छब्दरत्ने तु मृद्वान् इति यवादिगणे पठित्वैव ककुद्मन्त इतिवन्नानुनासिक- त्वमित्युक्तम्। तथा हि ''केचित्तु 'ककुद्मन्त' इत्यत्रेव मृदित्यत्रापि यवादिगणे प्रकृतिप्रत्ययोभयपाठाद्विकाराऽभाव इत्याहुः[7]''।

वस्तुतस्तु 'यचि भन्तसौ मत्वर्थे' इति संहितापाठकरणकल्पना, तत्रापि दकारप्रश्लेषकल्पना च न तावज्ज्यायसी। यतो दकारप्रश्लेषस्य भाष्येऽनुक्तत्वादिति। एवञ्च भाष्यकारानुक्तकल्पनाया वैयाकरणनिकाये अप्रामाणिकत्वम्। एवम्प्रकारेण पुनरपि अनुनासिकत्ववारणं दुर्वारमिति।

शेखरस्य ज्योत्स्नाटीकाकारेण 'अन्ये तु' इति पदेन कस्यचिन्मतमुपस्थाप्य 'ककुद्मन्तः' इत्यत्र अनुनासिकत्ववारणाय समाध्यन्तरमुक्तम्। तथा हि ''अन्ये तु व्यवस्थितविभाषात्वाङ्गीकारादुक्तदोषद्वयं परिहरन्तश्चिन्मयमित्याद्यर्थं 'प्रत्यये भाषायां नित्यमित्यस्यापि वचनस्याकर्तव्यतां ब्रुवते[8]''।

एष आशयः- 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रे 'वा' पदे व्यवस्थित- विभाषाऽस्तु। क्वचिद्भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचिदुभयमित्येवं लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा उच्यते। सभापतिवर्यास्त्वेवं परिष्कुर्वन्ति 'विभाषाशात्रीयोद्देश्यतावच्छेदकं यद्रूपं तद्व्याप्यं यद्रूपं तदवच्छेदेन भावाभावान्यतरविधायकत्वे सति भावाभावोभयबोधकत्वं व्यवस्थितविभाषात्वम्[9]'। तेन 'चतुर्मुख' इत्यत्र रेफस्य नानुनासिकत्वम्। तन्मात्रम्। चिन्मयम्। इत्यत्रापि व्यवस्थितविभाषाश्रयणान् नित्यमेवानुनासिकत्वम्। किञ्च ककुद्मन्त इत्यत्रापि तथैव समाधानान्नानु- नासिकत्वमिति। किञ्च 'प्रत्यये भाषायां नित्यम्' इति वार्तिकमपि न कर्तव्यम्भवतीति महल्लाघवम्।

**खण्डनम्-** ज्योत्स्नाकारस्य व्यवस्थितविभाषाऽश्रयणान् नानुनासिकत्वमिदमपि न सन्तोषाय। भाष्योक्तव्यवस्थितविभाषातिरिक्तविभाषाणां व्यवस्थितविभाषात्वस्याप्रामाणिकत्वात्। अत्र मानम् 'इन्द्रे च' (6-1-124) इति सूत्रम्। तथा हि 'गवेन्द्रः' इत्यत्रापि व्यवस्थितविभाषाश्रयत्वे इन्द्रे परे नित्यमवङि सिद्धे 'इन्द्रे च' इति व्यर्थं सज्ज्ञापयति-

**देवत्रातो गलो ग्राह इति योगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः।।[10]**

इति भाष्योक्तकारिकाया अन्यत्र व्यवस्थितविभाषा नास्तीति। उक्तञ्च शेखरकारेण 'न च व्यवस्थितविभाषयेन्द्रे सिद्धे 'इन्द्रे चे'ति व्यर्थमिति वाच्यम्, भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्वादित्याहुः[11]'। इत्यञ्चानुनासिकत्वानिवृत्तिर्तादवस्था।

केचन तु ककुद्मन्त इत्यत्रानुनासिकवारणायैवं ब्रुवते मतुप्प्रत्ययस्य समभिव्याहारे ककुद्घटकदकारेऽनुनासिकत्व-स्यावश्यम्भावाद् यवादिगणे 'ककुन्' इत्येव पठितव्ये, दकारघटितककुदित्यस्य एव पाठेनानुनासिकत्वस्य अभावो निपात्यत इति। तदपि न सर्वत्रगणे पठितानां शब्दानां विषये अभेदानुकरणपक्ष एव। अत एव वृत्या अर्थोपास्थापकत्वाभावात् प्रातिपदिकसंज्ञाभावेन सुबनुत्पत्तौ गणपठितेषु शब्देषु न पदत्वप्रयुक्तं कार्यमिति। अतः ककुन् इत्येव पठितव्ये- इत्यादि कथनं काकदन्तपरीक्षणवदनर्थकम्तत्र पदत्वाभावादिति।

**निष्कर्षः -**

कालिदासीयप्रयोगककुद्मन्तः इत्यत्रानुनासिकवारणाय बहुभिः बहुविधयत्नाः अक्रियन्त, तथापि तत्रानुनासिकवारणन्न जातम्। तस्माद् अनुनासिकघटितपाठः 'ककुन्मन्तः' इत्येव ज्यायान्। ककुन्मन्तः इति पाठेऽपि न कापि हानिर्न च छन्दोभङ्गः। तर्हि कथं दकारघटितपाठा एव सर्वत्र पुस्तकेषु दृश्यन्ते? इति चेत् 'अपाणिनीयम्' इत्येव वक्तव्यम्। न च स्थितस्य गतिश्चिन्तनीयेति वाच्यम्। गतिस्तु चिन्तितैव सुष्ठु समाधिर्न लब्ध इति।

अत एव मल्लिनाथेन तत्र सञ्जीवनीटीकायां श्लोकव्याख्यासन्दर्भे 'ककुद्मन्तः' इत्यत्र झयन्तत्वेन 'झयः' सूत्रेण प्राप्तस्य वत्वस्य वारणं यवादित्वात् इत्येवाभ्यधायि, न तु निपातनादनुनासिकस्य वारणमिति। तथा च सञ्जीवनीटीकायाम्–

"ककुदेषामस्तीति ककुद्मन्तः। महाककुदः इत्यर्थः। यवादित्वान्मकारस्य वत्वाभावः[12]"। अतः सिद्धं यदनुनासिकविशिष्टप्रयोग एव भवतीति। अयमेवाशयः लघुशब्देन्दुशेखरस्य सुबोधिनीटीकाकारस्य विश्वनाथमिश्रवर्य्यस्यापि तथा चोक्तम्- 'वस्तुतस्तु मल्लिनाथेनात्र यवादित्वात् 'झयः' सूत्रेण प्राप्तस्य वत्वस्याभावः कृतो न तु अनुनासिकाभावः। अतः स्पष्टं यदनुनासिकन्तु भवत्येवेति[13]"। सिद्धान्तकौमुद्याः लक्ष्मीटीकाकारोऽप्याह "तस्माद् रघुवंशे 'ककुन्मन्तः' इत्येव पाठ उचितः, तावताऽपि क्षतिविरहात्। दकारघटितपाठस्तु लेखकप्रमादात्। अत एव मल्लिनाथेनापि तत्र यवादित्वात् वत्वाभाव इत्येवोक्तं न तु निपातनान् नत्वाभाव इत्यपीत्युपाध्यायाः[14]"।

इत्थञ्च ककुन्मन्त इत्येव साधीयान्। ककुद्मन्त इति तु अपाणिनीयमेव। एतेन कुमारसम्भवे प्रथमसर्गे–

**तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान्।**
**दृष्टः कथञ्चिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद॥[15]**

इति श्लोकगतककुद्मानित्यपि व्याख्यातमिति दिक्।

**सन्दर्भसङ्केतः-**


1. रघुवंशम्, (नारायणरामाचार्यकाव्यतीर्थसंशोधितम्) प्रकाशकः-राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली, 2011, संस्करणम्, पृ.सं.-88.
2. वैयाकरणसिद्धान्तकौमुदी, सम्पा.-गिरिधरशर्मा परमेश्वरानन्दशर्मा च, प्रका.-मोतीलालबनारसीदासः, वाराणसी, सं.-2001, पृ.सं.-126.
3. लघुशब्देन्दुशेखरः, (पट्टीकोपेतः), डॉ. बालशास्त्रिसम्पादितः, वाणीविलास-प्रकाशनम्, वाराणसी, सं.-2048, पृ.सं.-357.
4. तत्रैव।
5. प्रौढमनोरमा(शब्दरत्न-रत्नप्रकाशिका-भावप्रकाश-सरलासहिता), प्रका.-चौखम्बासंस्कृतसंस्थानम्, वाराणसी, सं.-2059, पृ.सं.-261.
6. तत्रैव।
7. प्रौढमनोरमा(बृहच्छब्दरत्नलघुशब्दरत्नसहिता) सम्पा.-श्रीसीतारामशास्त्री, काशीहिन्दूविश्वविद्यालयः, वाराणसी, सं.-2021 पृ.सं.-203.
8. लघुशब्देन्दुशेखरः, (पट्टीकोपेतः), डॉ. बालशास्त्रिसम्पादितः, प्रकाशकः-वाणीविलास-प्रकाशनम्, वाराणसी, सं.-2048, पृ.सं.-356.
9. वैयाकरणसिद्धान्तकौमुदी(लक्ष्मीटीकासहिता) बालकृष्णपञ्चोलिसम्पादिता, प्रका.-मोतीलालबनारसीदासः, वाराणसी,1966, पृ.सं.-154.
10. महाभाष्यम्(प्रदीपोद्योतसहितम्), भार्गवशास्त्रिजोशीसम्पादितम्, प्रका.-चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, 1994, पृ.सं-248, (षष्ठे भागे)।
11. लघुशब्देन्दुशेखरः(पट्टीकोपेतः), डॉ. बालशास्त्रिसम्पादितः, प्रका.-वाणीविलास-प्रकाशनम्, वाराणसी, सं.-2048, पृ.सं.-316.
12. रघुवंशम्(नारायणरामाचार्यकाव्यतीर्थसंशोधितम्), प्रका.-राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2011, पृ.सं.-88.
13. लघुशब्देन्दुशेखरः(सुबोधिनीहिन्दीव्याख्योपेतः), आचार्यविश्वनाथसम्पादितः, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, 2008, पृ.सं.-430.
14. वैयाकरणसिद्धान्तकौमुदी(लक्ष्मीटीकासहिता), बालकृष्णपञ्चोलिसम्पादिता, प्रका.-मोतीलालबनारसीदासः, वाराणसी, 1966, पृ.सं.-187.
15. कुमारसम्भवमहाकाव्यम्(सञ्जीविनी-शिशुहितैषिणीटीका सहिता), प्रका.-राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2005, पृ.सं.-28.


■ पत्रसङ्केतः- संविदाध्यापकः (व्याकरणविभागः), राष्ट्रियसंस्कृतसंस्थानम्(मा.वि.वि.),
लखनऊपरिसरः, लखनऊ।

# किरातार्जुनीये मनोवैज्ञानिकता

■ प्रमोदकुमारशुक्लः

आचार्यभारविना स्वमहाकाव्यस्य कथानकं महाभारतस्य तेन अंशेन स्वीकृतम्, यदा युधिष्ठिरः दुर्योधनस्य षडयन्त्रस्य आखेटो भूत्वा शकुनिना छलछद्मेन क्रीडितद्यूते पराजितो भवति। तत्पश्चात् चतुर्भिः भ्रातृभिः सह द्रौपद्या सहितं वनमगच्छत्। अस्मिन्नेव वनप्रवासस्य समये द्वैतवने निवसन् युधिष्ठिरेण एकः वनेचरः दुर्योधनस्य राजव्यवस्थां द्रष्टुं तथा च दुर्योधनेन राज्यशक्तेः वृद्धिसम्बन्धे ज्ञानाय हस्तिनापुरं प्रेषितम्। वनचरेण दुर्योधनस्य सम्बन्धे पूर्णज्ञानं स्वीकरणानन्तरं युधिष्ठिरः सूच्यते। अस्यां सूचनायां वनेचरः कथयति यत् दुर्योधनः छलछद्मेन यद् राज्यं प्राप्तवान् अस्ति, सः तम् अधुना नीतिपूर्वकं स्वस्य अधिकारे प्रभावे च कर्तुं यत्नं करोति।

वनेचरः युधिष्ठिरम् इदमपि सम्यक्तया बोधयति यत् दुर्योधनः केवलं सैन्यशक्तिमेव नैव वर्धयति अपितु समस्तराजानः प्रजाश्च स्वस्य उत्तमेन व्यवहारेण स्वप्रभावे आनेतुं प्रयासं करोति। स्वस्य तथ्यपूर्णवार्ताकथनानन्तरं वनेचरः स्वस्थानं प्रति याति। शत्रूणां एतादृग्भिः वर्धिताभिः शक्तिभिः द्रौपदी क्रुद्धा भवति। सा स्वस्य प्रभावस्य उपयोगं करोति तथा च अतीव तर्कपूर्णवाक्पटुतया सह युधिष्ठिरं निकषा शत्रुभिः राज्यहस्तान्तरणाय प्रस्तावं स्थापयति। द्रोपदी दुर्योधनेन शक्तिशालिपाण्डवानां अपमानस्य स्थितिमपि अतीवमार्मिकरीत्या प्रस्तौति, युधिष्ठिरस्य शान्तिपूर्णनीतेः कटु-आलोचनामपि करोति। द्रौपदी कथयति यत्- शान्तितया राज्यं नैव प्राप्यते। यदि वास्तविकतया भवान् शान्तेः अर्चकः स्यात् तर्हि क्षत्रियोचितवेशभूषां पुनश्च क्षत्रियत्त्वस्य प्रतीकं धनुषः परित्यागं कृत्वा मुनिवृत्तिं स्वीकृत्य अग्निहोत्रादिभिः मोक्षस्य सिद्ध्यर्थं कासुचित् निर्जनकन्दरासु तपः आचरतु। अस्यैव भावं स्पष्टयता आचार्यभारविना स्वस्य ग्रन्थे प्रतिपादितं यथा-

**अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम्।**
**विहाय लक्ष्मीपतिलक्ष्मकार्मुकं जटाधरः सञ्जुहुधीह पावकम्।।[1]**

एतेन श्लोकेन द्रोपदी मनोवैज्ञानिकरीत्या युधिष्ठिरं युद्धाय प्रेरयति। द्रौपदी पूर्णरूपेण मानसिकप्रताडनां करोति यत् कथञ्चित् युधिष्ठिरः युद्धाय सिद्धो भवेत् तथा च पराजितं राज्यं पुनः मिलेत् इति। तया निर्दिश्यते यत् राजन्! भवता समयस्य प्रतीक्षा न करणीया। विजयस्य कृते राजा किमपि न किमपि व्याजं कृत्वा सन्धिमार्गं समापयति। यथा निर्दिष्टम् आचार्यभारविना-

**आयुषि हि विजयार्थिनः क्षितीशाः / विदधति सोपधि सन्धिदूषणानि।।[2]**

एतेन श्लोकेन आचार्यभारविः युधिष्ठिरस्य धैर्यपरीक्षां स्वीकरोति परन्तु यः धैर्यशीलः भवति सः लघु-लघु आपत्तिसु कदापि स्वस्य धैर्यं नैव त्यजति अपितु तस्य दृढतया सम्मुखीकरणं करोति। अत एव तस्य व्यक्तित्वं सर्वेषु श्रेष्ठतमः भवति। पुनश्च द्वितीयदृष्ट्या पश्यामश्चेत् सः आसीत् धर्मराजः अतः सः कदापि धर्ममार्गं त्यक्तुं प्रस्तुतः न आसीत्। तस्य मतमासीत् यत् सर्वाणि कार्याणि धर्मेणैव भवेत् इति।

पुनः 'किरातार्जुनीयम्' इति महाकाव्ये द्वितीयसर्गारम्भे युधिष्ठिरस्य अनुजः भीमः द्रोपद्याः समर्थनं कुर्वन् युधिष्ठिरं दुर्योधनेन युद्धं कर्तुं बलं प्रददाति। आचार्येण अत्रापि एकस्य श्लोकस्य उदाहरणं प्रदत्तं यथा-

**यदवोचत वीक्ष्य मानिनी**
**परितः स्नेहमयेन चक्षुषा।**
**अपि वागधिपस्य दुर्वचं**
**वचनं तद्विदधीत विस्मयम्।।[3]**

यदा एतादृशेन वाक्येन प्रभावः न दृश्यते तदा पुनः अन्येन वाक्येन प्रेरयितुं प्रयासं विदधाति भीमः यथा-

**निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः।[4]**

पुनः आचार्यभारविना भीमस्य प्रशंसां युधिष्ठिरेण कारयित्वा भीमं शान्तं कृतं तद्यथा-

**प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः।।[5]**

श्लोकेऽस्मिन् युधिष्ठिरः भीमस्य प्रशंसां कुर्वन् तं शान्तं करोति। युधिष्ठिरस्य कथनं वर्तते यत् यदा समयानुकूलः भविष्यति तदा एव कार्येऽपि सिद्धिः मिलिष्यति। एतादृशी वार्तासमये एव महर्षिवेदव्यासस्य आगमनं भवति। यद्यपि वेदव्यासोऽपि भीमस्य कथनस्य समर्थनं करोति तथा युद्धस्य अनिवार्यतायाः सम्बन्धेऽपि कथयति, किन्तु सः युद्धाय अनिवार्यशस्त्रास्त्राणां पूर्णसिद्धताकरणस्यापि परामर्शं ददाति। तस्य कथनमस्ति यत् अर्जुनेन कठोरतपसा दिव्यास्त्राणि प्राप्तव्यानि। अर्जुनः दिव्यास्त्राणां प्राप्त्यर्थं सन्नद्धो भूत्वा गन्तुं यदा उद्युक्तः अभवत् तदा द्रोपदीं अर्जुनं कथयति यत् एकाकीभूते सति अस्माकं विषये लेशमात्रमपि दुःखं न अनुभवेत् कदापि कस्योपरि विश्वासः न करणीयः यतोहि साधूनामपि हृदयं रागद्वेषेण परिपूर्णः भवति। एतादृशेन कथनेन द्रोपदी मनोवैज्ञानिकरीत्या अर्जुनं प्रति स्वस्य स्नेहभावं प्रदर्शयति। यतोहि स्वयम्बरकाले अर्जुनः एव तस्याः परिणयं गृहीतवान् आसीत् परन्तु मातृ-आज्ञया सर्वैः भ्रातृभिः सह परिणीतः। तथापि तस्या स्नेहभावः अर्जुनं प्रति अधिकः इति दृश्यते। द्रोपदी अधोलिखितश्लोकेन अर्जुनस्य प्रस्थापनं करोति तद्यथा-

**मा गाश्चिरायैकचरः प्रमादं**
**वसन्नसम्बाधशिवेऽपि देशे।**
**मात्सर्यरागोपहतात्मनां हि,**
**स्खलन्ति साधुष्वपि मानसानि॥[6]**

इन्द्रकीलपर्वतं प्रति प्रस्थानं कुर्वन्ति। यत्र अर्जुनः साधनायां रतः अस्ति। अस्मिन्नेव काले वातावरणं मादकनिर्माणाय षण्णां ऋतूणां उपस्थितिः प्रदर्शितः। शीतलवायोः प्रेरणया नैकाः नर्तक्यः शृङ्गारस्य भावाभिव्यक्तिं कटाक्षसहितं नृत्यकरणे संलग्नः अभवन्। सहैव मधुरवीणायाः झङ्कारोऽपि गुञ्जायमानः सञ्जातः। अप्सरसानां अस्याः कामजन्यक्रीडायाः उपरान्तमपि अर्जुनः पूर्णतः संयतः आसीत्। अप्सरसानां भावाभिव्यक्तिः अर्जुनस्य अविचलितस्य कठोरसंयमस्य मनःस्थितेः वर्णनं कविना अतीव मार्मिकतया आकर्पकशैल्याम् च प्रतिपादितम्। एताः अप्सरसाः अर्जुनं तु विचलितं कर्तुं न शक्तवत्यः अपितु स्वयं कामपीडिताः सञ्जाताः यथा प्रतिपादितम् आचार्यभारविना-

**रुचिकरमपि नार्थवद् बभूव**
**स्तिमितसमाधिशुचौ पृथातनुजे।**
**ज्वलयति महतां मनांस्यमर्षे**
**न हि लभतेऽवसरं सुखाभिलाषः॥[7]**

अत्र मानवीयस्थितिषु कामभावनायाः मनोवैज्ञानिकरीत्या आचार्येण प्रतिपादितं यत् कीदृशं कामार्ताः जनाः पराभवं प्राप्नुवन्ति। अत्र आगताः अप्सरसाः स्वयं कामेन पीडितो भूत्वा पराजयं प्राप्ताः परन्तु अर्जुनः स्वस्य ध्येयं प्रति लक्ष्यं प्रति वा पूर्णतया अध्यवसाय मानसः सः स्वस्य कार्ये प्रवृत्तो अस्ति। अतः सः अप्सरसाभिः न पराजिताः। अप्सरसानां प्रत्यावर्तनपश्चात् इन्द्रः स्वयं मुनेः छद्मवेशधारणं कृत्वा तं तपस्विजनस्य प्रतिकूलं शस्त्रादि न धारणस्य परामर्शं ददाति। इन्द्रः कथयति यत् साधकान् स्व संयमेन केवलम् आन्तरिकशत्रून् जेतव्यः।

**जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः॥[8]**

अर्जुनः इन्द्रस्य पुरतः स्वस्य स्थितिं प्रस्तुतवान् तथा स्वस्य शत्रून् पराजितकरणस्य विषये स्वस्योपरि आगतानां दायित्त्वानामपि विस्तृतं विवेचनां कृतवान्। अर्जुनः इन्द्रस्य पुरतः स्वस्य दृढनिश्चयम् उपस्थापयन् कथयति यत् अहं या तु अस्मिन्नेव पर्वते नष्टो भविष्यामि उत्वा पूर्णसफलतां प्राप्येव गमिष्यामि। अस्यैव समर्थने आचार्यभारविना अपि स्वस्य श्लोकेः प्रतिपादितं तद्यथा-

**विच्छिन्नाभ्रविलायं वा**
**विलीये नागमूर्ध्नि।**
**आराध्य वा सहस्राक्षम-**
**यथः शल्यमुद्धरे॥[9]**

किरातवेशधारी शिव-अर्जुनयोः युद्धे कवि वीरतायाः प्रयोगः पूर्णतया अर्थप्रवणतया सारगर्भितवाण्या करोति- अर्जुनः शिवस्य शरसिन्धुं विदीर्य तथैव अग्रे निर्गतः यथा गङ्गायाः प्रवाहं विदीर्य मकरः उपरि आयाति। तदनन्तरं शिवस्य कठोरवक्षस्थले स्वहस्तेन प्रहरति, तस्यापि एकं दृश्यं यथा-

**गाण्डीवी कनकशिलानिभं भुजाभ्या-**
**माजघ्ने विषयमविलोचनस्य वक्षः॥[10]**

पुनः आचार्यभारविः अपरस्य मानवीयस्वभावस्य शान्तस्य वर्णनं निरूपयन् वदति यत् महर्षिव्यासः विद्युतयुक्तमेघसदृशं श्यामलशरीरे पतिजटां धारकः शान्तमुनिरूपेण उपस्थितः भवति तस्य वर्णनं कुर्वन् वदति आचार्यः यथा-

**ततः शरच्चन्द्रकराभिरामै-**
**रुत्सर्पिभिः प्रांशुमिवांशुजालैः।**
**विभ्राणमानीलरुचं पिशङ्गी-**
**र्जटस्तडित्वन्तमिवाम्बुवाहम्।।**[11]

पुनः मुनिवेशधारी इन्द्रस्य वर्णनम् अतीव स्वाभाविकं प्रतीयते। तत्र शान्तमनोभावस्य आधिक्यं दृश्यते तद्यथा-

**जटानां कीर्णया केशैः**
**संहत्या परितः सितैः।**
**पृक्तेन्दुकरैरह्नः**
**पर्यन्त इव सन्ध्यया।।**[12]

पुनः अग्रे क्रोधमनोभावस्य वर्णनार्थं कविः युधिष्ठिरं चिनोति, सः तेन माध्यमेन दर्शयितुम् इच्छति यत् कथं युधिष्ठिरः क्रोधस्योपरि विजयं प्राप्नोति, क्रोधः तस्य शरीरे मनसि वा स्पर्शमपि कर्तुं न सक्षमः। उदाहरणार्थं यथा-उपर्युक्ते श्लोकेन स्पष्ट्यते यत् युधिष्ठिरः स्वस्य संवेगानां उपरि विजयं प्राप्तवान् आसीत्। सः एकः महापुरुषः, सत्यवादी, धर्मपरायणः शान्तचित्तः कुशलराजनीतिज्ञः आसीत्। पुनः अग्रे सहृदयभावस्य एकम् उदाहरणं प्रस्तुतम् अत्र यथा-

**तुषारलेखाकुलितोत्पलाभे**
**पर्यश्रुणि मङ्गलभङ्गभीरुः।**
**आगूढभावाऽपि विलोकने सा**
**न लोचने मीलयितुं विषेहे।।**[13]

पुनः निरहङ्कारस्य एकमुदाहरणं प्रस्तौति आचार्यभारविः तद्यथा-

**तदाशु कर्त्तुं त्वयि जिह्ममुद्यते**
**विधीयतां तत्र विधेयमुत्तरम्।**
**परप्रणीतानि वचांसि चिन्वतां**
**प्रवृत्तिसाराः खलु मादृशां गिरः।।**[14]

भवतः अर्जुनस्य च पराक्रमात् भीतः दुर्योधनः भवतां इतोऽपि अधिकमनिष्टं न कुर्यात्। अतः तस्मात् पूर्वमेव भवन्तं तस्य प्रतिकारस्य उपायं करणीयम्।

आचार्यभारविना स्वस्य ग्रन्थे 'किरातार्जुनीयम्' इत्यस्मिन् विविधानां मानवीयभावानां वर्णनम् अतीवमनोवैज्ञानिकरीत्या प्रतिपादितम्। आचार्यभारविः एकः प्रशिक्षितः मनोविश्लेषकः आसीत्। अत एव सः मानवस्य अन्तर्निहित सर्वेषां मनोभावानां वीर-शृङ्गार-काम-धैर्य-अहङ्कार-इच्छा-क्रोध-भय-इत्यादीनां च मनोवैज्ञानिकरीत्या विश्लेषणं कृतम्। अतः निष्कर्षरूपेण वक्तुं शक्यते यत् आचार्यभारविः एकः उत्तमः प्रशिक्षितश्च मनोविश्लेषकः वर्तते तथा तस्य रचितं महाकाव्यं किरातार्जुनीयमपि एकेन मनोवैज्ञानिकनिर्देशकरूपेण भवितुमर्हति इति।

**सन्दर्भसङ्केतः-**

1. किरातार्जुनीयम्, 1/44.
2. किरातार्जुनीयम्, 2/45.
3. किरातार्जुनीयम्, 2/2.
4. किरातार्जुनीयम्, 2/5.
5. किरातार्जुनीयम्, 2/23.
6. किरातार्जुनीयम्, 3/53.
7. किरातार्जुनीयम्, 10/62.
8. किरातार्जुनीयम्, 11/32.
9. किरातार्जुनीयम्, 11/79.
10. किरातार्जुनीयम्, 17/63.
11. किरातार्जुनीयम्, 13/1.
12. किरातार्जुनीयम्, 11/3.
13. किरातार्जुनीयम्, 3/36.
14. किरातार्जुनीयम्, 1/25.

■ पत्रसङ्केतः- सहायकाचार्यः, व्याकरणविभागः, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः), लखनऊपरिसरः, खनऊ।

# भासरचितकर्णभारनाटके ध्वनितत्त्वम्

■ सुमनचन्द्रपन्तः 'सुमन्तः'

भारतीयसंस्कृतसाहित्यं भारतीयसमाजस्याचारविचाराणां तदुन्नत्यवनत्योः सामाजिकसांस्कृतिकचेतनयाश्च प्रतीकं वर्तते। दर्पणाभिन्नं साहित्यमिति तस्मिन् समाजस्य व्यसनोदययोः वृद्धिह्रासयोः समृद्धिव्यवृद्धियोः, सामाजिकसामयिकोत्कर्षापकर्षयोः, ऐतिहासिकघटनानाञ्च ज्ञानं तद्देशीयतत्कालीनसाहित्यावलोकनेनैव भवति। संस्कृतसाहित्यस्य दृश्यश्रव्यचम्पूकाव्यानि च प्रमाणयन्ति यत् सर्वेषामेकमेवोद्देश्यमलौकिकमानन्दोपलब्धिरिति। तदनुसारं कविभिः स्वनवनवोन्मेषशालिबुद्ध्या अनेकानि महाकाव्यानि, लघुकाव्यानि, खण्डकाव्यानि, गीतकाव्यानि, गद्यमात्रप्रधानकथाऽऽख्यायिकाप्रभृतीनि रम्याणि दृश्य-नाटककाव्यानि गद्यपद्योभयसम्मिश्रितानि चम्पूकाव्यानि च प्रणीतानि। तेषु सर्वेषु काव्येषु रसस्यैव प्राधान्यमित्यवलोकयितुं शक्यते साहित्याञ्चलेऽस्मिन्। प्राधान्येन व्यपदेशा भवन्ति इति न्यायात् चतुर्दशशताब्द्यामाचार्य कविराजविश्वनाथोऽपि स्वपूर्व- वर्त्तीनामलङ्कारशास्त्रीय काव्यलक्षणविधायीनामाचार्याणां काव्यलक्षणमनङ्गीकृत्य सुसंवलितविविधसुयुक्तिभिः स्वकाव्यलक्षणं-

**वाक्यं रसात्मकं काव्यं दोषास्तदपकर्षकाः।**
**उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥**[1]

इति साहित्यदर्पणाख्ये प्रथितग्रन्थे निरूपितम्। काव्यपरम्परेयं पुण्यतोया गङ्गाधारेवास्रजप्रवाहमाना विद्यते। परम्परायामस्यामभवन्ननेके पुण्यप्रतिभाशालिनः महाकवयः यैः साहित्याञ्चलं प्रकाशितम्। आदिकविवाल्मीकिव्यासभरतादयेष्वेको महाकविभासोऽप्यभूत्। येन स्वादृष्टप्रतिभयैव। शृङ्गारिकैतिहासिकवीररसप्रधानानि रमणीयानि नाटकानि रचितानि। दृश्यकाव्येष्वेतेषु मानवीयभावनानां यन्मनोहारिवर्णनं प्राप्यते, अन्यत्राप्यमेवास्ति। तस्मात् महाकविः भासः अन्येषु कविष्वतिरिच्यते संस्कृतकवाङ्मये। अनेन सुकविना स्वभावाभिव्यक्तिः सरसतया स्वप्रणीतेषु त्रयोदश स्वप्नवासवदत्तम्, प्रतिभायौगन्धरायण, ऊरुभङ्गम्, दूतवाक्यम्, पञ्चरात्रम्, दूतघटोत्कचः, कर्णभारम्, मध्यमव्यायोगः, प्रतिमा, अभिषेकः, अविमारकः, चारुदत्तः, बालचरितम् नाटकेषु कृता वर्तते। एतेषु कर्णभारनामनाटकं सहृदयजनहृदयमनुरञ्जयति। नाटकस्योपजीव्यमैतिहासिकघटनाप्रधानमार्षमहाकाव्यमहाभारतमेव वर्तते। नाटकानां बाहुल्येन विषयवैविध्येनाभिनयोपयोगित्वेन, सामाजिकहृदयतरलीकरणेन च भाषायां सरलता, सरसता, वर्णने कृत्रिमेतरता चरित्रचित्रणे आदर्शवैयक्तिकत्वं, रसानुगुणघाटनासङ्घटने सौष्ठवं, कथाप्रसङ्गस्याविच्छिन्नप्रवाहश्चावलोक्य 'नाटकसम्राट्' इत्युपाधिनालङ्कृतोऽभूदसौ कविः।

महाकविभासकाले कोऽपि नासीत् भरतमुनेः नाट्यशास्त्रानन्तरं द्वितीयालङ्कारशास्त्रीयग्रन्थः। तदधारीकृत्य कविना कृतं नाटकमिदमखिलनाटकीयतत्त्वैः अनुप्रमाणितमत्स्यभिमञ्चनीयमिति। तत्कालीनसंस्कृतिसंस्कारधार्मिकस्थितियज्ञदानादि, विप्रश्रेष्ठान् प्रति सम्मानानुरागादि चेति विषयेऽवगम्यते नाटकेन । भासस्य रचनेयं रूपकस्य कस्यां श्रेण्यां स्वस्थानमावहति विषयेऽस्मिन्नालोचकाः सन्दिहानाः विद्यन्ते तथापि नाटकीयतत्त्वानां सङ्घटने जागरुको दृश्यते महाकविभासः। नास्त्यस्मिन् वीररसः न वा सङ्घर्षयुद्धादीनां चित्रणमतः समालोचकैः उत्सृष्टिकाङ्कमङ्गीक्रियते। दशरूपककारेण निरूपितं लक्षणमस्य-

**उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत्।**
**रसस्तु करुणः स्थायी नेतारः प्राकृता नराः॥**
**भाणवत्सन्धिवृत्यङ्गैर्युक्तः स्त्रीपरिदेवितैः।**
**वाचायुद्धं विधातव्यं तथा जयपराजयौ॥**[2]

अस्मिन् कर्णभारे कर्णचरितं सर्वोत्कृष्टदानशीलप्रख्यातवृत्तं विलसति। कविना मूलकथापेक्षया स्वप्रतिभया करुणरसानुगुणकथा समायोजिता वर्तते। साक्षाद्देवराजेन्द्रः प्राकृतभाषायां भाषते। तल्लक्षणं सङ्घटते।

कर्णभारनाटकस्य संवादमित्थमास्वादयति कविः मङ्गलाचरणविधानानन्तरं नाटकस्य संवादो प्रारभ्यते। नान्द्यन्ते-ततः सूत्रधारः निर्देशयति यत् दुर्योधनस्यादेशेन सम्भ्रान्तः भृत्यः कर्णाय विहिताञ्जलिः भयङ्करयुद्धस्य विषये सूचयति। कर्णोऽपि युद्धपरिच्छदपटमाच्छाद्यानेकानेकागतानागतचिन्तायां निमज्जयन् रङ्गमञ्चं प्रविशति। तत्र भणति यद्यद्यर्जुनः समरमेदिन्यां दृश्यते चेदहं कौरवानामिष्टसिद्धिः करिष्यामि। समापतितौदासीन्यादसन्तुष्टः चिन्तापर्याकुलाऽङ्गेश्वरः स्वस्मिन् दिव्यायुधानां समागमनपूर्ववृत्तान्तं शल्यं प्रति स्मारयति।

पूर्वं पाण्डुपत्नीकुन्त्यामुत्पन्नोऽहं तस्मात् कौन्तेयः राधया पालनपोषणेन च राधेय इति लोकप्रसिद्धिङ्गतोऽहम्। सोऽहं वञ्चकब्राह्मणस्वरूपं समाधृत्य ब्राह्मणोऽहमस्मीति समस्तक्षत्रीयवर्गगर्वपाटननिपुणात् जाम्दग्न्यात् अन्त्येवासित्वरूपेण अस्त्रविद्यामधीये। तत्राश्रमे एकदा हवनीय समीधापलाशपीपलगोरोचनादि आहरणाय गतवता गुरुणा सह कान्तारमगच्छम् वनभ्रमणपरिश्रमात् श्रान्तः गुरुपरशुरामः ममाङ्के सुप्तः सन् तत्र वज्रमुखनामकेन कीटेन ममोरूद्वये कृत्ते। गुरुनिद्राच्छेदभयादहमसहनीयवेदनामसहम् क्षत्रित्वद्राढर्यधैर्यात्। गुरोः निद्राभङ्गान्तरं मां क्षत्रीय इति मत्वा "कालविकलान्यस्त्राणि ते सन्त्वि"ति शशाप। तथा च समरे मातुः वचनमपि स्मरति युधिष्ठिरादिवत्साः ते रक्षितव्याः इति युद्धकाले विप्रेन्द्रः तम्महत्तरां भिक्षां याचितुमागच्छति। तदतिथिसत्कारं कृत्वाऽऽत्मानं पावयति। तथा च विप्रेन्द्र स्वाशीर्वचोभिः "भो कर्ण! सूर्य इव, चन्द्र इव, हिमवान् इव, सागर इव, तिष्ठतु ते यशः" इति सन्तोषयति। कर्णः भगवन्! दीर्घायु भवेति किं वक्तव्यमिति। विचिकित्सवः अङ्गेश्वरः विविधबहुमूल्यसुवर्णसहस्त्रध नुगजश्वादिवृन्दं तस्मै दातुमुत्सृजति परन्त न स्वीकरोति क्षणमात्रसुखदातृत्वात्। अन्ते च विप्रेन्द्रसन्तोषाय आत्मसंरक्षके कवचकुण्डले प्रददाति। इयमेव कथ्यते फलागमावस्था। नास्ति एषः ब्राह्मणभिक्षुकः अपितु देवकार्यसाधकः इन्द्रो वर्तते इत्यवधार्य शल्यराज आश्चर्यान्वितो जातः भो अङ्गराज! वञ्चितः खलु भवान्। नाहं वञ्चितः खलु पाकशासनः मया कृतार्थः साक्षात् अमरेन्द्रः भिक्षुकवेशापन्नत्वात्। विप्रेन्द्रवञ्चनान्तरं ब्राह्मणरूपेण प्रविश्य देवदूतः-वञ्चनजनित पश्चात्तापेन सन्तप्ताय दानीनामग्रगण्याय कर्णाय पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमलानामशक्तिः प्रददाति। कर्णः धिग्! दत्तस्य न प्रतिगृह्णामि परन्तु ब्राह्मणवचनमतिक्रमणीयमिति विचिन्त्य अनुगृहीतो भवति। शल्यराजः वाढमिति उक्त्वा रथारोहणं नाटयतः कर्ण अयं प्रलयसागरघोषतुल्यः शङ्खनादः कृष्णस्य वार्जुनस्य इति विचार्यते नूनमद्य युधिष्ठिरः धर्मराजपराजयक्रुद्धमानसः यावच्छक्तिः आयोधनं विधास्यतीति। शल्यराजः यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः कर्ण इत्युक्त्वा नाटकमपि भरतवाक्येन पूर्णतां गच्छति।

नाटकेऽस्मिन् सूत्रधारः, कर्णः, अर्जुनः, शल्यः, युद्धसूचकभटः, इन्द्रः, देवराजेन्द्रस्य सन्देशवाहकश्चाभिनेतारस्सन्ति। परन्तु कर्णसूतशल्यराजस्य चरितं महाभारतकथापेक्षया भिन्नतया चित्रयति महाकविभासः।

नाटकस्यारम्भ एव शिवेतरक्षतये शिष्यपरम्परायै च मङ्गलमाचरति-

**नरमृगपति वर्ष्मालोकनभ्रान्तनारीनरदनुजसुपर्वव्रातपातालोकः**
**करजकुलिशपालीभिन्नदैत्येन्द्रवक्षाः सुररिपु बलहन्ता श्रीधरोऽस्तु श्रीये वः।**[3]

मङ्गलपद्यादौ त्रैलोक्यममरारि दैत्येन्द्रहिरण्यकश्यपोः प्रत्यूहमपाकरणाय भगवाननरकेशरिणः वन्दते हननमात्रकार्यार्थम् आविर्भावत्वात् अन्ते इन्दिरापतिविष्णुञ्च भजते सर्वभूतमङ्गलकारकत्वात्। पद्येऽस्मिन् नमस्कारात्मकं, वस्तुनिर्देशकात्मकं, श्रीधरः, वः-अस्माकं वा युष्माकं श्रोतृणां दर्शकानाञ्च कल्याणाय-मङ्गलाय अस्तु-भवतु **अशिषि लिङ्लोटौ** इति पाणिनिसूत्रेण[4] आशीर्वादात्मकञ्चेति त्रिविधमङ्गलाचरणमस्ति। महाकविभासकाले ध्वनेः स्थापना न जाता तथापि सन्ति अस्मिन् ध्वनितत्त्वानि तेषामधुना निरूपणं क्रियेऽहम्। ध्वनिसम्प्रदायात् पूर्वम् आचार्यभरतभामहवामनमहोदयानां रसालङ्काररीतिसम्प्रदायश्चासन्। किन्तु नवमीशताब्द्यामाचार्यानन्दवर्धनः तेषां काव्यलक्षणं विखण्ड्य स्वकाव्यलक्षणं "काव्यस्यात्मा ध्वनिरिति" विविधप्रमाणैः संस्थाप्य ध्वनिप्रस्थानस्य प्रवर्तकाचार्योऽभवत्। को नाम ध्वनिरिति जिज्ञासायामाचार्याऽऽनन्दवर्धनः तत्स्वरूपं निरूपयति।

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**[5]

ध्वनिप्रस्थानस्य परमाचार्येण आचार्यमम्मटभट्टेनापि स्वप्रणीतकाव्यप्रकाशे- **इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।**[6] इति लक्षणं प्रतिपादितम्।

यत्र शब्दश्च अर्थश्च तौ शब्दार्थौ द्वावपि स्वार्थौ गुणभूतौ-अप्रधानीकृतौ तद्भिन्नार्थ: अभिव्यङ्क्त: स प्रतीयमानार्थध्वन्यार्थ: उत्तमकाव्यस्यात्मत्वेन स्वीकृत:। ध्वने: त्रिपु वस्त्वलङ्काररसध्वनिभेदेपु रसध्वनेरेव प्राधान्येन व्यवहार: कृत:। वैयाकरणशिरोमणिमहाभाष्यकारादयो केवलं साक्षाच्छब्दजन्य (वाच्य-वाचक-सम्बन्धरूप) गलकण्डनि:सृतवाच: कृते ध्वनिरिति व्यवहारं कुर्वन्ति। यथा महाभाष्यकारेणोक्तम्- ''प्रतीतपदार्थको लोके ध्वनिशब्द इत्युच्यते''। यथा गामानय इत्यादौ श्रवणानन्तरं केवलमानयने प्रवृत्ति: गां बधान इत्यादौ च बन्धने प्रवृत्तिरिति उभाभ्यां वाक्याभ्याम् अस्माच्छब्दादयमर्थो बुद्ध: इति व्यवहारज्ञानमेव जायते। पुत्रस्ते जात:, कन्या ते गर्भिणी इति अत्र ध्यातव्यम्- प्रफुल्लाननमवलोक्य अयं हर्षान्वित: पुत्रोत्पन्नत्वात् वा लोकनिन्दाकारकपुत्रीगर्भवती इति मुखमालिन्यं शोकश्च। अत्र शोकहर्षादौ न तद्वाचकाविति अपितु व्यङ्ग्यार्थत्वेव।

गतोऽस्तमर्क:- इत्यादि वाक्यश्रवणानन्तरं वाच्योऽर्थो एकैव सूर्य: पश्चिमायां दिशि प्राप्त: इति प्रतीयते व्यङ्ग्यस्तु बोद्धादिभेदादनेकविध:। यथा- वटुक: सन्ध्याकालोऽयमागत:, अभिसारिका-उपनायकं प्रति गन्तव्यमिति, वासकसज्जा-पर्यङ्कपट्टादीनां सज्जा कर्तव्या इति। मौनी-वाक्विसर्जन-कालोऽयमिति, पथिक: यात्रास्थानं कर्त्तव्यमिति गोपालक:-व्याघ्रादिभयात् धेन्वाजादी वनात् प्रतिनिवृत्तिकालोऽयमित्यादि अर्था: सम्प्रतीयन्ते। शब्दशास्त्रज्ञेभ्य: वाच्य-वाचकसम्बन्धरूपध्वने: पृथगेव व्यङ्ग्य-व्यञ्जकसम्बन्ध रूपध्वनिरिति। आचार्यविश्वनाथेनाऽपि साहित्यदर्पणस्य पञ्चमपरिच्छेदे एका कारिका सङ्कलिता-

**बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्य:।।**[7]

अत्रापि नृसिंह-हिरण्यकश्यपयोर्देवदानवयोरुभयोर्मध्ये युद्धमभवत् तस्मात् वीररसध्वनि: ध्वन्यते। 'करजकुलिशपालीभिन्नदैत्येन वक्षा:' - करे जात: करज: नख: तदेव कुलिशं वज्रं तस्य पाली कोण:। अत्र करज: न कदापि भवितुमर्हति कुलिशं भिन्न-भिन्नधर्मत्वात्। अत: मुख्यार्थस्य बाधे जाते सति लक्षणया कुलिशगत तैक्षण्यादयो धर्मा: तस्मिन् लक्ष्यन्ते करजेनेव तद्गुरुविदीर्णत्वात्। रूपकालङ्कारेण करज: वज्रधर्माभिन्ननिरूपणत्त्वात् तद्गत्तैक्षण्यातिशयो व्यज्यते। दैत्येन्द्रहिरण्यकश्यपो: परस्परं द्वन्द्वत्वात् कर्णार्जुनयोर्मध्ये भयङ्करयुद्धो भविता इति वस्तुध्वनि: ध्वन्यतेऽस्मिन्। इत्थं मङ्गलात्मकपद्येऽस्मिन् त्रिविध रसवस्त्वलङ्कारध्वनि: ध्वन्यते।

**अयं स काल: क्रमलब्धशोभनो गुणप्रकर्षो दिवसोऽयमागत:।**
**निरर्थमस्त्रं च मया हि शिक्षितं पुनश्च मातुर्वचनेन वारित:।।**[8]

कौरवपाण्डवयोर्मध्ये तुमुले समरे जाते सति क्षत्रीयान्तकभार्गवादधीदस्त्रशिक्षाया: प्रयोगकाल: समागत:। अत्र कविना सर्वनामद्वय, तत्कालविशिष्टवाचक: 'स' तथा एतत्कालविशिष्टवाचको 'अयं' 'हि' निपातश्च सुप्रयुक्तास्सन्ति इति अत्र अयमिति सर्वनामेनैव प्रत्यक्षं सामीप्यञ्च बोध्यते स इति सर्वनामप्रयोगेन क: लाभ: इति निरर्थकतापत्तौ स इति सर्वनामप्रयोगेन यन्नरिक्षयनिमित्तमधीतं तच्छत्रुविनाशकाल: समागत:। हि निपातो अत्र न केवलं पादपूरको अपितु निश्चितं धर्नुर्धारी अर्जुनस्य हननं तथा च समरपराजरूप वस्तुध्वनि व्यञ्जको वर्तते। अत्र सामान्यनिपातादिभि: अर्थान्तरसङ्क्रमितध्वनिना वाच्याद्भिन्नसहृदयहृदयावर्जकचमत्कारकारी अर्थ एव ध्वन्यते। अर्थान्तरसङ्क्रमितवाच्यध्वने: काव्यप्रकाशकारेण काव्यप्रकाशे सोदाहरणपूर्वकमित्थं निरूपितमस्ति-

**अविवक्षितवाच्यो यस्तत्र वाच्ये भवेद् ध्वनौ।**
**अर्थान्तरसङ्क्रमितमत्यन्तं वा तिरस्कृतम्।।**

उदाहरणम्-

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**
**आत्मीयां मतिमस्थाय स्थितिमत्र विधेहि तत्।।**

अत्र त्वामस्मि वच्मि इति सामान्यवचनादि विशेषार्थद्योतका:। ध्वनि: न केवलप्रबन्धवाक्येषु अपितु पदैकदेशरचनावर्णेष्वपिरसादय:[10] अर्थात् ध्वनिपदेकदेशवर्णलिङ्गसुपतिङ्वचनसर्वनामनिपातादिष्वप्यभिव्यञ्यते। भृगुवंशतिलकस्य क्षत्रीयान्तकस्य गुरुपरशुरामस्य शापमनुस्मरन् कविवक्तृप्रौढोक्तिमाध्यमेन कवि: भणति यत् दैन्यभावमापन्न: कर्ण: स्यन्दनस्थाश्वान् निजरक्षणाय प्रार्थयति।

**इमे हि युद्धेष्वनिवर्तिताशा हयाः सुपर्णेन समानवेगाः।**
**श्रीमत्सु काम्बोजकुलेषु जाता रक्षन्तु मा यद्यपि रक्षितव्यम्॥[11]**

विवेकीदानशीलसूर्यात्मजे कर्णे सन्देहो जायते मम दैन्यकालसमापतीति, हि-निश्चितं युद्धष्वनिर्वताभिलाषाः प्रसिद्धविष्णुवाहनगरुडसमानवेगान्विताः लक्ष्मीसयुताः कम्बोज-देशोत्पन्नवंशेषु (काबुलीति लोकभाषायां प्रसिद्धिः) प्रादुर्भूताः समुत्पन्नाः यद्यपि एते सन्ति मया रक्षितु योग्याः तथापि मम दैन्यावस्थायां मामवन्तु अत्रापि हि निपातेन अश्वानामुत्कर्षातिशयः कर्णस्यापकर्षातिशयश्च ध्वन्यते। तदनु कर्णं कवचकुण्डले याचितुं साक्षात् देवराजेन्द्रः त्रिविष्टपात् छद्मविप्ररूपं धृत्वा कर्णस्य राजधानीं प्रति समायाति। तेन ससम्मानपूर्वकं तमाहूय पाद्यार्घादिभिः समभ्यचितश्च विप्रेन्द्रत्वादात्मानं कृतार्थी कुर्वनाह-

**यातः कृतार्थगणनामहमद्य लोके राजेन्द्रमौलीमणिरञ्जितपादपद्मः।**
**विप्रेन्द्रपादरजसा तु पवित्रमौलिः कर्णो भवन्तमहमेष नमस्करोमि॥[12]**

लोकेऽधुना राजेन्द्राः मम पादयोः नमन्ति तथापि नाहं यातः कृतार्थगणयां परन्त्वद्य विप्रेन्द्रपादरजसा पूतमस्तकोऽहं प्रयोजनपूर्णवतां गणनायां प्राप्तः एतादृशमहत्पुण्यशाली ब्राह्मणश्रेष्ठस्य चरणधूलिः विलेपनत्वात्। एषः साक्षादखिलभुवनराजमानी अहं विकर्तनात्मजो पुरोविराजमानकौरवसेनाप्रमुखः अङ्गेश्वरः कर्णः भवन्तं विप्रेन्द्रं प्रणमामि। अत्र एषः सर्वनामपदेन तत् कर्णस्य बोधो जाते सत्यप्यहं कर्णः इति पुनर्वचनस्य किं प्रयोजनमित्याशङ्कायामर्थान्तरसङ्क्रमित-वाच्यध्वनिना कर्णस्य वैशिष्ट्यातिशय व्यज्यते। नाहमस्मि सामान्यः विशेषो हि अहमिति विद्याविनयशौर्यपराक्रमादिगुण-शालित्वात् राजेन्द्रमौलिमणिरञ्जितपादपद्मत्वाच्च अहमेव श्रेष्ठः नान्यः। एतादृशगुणसम्पन्नोऽहं नमस्करोमि।

इत्थं महाभासरचितकर्णभारनाटके निहितध्वनितत्त्वानां निरूपणं यथामति मया कृतं शोधपत्रेऽस्मिन्। बालोपयोगी भविष्यति इमि मन्येऽहम्।

**सर्वत्र सम्पदः सन्तु नश्यन्तु विपदः सदा।**
**राजा राजगुणोपेतो भूमिमेकः प्रशास्तु नः॥[13]**

**सन्दर्भसङ्केतः-**


1. साहित्यदर्पणः, 1/3.
2. दशरूपकम्, प्रकाशः-3.
3. कर्णभारम्।
4. अष्टाध्यायी, 3/3/173.
5. ध्वन्यालोकः, 1/1.
6. काव्यप्रकाशः, 2/4.
7. साहित्यदर्पणः, 5/2.
8. कर्णभारम्, श्लोकसं.-8.
9. काव्यप्रकाशः, चतुर्थोल्लासः, 24.
10. काव्यप्रकाशः, चतुर्थोल्लासः, 61.
11. कर्णभारम्, श्लोकसं.-12.
12. कर्णभारम्, श्लोकसं.-16.
13. कर्णभारम्, श्लोकसं.-24.


■ पत्रसङ्केतः- शोधच्छात्रः (साहित्यविभागः), राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः), लखनऊपरिसरः, लखनऊ।

# संस्कृतसाहित्ये स्वयंवरविधिः

■ उमेशचन्द्रः 'कपिल'

भारतीयसंस्कृतौ षोडशसंस्कारेषु विवाहः खल्वेकः पवित्रो यज्ञः। "विवाहः विशिष्टं वहनम्" इति शब्दकल्पद्रुमः। यद्यपि विशिष्टं वहनं यस्य कस्यापि वस्तुनः सम्भवति तथापि विवाहशब्दो योगरूढत्वेन साम्प्रतं दारपरिग्रहार्थम् एव प्रयुज्यते। विवाहः "भार्याप्राप्तिहेतुः" इति कूल्लूकभट्टः।[1] गार्हस्थ्यधर्मसम्पादनाय पतिगृहे वहनाय च कन्या येनोपायेन प्राप्ता तमेवोपायमुद्दिश्य विवाहभेदाः निर्दिष्टाः। पुरा भारते बहुविधेषु सांस्कृतिकस्तरेषु विविधवर्गाणां जनाः बभूवुः तद्यथा स्ववर्गस्य वैशिष्ट्येन विवाहार्थं कन्यागृहणं तेषु-तेषु वर्गेषु प्रचलितम्। अतः ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वराक्षसपैशाचाख्यभेदेन मनुनास्याष्टविधत्वं प्रतिपादितम्। यथा-

**ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥**[2]

श्रुतिशीलेविज्ञायब्रह्मचारिणेऽर्थिने कन्या दीयते स ब्राह्मः, दक्षिणासु नीयमान स्वन्तर्वेद्युत्विजे स दैवः, पूर्वां लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दत्वा ग्रहणमार्षः, आच्छाद्यालङ्कृत्येषा सहधर्म चर्यतामिति प्राजापत्यः, धनेनोपतोष्याऽऽसुरः, सकामेन सकामायां मिथस्संयोगो गान्धर्वः[3], प्रसह्य हरणाद्रक्षसः, सुप्तां प्रमत्तां वोपयच्छेदिति पैशाचश्चेति। एष्वष्टविधेषु मुख्यत्वेन आद्याश्चत्वारः प्रशस्या अन्तिमाश्च निन्दिता गर्हिताश्चेति धर्मशास्त्रिणां मतम्। भारतीयसंस्कृतौ विवाहेन सर्वत्रैव कन्या अतिशयं प्राप्नोति, गार्हस्थ्ये पत्नीरूपेण तु सर्वोत्तमो परिग्रहः। तथा च सामाजिकसौष्ठवार्थं, भौतिकसुखसम्पादनार्थं, चानुत्तमोपयोगो विवाहद्वारेण पत्नीलाभोस्ति। इतोऽप्यधिकाः केचिदपरे लाभाः यथा- पूर्णत्वप्राप्तिः, पत्नीं विना पुरुषो अपूर्णो भवति। अत एव सार्धाङ्गिनीशब्देन व्यवह्रियते। पत्नीमन्तरेण न यज्ञस्य पूर्णत्वं स्वीक्रियते। वैदिकविवाहस्याविच्छेद्यत्वं च प्रतिपाद्यते। जाया गार्हपत्योऽग्निः। जाया एव मानवस्तु पूर्णत्वं सञ्जायते। आरण्यकेऽपि प्रोक्तम्- **'तस्माद् पुरुषो जायां वित्त्वा कृत्स्नतरं इवात्मनं मन्यते'**[4] इति। अपत्नीकः पुरुषः कर्माधिकारी न भवति। यतो हि पत्नी धमार्थकामानां मुख्यकारणमिति शास्त्रविधानमस्ति। तथा हि उक्तमपि-

**पत्नी धर्मार्थकामानां कारणं प्रवरं स्मृतम्। अपत्नीको नरो भूपः कर्मयोग्यो न जायते॥**[5]

महाभारते स्त्रीणां महात्म्यविषये भूयिष्ठं निगदितं तथाहि शान्तिपर्वणि-

**नास्ति भार्या समो बन्धुः नास्ति भार्यासमा गतिः। नास्ति भार्यासमो लोके सहाये धर्मसाधनः॥**[6]

मनुस्मृतौ योषितां स्वरूपमत्युत्कृष्टत्वेन प्रतिपाद्यते। यत्र योषितां समाजस्तत्रैव सर्वक्रियाणां साफल्यम्, तदभावे तु सर्वकृत्यानां निष्फलत्वमुक्तमपि-

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाक्रियाः॥**[7]

अत एव, देवानां प्रीत्यर्थं यज्ञ-पूजापरायणे प्राचीनसमाजे पत्न्या आवश्यकता आसीत्। तथा च लोके किं करणीयम्? इत्यस्मिन् विषयेऽपि रामायणे सीता रामं कथयति- 'व्यर्थं हिंसा न करणीया'[8]। तथा किष्किन्धायां पञ्चदशे सर्गे तारा च बालिनं कथयति- रामेण वैरं मा कार्षीरिति। ऋणत्रयाद्विमुक्तये कस्यचिद् पुरुषस्य लोकपरलोके सुगतिः पुत्रेणैव। इयं धारणा पत्न्या महत्त्वं पत्युर्मानसे, प्रगुणयति लोके पारलौकिके सुगतिर्पुत्रं विना न भवेत् इति धारणा पत्न्या साहचर्यं परिहार्यमस्ति विदधाति वा। स पुत्रस्तु स्त्रीं विना न सम्भवति पुत्र एव शिष्यो भूत्वा पितुर्ज्ञानशरीरस्य अमरत्वं साधयति। स्त्रीस्तु पत्युर्जीवने माङ्गल्यविध ायिनीति सुमङ्गली संज्ञिता। कामसूत्रानुसारेण पत्नी प्रखरबुद्ध्या गृहस्य प्रसमीक्ष्य व्ययं कुर्यात्[9]। कालिदासेनापि रघुवंशे उक्तं यत्-

**गृहिणी सचिवः सखीमिथः प्रियशिष्या ललिते कलाविधौ।**
**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्॥**[10]

अर्थात् त्वमेव गृहिणी दाराः अनेन सर्वकुटुम्बं त्वदाश्रयं, त्वमेव सचिवो बुद्धिसहायो मन्त्रिरिति। धार्मिकविधानेष्वेव न केवलं अपितु भीषणे समरे अपि सा सेनानीत्वमलञ्चकारे। "संहोत्र स्म पुरा नारी समनं वावगच्छति"[11]।

परं भारतीयधर्मशास्त्रेषु एषु विवाहेषु पतिचयनप्रक्रियायां कन्यायाः अतिशयं न दृश्यते सा मूर्तिवत् स्वजीवननिर्वहणं क्रियते स्म। कन्यापिता-तदभिभावकाभ्यां तस्याः पतिचयनं कृतम्, येन कन्यायाः मानस्थितेः

भावनाया: अपेक्षा न हि क्रियते स्म। सा मौनं स्वपित्रा समानीतं पतिमनिच्छयाऽपि स्वीक्रियते स्म। अस्मिन् क्रमे प्राय: कन्यावरयो: असदृशमनपेक्षितं मेलनमभवत्, अनेन दाम्पत्यजीवनं विवशतापूर्णं प्रचलति स्म। गृहमेधस्योपादानकारणभूता कन्या यद्यपि वंशविस्तृतेर्दृष्ट्या पुत्रापेक्षया महत्त्वपूर्णा सम्भूतापि तथापि हिन्दूजातौ उपेक्षणीया दु:खकारिणा च मन्यते स्म। प्रायशो वैदिकाकालादेवायं स्थिति: हिन्दूसमाजे समागच्छति। मध्ययुगे एतादृशा अपि काला आसन् यदा कासुचित् जातिषु कन्यावयस्य हृदयदारिका प्रथा प्रचलिता, ऐतरेयब्राह्मणस्यैकस्मिन् भाष्यस्थले सायण: कथयति यत् जातमात्रैणैव कन्या पितुर्हृदये दु:खोत्पादिका विवाहकालेऽर्थकष्टदायिका, यौवनेऽपि क्षतयोनित्वादि बहुदोषभीतिकारिका भवति।[12] यथा-

**सम्भवे स्वजनदु:खकारिका सम्प्रदानसमयेऽर्थहारिका।**
**यौवनेऽपि बहुदोषकारिका दारिकाहृदय दारिकापितु:।।**

एतत्सर्वस्य अनौचित्यस्य समाधानाय कदाचिच्च वैदिककालादेव स्वयंवरविधि: विकसितरूपेण दृश्यते। स्वयंवरमाध्यमेन वैदिककालादेव विवाहस्य प्रचुरवर्णनं प्राप्यते। स्वयंवरे कन्या स्वयं आत्मेच्छया संस्कारानुसारं स्वभावानुसारं व्रियते वरं (पतिं), तथा च स्वयंवरे कस्मिंश्चिद् विशिष्टकार्योपक्रमे सर्वातिशायियोग्यप्रदर्शनेन अन्यथा वा औदात्यप्रदर्शनेन वराय कन्यालभ्याऽऽसीत्। स्वयंवरेषु निमन्त्रितानां वरेण्यानां कस्यचिदेकस्य रूपसौन्दर्येण, गुणातिशयेन पराक्रममौदात्येन वा जिता सती कन्या स्वयमेव जयमालया वरमलङ्कुर्वाणा तस्यैव अभूत्। अथर्ववेदस्येके मन्त्रे समागतानां जनानां वृत्रहन्तमिन्द्रं वृणोति कन्या। ऋग्वेदेऽपि वर्णितं यत्- राजापुरुमित्रस्य कन्या शुन्ध्यूत् कमद्यु: स्वयंवरसभायां विमदं पतित्वेन वृणीचकार।[13] प्राचीनकाले चित्रद्वारापि स्वयंवरोऽभवत्।[14]

स्वयंवरेषु काश्चित् कन्यका योग्यवरान्वेषणाय सुरक्षिता: सत्य: परिभ्रमन्ति स्म। केषुचित् स्वयंवरेषु बुद्धिपरीक्षापि नियोजिता अजेन्दुमती स्वयंवरोत्सव: कालिदासेन तथैव वर्णितम्। कतिपयस्वयंवरेषु कन्याऽपहृता: यथा रुक्मिणीस्वयंवरे, ईदृशेषु स्वयंवरेषु युद्धावसर: स्वाभाविक एव, तथाहि रामजी उपाध्यायेन स्वयंवराणां मुख्यत्वेन त्रिविधं वर्णनं कृतम्।[15]

1. प्रथमविधौ पित्रायोजितवरेण्यसङ्गमात् कन्यया स्वेच्छं योग्यतमस्य वरणम्। यथा महाभारते दमयन्त्या नलस्य वरणम्।

2. द्वितीयविधौ पितुरनुमत्या चयनीयवरम्। अन्वेष्टुं कन्या भ्रामं-भ्रामं स्वीयेन मानदण्डेन यं कचिद् योग्यतम व्याजानात् तमवारीत्। यथा- इन्दुमत्या स्वयंवरे अजस्य वरणम्।

3. तृतीयविधौ योग्यतमस्य वरस्यावधारणाय पित्रा विवाहाभ्यर्थिनाम् औदात्यपरीक्षणमायोज्यते यथा रामायणे सीतास्वयंवरोऽभवत्।

आधुनिके समाजेऽपि यत्र कुत्रापि कन्या स्वयं व्रियते वर:, अनेनैव सकलविश्वेषु कन्याया: जीवनं सुखमयं स्वातन्त्र्यं जातम्। अत: यत्र कन्या मोदते तत्र सुखस्य वृष्टिर्भवति, यत्र चैषा सीदति आहोस्विद् क्लिश्यति तत्कुलं शीघ्रमेव विनाशम् उपगच्छतीति।

**सन्दर्भसङ्केत:-**

1. मनुस्मृति:, अधि.-3/20.
2. मनुस्मृति:, अधि.-3/21.
3. मनुस्मृति:, अधि.-3/20.
4. ऐतरेयब्राह्मणम्, 2/2/2/6.
5. याज्ञवल्क्यस्य अपरार्कटीका, 1/51.
6. महाभारतम्, शान्तिपर्वणि, 142/10.
7. मनुस्मृति:, 3/56.
8. वाल्मीकिरामायणम्, अरण्यकाण्डे, नवमसर्गे।
9. कामसूत्रे, 4/1/32.
10. रघुवंशे, अष्टमसर्गे।
11. अथर्ववेदे, 20/126/10.
12. ऐतरेयब्राह्मणभाष्ये, 33/1.
13. युवं रथेन विमदाय सुन्ध्युवं न्यूहथु: पुरुमित्रस्य योषणाम्। -ऋग्वेद:, 10/39/7.
14. संस्कृत वाङ्मय में नारी एवं परिचयात्मककोश।
15. भारतीयसंस्कृतिसौरभम्, गृहस्थाश्रमे द्रष्टव्य:।

■ पत्रसङ्केत:- शोधच्छात्र: (साहित्यविभाग:), राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालय:), लखनऊपरिसर:, लखनऊ।

# वेणीसंहारनाटकस्यौचित्योन्मुखं सामाजिकावदानम्

■ वन्दना द्विवेदी

साहित्ये समाजस्य परिवर्तमानं विकसमानं च रूपं प्रतिक्षणं प्रतिविम्बितं जायते। साहित्यप्रणेता न केवलं साहित्यस्य द्रष्टा अपितु स्रष्टा अपि भवति। कथनस्येदं तात्पर्यमस्ति यत् साहित्यकारो जीवनस्य क्रान्तीनां न केवलं चित्रणं करोति अपितु जीवनमपि क्रान्तिदर्शिनम् औचित्यपूर्णं च परिकल्पयति।

संस्कृतसाहित्ये काव्यशब्देन श्रव्यदृश्ययोरुभयोः परिगणनं भवति। तत्र नाटकं विशेषस्थानमाप्नोति। नाटकस्य महत्त्वं प्रकाशयता। आचार्यभरतेन उक्तम्-

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।**[1]

महाभारतीयघटनाऽऽधारितेपु नाटकेषु भट्टनारायणीयं वेणीसंहारनामकं नाटकमेकं घटनाप्रधानं सुविख्यातं नाटकमस्ति। इदं नाटकं समाजव्यापिनीनां रूढीनां निरसनं कृत्वा जनमानसं जागरूकं करोति, तथा जीवनस्य मूल्यौचित्यं प्रति सातत्येन प्रेरयति।

वेणीसंहारस्य नामकरणादवगम्यते यत् सकला अपि घटना द्रौपदीं केन्द्रीकृत्य परिभ्रमन्ति। वेणीसंहारस्य नायिका द्रौपदी सभायां मध्ये कौरवकृतापमानं सोढुं न शक्नोति, अपितु स्वात्मसम्मानार्थं सर्वदा जागर्ति। मुक्तवेणीद्रौपदी स्ववेणीं दुःशासनवधात् परमेव संहर्तुं प्रतिज्ञां करोति। युधिष्ठिरस्य शान्तिस्तस्या व्यथां द्विगुणीकरोति। भीमसेनः सन्धि प्रस्तावं अस्वीकृत्य युद्धार्थमुद्यतोऽस्ति। अतो द्रौपदी भीमसेनमेव स्वसम्मानरक्षार्थं निवेदयति मध्ये मध्ये युद्धार्थमुत्तेजयति प्रेरयति च।[2] भीमसेनो राजसभायां द्रौपद्या अपमानं वीक्ष्य अन्य पाण्डवान् विरहितान् सतोऽपि तत्कृत्यकर्तारञ्चाक्षिपति।[3] यच्छ्रुत्वा द्रौपदी स्वापमानं स्मर्तुं भीमं निवेदयति।[4] बौद्धिकचातुर्यविवेकोत्साहदृढसङ्कल्पानां प्रतिमूर्तिमेव द्रौपदी वर्तमानसमयात् पञ्चसहस्रवर्षाणि पूर्वमेव प्रभावशालितया स्वापमानस्य विरुद्धं वाचिकमान्दोलनं कृतवती।

कुप्रथाग्रस्तस्य कुण्ठानैराश्यादिभावैरन्वितानां नारीणां कृते द्रौपद्याः प्रतिज्ञा, साहसं आत्मशक्तिः, प्रत्युत्पन्नमतित्वञ्चेति प्रेरणास्पदमस्ति। एतस्याश्चरित्रं समग्रसमाजमपि नारीणां सम्मानाय सम्प्रबोधयति। नारीमुक्तेर्दिशायां कयाचिन्नार्या कृतोऽयमुपक्रमः प्रथमेवास्ति।

वेणीसंहारनाटकस्य समग्रं कथानकं समाजे नूतनचेतनायाः सञ्चारं करोति। भारतीयसमाजः प्रारम्भादेव पितृसत्तात्मकं पुरुषप्रधानश्चासीत्। तथा सत्यपि पत्न्याः समग्रतया रक्षणदायित्वं पत्युरेव भवति।[5] अत एव कौरवसभायां स्वपत्न्याः सञ्जातस्यापमानस्य व्यथा भीममुत्पीडयति। भीमसेनो द्रौपद्या अपमानस्य प्रतिकारं स्वीयं परमकर्त्तव्यं मन्यते। एतदर्थमसौ ज्येष्ठभ्रातुर्युधिष्ठिरस्य सन्धिप्रस्तावं निराकरोति।[6] पतिभावापन्नं भीमसेनं द्रौपद्या मुक्ताः केशास्तथा तस्याः उद्विग्नताः पीडयन्ति। पाण्डुपुत्राणां जीवनकाले सामीप्ये च द्रौपद्या दयनीयाम् इमां दशां भीमः सोढुं न शक्नोति भीमसेनस्य चरित्रं स्वपत्न्याः अपमानप्रतीकारार्थं सामाथ्यौत्साहाभ्यां परिपूर्णमिवालोक्यते। भीमस्य चरित्रं पुरुषसमाजस्य कृते अनुकरणीयमस्ति। पुरुषस्य परमं कर्तव्यमस्ति नार्याः सम्माननं संरक्षणञ्च। यदि काचिन्निष्ठासम्पन्ना नारी पुरुषस्य सुखदुःखयोः सहभागिनी अस्ति चेत्तु पुरुषस्यापि कर्तव्यमस्ति यदसौ पत्न्याः कष्टं स्वकष्टं तथा पत्न्याः अपमानं स्वापमानं जानीयात्। समाजे सम्प्रति सञ्जायमानानां नारीजनेष्वत्याचाराणां विरोधे पुरुषैः सयत्नं सक्रियैः भाव्यम् यद्येतस्मिन् उद्योगे समाजस्य परिवारस्य चापि विरोधः स्यात्तु तथापि न पराङ्मुखता स्वीकर्तव्या।

मानवस्तु एकः सामाजिकः प्राणी भवति, असौ निसर्गेण कर्मनिष्ठो भवति। असौ क्षणमात्रमपि निष्क्रियः स्थातुं न शक्नोति। परं मानवो यादृशं कर्मानुतिष्ठते, तेन तादृशमेव सदसत्फलमवाप्यते।

वेणीसंहारनाटकदिशा दुर्योधनादिसमस्तकौरवपक्षः स्वकर्मानुसारेण फलमवाप्नोति। दुर्योधनो मध्येसभं यत् द्रौपद्याः तिरस्कारं तथा पाण्डवैः सह कापट्यञ्चकार। तस्य प्रतिफलमपि भ्रातृभिः सह तेनावाप्तम्। चतुर्थाङ्कारम्भे प्रतिघातविक्षतं दुर्योधनं नीत्वा सूतः प्रविशति। दुर्योधनमन्विष्यमाणः सुन्दरकः प्रोक्तवान्- दुर्योधनस्येयं दुर्दशा भाग्यवशान्नास्ति अपितु असत्कर्माणां प्रतिफलमस्ति।[7] एवमेव धृतराष्ट्रः गान्धारी च स्वपुत्राणामनुचितकार्याणि न निरोधितवन्तौ अतस्तावपि स्वकीय- पुत्रशतमरणदुःखं सहेते स्म।[8]

वेणीसंहारनाटकस्य एतेषु कथानकेषु स्थितं परमुपदेशं नाटककारः सामाजिकेभ्यो विततार यत् सत्कर्मणः फलं शुभं तथा असत्कर्मणोऽशुभं फलं मानवेनावश्यमुपभुज्यते। अतो मानवेन सत्कर्मणामनुवर्तनं करणीयम्, अनुचितकर्माचरणं तथा तत्सम्पादनाय साहाय्यञ्च न कदापि समनुष्ठेयम्।

इदानीं समाजो भौतिकसमुन्नतेः शिखरमारूढो विद्यते तथापि नासौ भेदभावाद्विमुक्तः प्रतिभाति। वेणीसंहारनाटकस्यान्यतमं पात्रं कर्णः जन्मापेक्षया कर्मणि सामाजिकं विश्वासं दधाति। कर्णमतेन कस्मिंश्चिदपि कुले जन्म तु भाग्याधीनं भवति परं पौरुषदर्शनं चरित्रनिर्मिश्च स्वाधीनं विद्यते।[9] दुर्योधनदुःशासनौ यद्यपि श्रेष्ठकुलसमुत्पन्नौ आस्ताम्, तथापि स्वकीयासत्कर्मणां प्रभावेण सकलस्यापि कुलस्य विनाशस्य निन्दायाश्च हेतु अभवताम्। अतः सदाचारस्य नियमानामपालनेन उच्चकुलस्यापि जातकः समादरभाजनं न भवति। यदि शूद्रोऽपि उपर्युक्तसदाचारनियमानुपतिष्ठते त्वसावपि समादरभाजनं मन्तव्यः।

साहित्यं विलाससम्भारो नास्ति। साहित्यं समाजं सत्योन्मुखं करोति। एवञ्चानेकविध-सामाजिक-दुष्कार्य-कुरीति-कुप्रथानां दमनं च विदधाति।

एवम्प्रकारेण वेणीसंहारनाटकं समाजाय औचित्योन्मुखीं कामप्येकां विशिष्टां दिशां प्रदिशति। नाटके यत्र द्रौपद्याश्चारित्र्यं नारीसमाजं प्रेरयति तथैव भीमस्य चारित्र्यं पुरुषसमाजं नार्याः सहयोगितायै, संरक्षायै, उचितस्थानप्रदानार्थं सम्मानायै च प्रेरयति। नाटके वर्णिताः विविधप्रसङ्गाः सत्संस्काराणां बीजान्यारोप्य समाजे नैतिकगुणानां विस्तारं कुर्वन्ति। पाण्डवानां विजयः कौरवाणां विनाशश्चेदं तथ्यं साधयति यत् सर्वदा न्यायस्य धर्मस्य चैव विजयो भवति न चाधर्मस्येति। सकलोऽपि वेणीसंहारनाटकप्रबन्धः औचित्यसंवलितेन पथेन गमनार्थं मानवसमाजं प्रेरयति। इयमतिशायिनी सत्प्रेरणा वस्तुतो हि आदर्शसमाजस्य निर्मितौ सहायिका विद्यते।

**सन्दर्भसङ्केतः-**

1. नाट्यशास्त्रम्, 1/116.
2. वेणीसंहारम्, 1/14.
3. वेणीसंहारम्, 1/17.
4. वेणीसंहारम्, 1/वृत्तिभागे, पृ.सं.-34.
5. महाभारतम्, अनुशासनपर्वः, 104/137.
6. वेणीसंहारम्, 1/10.
7. वेणीसंहारम्, 4/वृत्तिभागे, पृ.सं.-210.
8. वेणीसंहारम्, 5/वृत्तिभागे, पृ.सं.-262.
9. वेणीसंहारम्, 3/37.

■ पत्रसङ्केतः- शोधच्छात्रा (साहित्यविभागः), राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः), लखनऊपरिसरः, लखनऊ।

# साहित्यविद्या साहित्यिकप्रस्थानानि च

■ रामप्रवेशत्रिपाठी

संस्कृतवाङ्मये साहित्यशब्दस्य प्रयोगः तत्र क्रियते यत्र काव्यभेदतत्स्वरूपतद्गतरसदोषगुणालङ्कारादिनिरूपणं क्रियते। काव्यनिरूपणप्रसङ्गे एव तद्विभावादिरूपतया नायिकानां नायकानां च भेदा अपि प्राप्तनिरूपणा भवन्ति। तेन तदप्यस्य शास्त्रस्याङ्गभावं भजते। साहित्यशास्त्रं अलङ्कारशास्त्रं काव्यशास्त्रमित्यादि नाम्ना ज्ञायते स्म। नवीनयुगे अयं शब्दः अलङ्कारशास्त्र-काव्यशास्त्राद्यपेक्षया अधिकप्रचलितः वर्तते। अस्य श्रेयः चतुर्दशशताब्दे: आचार्यविश्वनाथं गच्छेत्। तेन स्वग्रन्थनाम 'साहित्यदर्पणम्' कृतम्। ग्रन्थस्यास्याध्ययनाध्यापनप्रणाली बह्वधिकप्रचलिताऽभवत्। अत एव, काव्यसौन्दर्यविवेचकशास्त्रस्य कृते 'साहित्य' शब्दः अधिकप्रचलितो जातः तथा अलङ्कारशास्त्रं, काव्यशास्त्रं, काव्यालङ्कार इत्यादि शब्दाः न्यूनतामुपगताः। आचार्यविश्वनाथात् पूर्वमेका-दशशताब्द्यामलङ्कारसर्वस्वकाररुय्यकोऽपि 'साहित्यमीमांसा' नाम्ना स्वापरग्रन्थे 'साहित्य' शब्दस्य प्रयोगं कृतवानासीत्। परञ्च तस्याऽयं ग्रन्थः अधिकप्रचलितः नाऽभवत्। अत एव काव्यशास्त्रस्य कृते 'साहित्य' शब्दप्रचारस्य श्रेयः विश्वनाथमेव गच्छति। परञ्च आचार्यविश्वनाथः अस्य शब्दप्रयोगस्य आदिप्रवर्तकः न, अस्य आदिमूलं तु काव्यशास्त्रस्याद्याचार्यस्य भामहेन काव्यालङ्कारे प्राप्यते। आचार्यभामहेन स्वग्रन्थारम्भे एव "शब्दार्थौ सहितौ काव्यम्" एवं काव्यलक्षणं कृतम्। अर्थात् शब्दार्थयोः साहित्यं काव्यमिति। शब्दार्थस्य अर्थात् साहित्यस्याभिप्रायः दशमशताब्द्यां वक्रोक्तिजीवितकार आचार्यकुन्तकः लिखति-

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥**[1]

अस्यानुसारं काव्ये सौन्दर्याधानस्य कृते शब्दार्थयोः मनोहारिणी स्थितिर्नाम साहित्यं वर्तते। अर्थात् शब्दार्थयोः परस्परं समन्वयः भवेद् न्यूनाधिक्यं न भवेदिति। वक्रोक्तिजीवितकारः कुन्तकः शब्दार्थयोः साहित्यं स्वकाव्यलक्षणे समावेशयति-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥**[2]

नवमशताब्द्यां काव्यमीमांसाकारः राजशेखरः "पञ्चमी साहित्यविद्या इति यायावरीयः" लिखित्वा अस्य शास्त्रस्य कृते साहित्यविद्या, साहित्यशास्त्रं वा इति नाम निर्दिष्टवानस्ति। एकादशशताब्द्यां रुय्यकः स्वग्रन्थनाम 'साहित्यमीमांसा' तथा चतुर्दशशताब्द्यां विश्वनाथेन स्वग्रन्थनाम 'साहित्यदर्पणम्' कृतम्। साहित्यशास्त्रस्य विषये राजशेखरेण स्वकाव्यमीमांसायामेका आख्यायिका पौराणिकशैल्यां प्रदत्ता। अस्यां प्रामाणिकतत्त्वानि न्यूनानि सन्ति। तथापि साहित्यशास्त्रविषये एका विचारधारा लभ्यते। अत एव उपयुक्तं भविष्यति। राजशेखरः लिखति- "अथातः काव्यं मीमांसिष्यामहे यथोपदिदेश श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुष्षष्टये शिष्येभ्यः सोऽपि भगवान् स्वयम्भूरिच्छाजन्मभ्यः स्वान्तेवासिभ्यः। तेषु सारस्वतेयः वृन्दीयसामपि वन्द्यः 'काव्यपुरुषः' आसीत्। तञ्च सर्वसमयमिदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवस्वस्त्रितयवर्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्या प्रवर्तनाय प्रायुङ्क्त। सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविधा स्नातकेभ्यः सप्रञ्च प्रोवाच। तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्, औक्तिकमुक्तिगर्भः रीतिनिर्णयं सुवर्णनाभः आनुप्रासिकं प्रचेता, यमो यमकानि, चित्रं चित्राङ्गदः शब्दश्लेषं श्लेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणौपादानिकमुपमन्युः, औपनिषदिकं कुचमार इति। ततस्ते पृथक्-पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः। ......इत्थं चकार प्रकीर्णत्त्वात् सा किञ्चिदुच्चिच्छिदे। इतीयं प्रयोजकाङ्गवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशाधिकरणी प्रणीता"॥

**साहित्यशास्त्रे प्रस्थानानि-** साहित्यशास्त्रीयपरम्परायाः पर्यालोचनेन ज्ञायते यदत्र मतभेदात् कतिपये वर्गाः सञ्जाताः, तेषां तन्मतानि विवेचनीयानि भवन्ति। ते चात्र यथाक्रमं परिचिताः क्रियन्ते।

**रससम्प्रदायः-** रससिद्धान्तस्य प्रवर्तकेन भरतमुनिना रससूत्रं प्रवर्तितम्- **"विभानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"**[3] इति सूत्रमेव रसस्वरूपनिर्णायकेष्वादिमं प्रसिद्धम्। ततः प्राचीनानां नन्दिकेश्वरप्रभृतीनां मतं नोपलभ्यते। मुनिना भरतेन स्वीयनाट्यशास्त्रस्य

षष्ठे सप्तमे चाध्याये रसस्य विषये स्वमतं प्रस्तुतम्। भरतसूत्रं बहुभिर्व्याख्यातम्। तत्र मतभेदोऽप्युत्पन्नः। भट्टलोल्लटप्रभृतयः संयोगादित्यस्य जन्यजनकभावरूपात्सम्बन्धादित्यर्थं कृत्वा रसं विभावादीनां कार्यमाहुः। शङ्कुकादयस्तु संयोगादित्यस्य अनुमाप्यानुमापक-सम्बन्धादित्यर्थं कृत्वा विभावादिभिः रसस्यानुमानं स्वीकृतवन्तः। भट्टनायकादयश्च संयोगादित्यस्य भोज्यभोजकरूपात्सम्बन्धादित्यर्थ-मभिप्रयन्तोऽभिधातोऽन्यद्भावकत्वभोजकत्वनामकं व्यापारद्वयं कल्पयन्तश्च विभावादिभिः रसो भोज्य इत्याहुः। अभिनवगुप्तादयश्च व्यङ्ग्यमभिदधते। रससम्प्रदायमनुसरतामाचार्याणां मध्ये रससंख्याविषयेऽपि मतभेदः दृश्यते।

परन्तु अस्य तात्पर्यमेवं नास्ति यत् भरतमुनेः पूर्वं रसोपरि उत वा रसनिष्पत्त्योपरि विचारः नाभवत् रसोपरि विचारस्तु उपनिषत्काले एव प्रारम्भो जातः। यदा इदमुक्तमासीत् यत् 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽनन्दी भवति'। महर्षिव्यासेनाऽपि अग्निपुराणे उक्तमस्ति यत्- **'वाग्वैदग्धप्रधानेऽपि रस एवात्र जीवितम्'**[4]। नाट्यशास्त्रस्य षष्ठेऽध्याये 'नाट्यरसाः स्मृताः' इत्यभिख्यातमभिनवगुप्तभारत्यामभिनवगुप्तः वदति-

**नाट्यात्समुदायरूपाद्रसाः यदि वा नाट्यमेव रसाः।**
**रससमुदायो हि नाट्यम्, न नाट्य एव च रसाः काव्येऽपि॥**

रसस्य चर्चां कुर्वाणः आचार्यदण्डी स्वकाव्यादर्शे अलङ्कारार्थे रसं निपिञ्चितं करोति-

**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।**
**तथाप्यग्राम्यतैवैनं भारं वहति भूयसा।**[5]

यद्यपि दण्डी रसस्य कृते कवितासु महत्त्वपूर्णस्थानं न ददाति तथापि महाकाव्याय रसोऽनिवार्यं वर्तते।

**युक्तं लोकस्वभावेन रसैश्च विविधैः पृथक्।**[6]

आचार्यवामनः 'कान्तिः' नामकगुणस्वरूपप्रकरणे रसस्य स्पष्टतः उल्लेखं करोति- **''दीप्तरसत्वं कान्तिः।''**[7] एवं रससम्प्रदायस्य अनेके आचार्याः केचन प्रधानतया केचन गौणतया प्रवर्तनं कृतवन्तः। अर्थात् प्रकारान्तरेण सर्वे आचार्याः रससम्प्रदायं स्वीकुर्वन्ति।

**अलङ्कारसम्प्रदायः**- अस्ति प्रवर्तकः अलङ्कारसम्प्रदायस्य भामहाचार्यः। तस्य ग्रन्थव्याख्यातृभिः उद्भट-दण्डी-रुद्रटप्रभृतिभिश्च स्थिरतां प्रापितः। एतत्सम्प्रदायानुसारिणां मते अलङ्कारा एव काव्यात्मा। ते रसमपि स्वीकुर्वन्ति परञ्च प्रधानता न दीयते। तेषां मते काव्यस्य प्राणभूतजीवनाधायकतत्त्वमलङ्कारः एव वर्तते। अलङ्कारविहीनकाव्यकल्पना तथैव वर्तते यथा उष्णताविहीनः अग्निः यथा-

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती॥**[8]

आलङ्कारिकाः काव्ये अलङ्कारमेव प्रधानं मन्यते। ते रसस्यान्तर्भावः रसवदलङ्कारे कुर्वन्ति। रसवद्, प्रेय, ऊर्जस्वि, समाहितश्च चत्वारो रसवदलङ्काराः मन्यते। भामहः तथा आचार्यदण्डी द्वयोरेव मतेन रसवदलङ्कारे रसस्यान्तर्भावः कृतः-

**रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा।**[9]
**मधुरे रसवद्वाचि वस्तुन्यपि रसस्थितिः।**[10]

ऋग्वेदे एनमरङ्कृतिशब्देन व्यवह्रियते- **''का ते अस्त्यरङ्कृतिः सूक्तैः कदा नूनं ते मघवनदाशेम।''**[11] ऋग्वेदे उपमा, रूपकादि अलङ्काराणां प्रयोगः बहुत्र दृश्यते। यथा- **''मृगो न भीमः कुचरो गिरिशः।''**[12] **''स नः पितेव सूनवेऽग्ने सूपायनो भव।''**[13] **''श्वध्वनीन यो जिगीवांल्लक्षमारत।''**[14] इत्यादिषु उपमालङ्कारः तथा सूर्यदेवानां चक्षुरुच्यते- **''देवानां चक्षु सुभगा वहन्ती।''**[15] तथा च जीवात्मनि, परमात्मनि सुपर्णायाः आरोपः-

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्ननयोऽभिचाकशीति॥**[16]

इत्यादि बहूनि उदाहरणानि सन्त्यलङ्काराणाम्।

अलङ्कारसम्प्रदायस्य प्रवर्तकाः सर्वे आचार्याः रसस्य तथा तस्य वैशिष्ट्येन परिचिताः आसन् किन्तु ते काव्यसिद्धान्तं सर्वजनग्राह्यं कथं भवेद्? इति विचिन्त्य अलङ्कारान् मुख्यतत्त्वरूपेण प्रतिपादितवन्तः। यतोहि अलङ्काराः एवैकं तत्त्वमासीत् येन माध्यमेन काव्यसिद्धान्तान् सर्वग्राह्यं भवितुमशक्नोत्। अस्मिन् सन्दर्भे पी.वी. काणे महोदयस्य पङ्क्तयः द्रष्टव्याः सन्ति- ''These writers were well aware of the existence of rasa but they had not found out how to apply the theory to kavya in general. To them alankaras seemed to be the most important part in kavyas, so much so that they made rasas suordinate to alankaras and defined such figures as रसवत्.''

**रीतिसम्प्रदायः**- कालक्रमे अलङ्कारसम्प्रदायानन्तरं रीतिसम्प्रदायस्य प्रवर्तकः आचार्यवामनः। तन्मते काव्यस्यात्मा रीतिः। अस्या विवेचने "विशिष्टपदरचना रीतिः" सेयं विशिष्टपदरचना गुणेभ्यः आयाति। तेन विशेषो गुणात्मा अर्थात् रचनायां माधुर्यादिगुणानां समावेशः एव तस्य विशेषता वर्तते असौ विशेषता एव रीतिः। एवं गुणरीतेः अत्यन्त घनिष्ठसम्बन्धः वर्तते, अत एव रीतिसम्प्रदायो गुणसम्प्रदायात्मना परिणमते।

आचार्यदण्डिना रीतिशब्दस्य प्रयोगः क्वापि न कृतः। अपितु अस्या कृते तेन 'मार्ग' शब्दः व्यवहृयते। दण्डिना वैदर्भमार्गस्य तथा गौडीयमार्गस्य प्रतिपादनं कृतं वर्तते। गौडीयमार्गस्य प्रयोगं पौरस्त्याः एवं वैदर्भमार्गस्य प्रयोगं दाक्षिणात्याः कुर्वन्ति- "He expressly says that there are several dictions distinguished from each other by nice distinctions, but that he will describe only two, वैदर्भ. and गौडीय. because the points of distinction between the two are very clear. It is interesting two note that he referes to गौडीयमार्ग or पद्धति as पौरस्त्य add employs the word डम्बर found in bana as regards gavds." (History of Sanskrit Poetics, P.V. Kane, pg.-379)। दण्डिनः अस्य मार्गस्य प्रयोगः आचार्यकुन्तकेनाऽपि कृतः तथा सुकुमार, विचित्र एवं मध्यममार्गाणां प्रतिपादनं कृतम्। किन्तु कुन्तकस्य मार्गः दण्डिमार्गात् भिन्नः वर्तते। दण्डी मार्गं वामनः रीतिं अनुसरति। किञ्च कुन्तकस्य मार्गः रसालङ्काराधारितः वर्तते। रसप्रधानरचना सुकुमारमार्गे तथा च अलङ्कारप्रधानरचना विचित्रमार्गः वर्तते। द्वयोः मध्यस्था रचना मध्यमार्गः मन्यते। आचार्यभोजराजेन मार्गरीतिमध्ये कश्चिद् नान्तरः मन्यते। तस्य कथनं वर्तते यत्-

**वैदर्भाकृतः पन्थाः काव्ये मार्ग इति स्मृतः।**
**रीङ्गताविति धातोः सा व्युत्पत्या रीतिरुच्यते।।**[16]

**वक्रोक्तिसम्प्रदायः**- रीतिसम्प्रदायानन्तरं वक्रोक्तिसम्प्रदायस्य कालक्रमः आगच्छति। अस्य प्रवर्तकाचार्यः कुन्तकः 'वक्रोक्तिः काव्यजीवितम्' इत्युक्तवान्। आचार्यभामहेनापि वक्रोक्तेः मूल्य स्वीकृतं वर्तते-

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[17]

दण्डिनाऽपि- **"भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्"**[18] इत्युक्त्वा वक्रोक्तेः महत्त्वं प्रदर्शितं वर्तते। आचार्याभिनवगुप्तः लोकोत्तररूपेण अवस्थानमेव शब्दार्थस्य वक्रतां स्वीकरोति- **"शब्दस्य हि वक्रता अभिधेयस्य वक्रता लोकोत्तीर्णेन रूपेणावस्थानम्।"**[19] वक्रोक्तिजीवितकाराचार्यस्य कुन्तकस्य वक्रोक्तिसन्दर्भे भामहात् वैमत्यं नास्ति। तस्य पूर्णतया भामहेन सह ऐकमत्यं दृश्यते। तथापि आचार्यभामहः अग्रे काव्यजीवितस्थाने प्रतिष्ठितं करोति। आचार्यकुन्तकः वक्रोक्तिं वैदग्ध्यभङ्गीभणितीतिरूपेण परिभाषितं कृतवान्- **"वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।"**[20] अस्य व्याख्या स स्वयमेव करोति यत्- **"वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणो विचित्रैवाभिधा वैदग्ध्यं कविकौशलं तस्य भङ्गी विच्छित्तिः।"**[21] आचार्यकुन्तकः दण्डीमनुसरन्तं काव्यं स्वभावोक्ति तथा अतिशयोक्तिरूपे वर्गीकरोति। अतिशयोक्तिरेव वक्रोक्तिः। कुन्तककृतवक्रोक्तेः परिभाषायाः मूलाधारः दण्डीकृत 'अवन्तिसुन्दरी' वर्तते। "विदग्धभणितिभङ्गीनिवेद्यं वस्तुनो रूपं न नियत्स्वभावः आचार्यवामनः वक्रोक्तिं परिभाषयति- "सादृश्याल्लक्षणा वक्रोक्तिः।"[22]

**ध्वनिसम्प्रदायः**- कालक्रमे ध्वनिसम्प्रदायस्योदयः अभूत्। अस्य प्रवर्तकः आचार्यानन्दवर्धनः 'काव्यस्यात्मा ध्वनिः' इत्युक्तवान्। ध्वनेरावश्यकतामनुभूय ध्वनिसम्प्रदायः प्रवर्तितः। आनन्दवर्धनात् पूर्वं ध्वनेरभाववादः, लक्षणस्वरूपतावादः, अनिर्वाच्यतावादश्च प्रथते स्म। यथा-

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद्वाचां स्थितिमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्।।**[23]

ध्वनिवादः सर्वाधिकव्यवस्थितरूपेण प्रचरितः। अतः स्पष्टं भवति यत् सर्वेषां संज्ञाने ध्वनितत्त्वमासीत्। अन्यथा विरोधः न सम्भवति। ध्वनिसन्दर्भे तु सर्वप्रथमं वैयाकरणानां मतं वर्तते- 'प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम्।' वैयाकरणैः श्रूयमाणशब्दस्य कृते ध्वनिशब्दस्य व्यवहारः कृतः आसीत्। तत्र तु स्फोटस्य प्राधान्यं वर्तते। अत्रैव उन्मेषं प्राप्य आचार्यानन्दवर्धनः ध्वनिस्वरूपप्रतिपादने सफलो जातः। ध्वनेः लक्षणमेवं कृतम-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[24]

यद्यपि ध्वनेः अस्मिन् लक्षणे काव्यविशेषो ध्वनिरुच्यते। किन्तु ध्वन्यालोकपर्यालोचनेन ज्ञातं भवति यत् ध्वनेः अर्थः केवलं काव्यमेव न अपितु व्यापकं वर्तते- 1. ध्वन्यतेऽस्मिन्निति ध्वनिः -काव्यम्, 2. ध्वन्यतेऽसाविति ध्वनिः -व्यङ्ग्यार्थः, 3. ध्वन्यतेऽनयेति ध्वनिः -व्यञ्जनम्, 4. ध्वन्यतेऽनेनेति ध्वनिः -व्यञ्जकशब्दः, 5. ध्वन्यतेऽनेनेति ध्वनिः- व्यञ्जकार्थः। अनया व्युत्पत्या उपर्युक्तार्थेषु ध्वनिव्यवहारः भवति। तेष्वपि व्यङ्ग्यार्थः यः रमणीयः भवति, सः कवीनां वाणीषु शब्दार्थादिपृथक् अङ्गनासु लावण्यमिव प्रतीयते-

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥**[25]

**औचित्यसम्प्रदायः**- अयं सर्वसम्प्रदायादृतः कस्यापि मतस्याविरोधी च सम्प्रदायः क्षेमेन्द्रेण प्रवर्तितः। काव्यस्य सर्वेष्वपि अङ्गेष्वौचित्यं नितान्तमपेक्षितम्। औचित्यस्य तात्पर्यमस्ति उचितभावः यः यथाऽस्ति तथैव तस्य वर्णनमुचितं भवति।

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते॥**[26]

औचित्यस्य सर्वातिशायिनीमहत्तायाः प्रतिपादनं क्षेमेन्द्रः एव कृतवानस्ति। औचित्यविचारचर्चा लिखित्वा औचित्यरूपकाव्यतत्त्वस्य व्यापकरूपेण प्रयोगः स्पष्टीकृतः। औचित्यं रससिद्धकाव्यस्य जीवितमुक्तं वर्तते-

**औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।**[27]

क्षेमेन्द्रस्य दृढधारणा वर्तते यत् औचित्यं विना कश्चिदलङ्कारः गुणः वा काव्ये रुच्युत्पादनं न कर्तुं शक्यते-

**कण्ठे मेखलया नितम्बफलके तारेण हारेण वा,**
**पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।**
**शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-**
**मौचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणाः॥**[28]

आचार्यभरतमुनेः नाट्यशास्त्रेऽपि सम्प्रदायस्यास्य बीजं दृश्यते-

**अदेशजो हि वेषस्तु न शोभां जनयिष्यति।**
**मेखलोरसि बन्धे तु हासस्यैवोपजायते॥**[29]

**सन्दर्भसङ्केतः-**


1. वक्रोक्तिजीवितम्, 1/17.
2. वक्रोक्तिजीवितम्, 1/7.
3. नाट्यशास्त्रम्।
4. अग्निपुराणम्।
5. काव्यादर्शः, 1/62.
6. काव्यादर्शः, 1/21.
7. काव्यालङ्कारसूत्रवृत्तिः, 3/2/24.
8. चन्द्रालोकः।
9. भामहः, काव्यालङ्कारः 3/6.
10. काव्यादर्शः, 3/51.
11. ऋग्वेदः, 7/29/3.
12. ऋग्वेदः, विष्णुसूक्तः, 1/154/2.
13. ऋग्वेदः, अग्निसूक्तः, 1/1/9.
14. ऋग्वेदः, इन्द्रसूक्तः, 2/12/4.
15. ऋग्वेदः, उषस्सूक्तः, 7/77/3.
16. सरस्वतीकण्ठाभरणम्, 3/52.
17. भामहकाव्यालङ्कारः, 2/85.
18. काव्यादर्शः, 2/363.
19. ध्वन्यालोकलोचनः, पृ.सं.-260.
20. वक्रोक्तिजीवितम्।
21. वक्रोक्तिजीवितम्, 1/11.
22. ध्वन्यालोकः, 1.
23. ध्वन्यालोकः, 1/13.
24. ध्वन्यालोकः।
25. ध्वन्यालोकः।
26. औचित्यविचारचर्चा।
27. औचित्यविचारचर्चा।
28. औचित्यविचारचर्चा, 7, पृ.सं.-12.
29. नाट्यशास्त्रम्।


■ **पत्रसङ्केतः- शोधच्छात्रः (साहित्यविभागः), राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.), लखनऊपरिसरः, लखनऊ।**

# भारतीयसमाजवादस्य शलाकापुरुषः

■ प्रो. कमलेशझाः

एशियामहादेशः तत्रापि विशिष्य भारतो देशः विंशशताब्द्यां किमपि विशिष्टं परिवर्तनमन्वभूत्। महतां राष्ट्रभक्तानां नेतृत्वे समष्टिहितमुद्दिश्य प्रवृत्तैः जनसाधारणैः उत्साहमयाः सङ्घटनाः विहिताः, याभिः नैका यातनाः त्रोटिताः स्वराजसंरचनाश्चायोजिताः। जनाः राष्ट्रियभावनया संवृत्ताः, जनतास्वातन्त्र्यं संस्थापितं, समाजवादश्चाङ्कुरितः।

एकतो मार्क्स, लेनिन, रोजा लक्जेमबर्ग, माओप्रभृतिभिः वर्गविशेषाभिधानधृतैः जनसङ्घठनादिभिः क्रान्तिमयमान्दोलनमकारि। अपरतश्च मोहनदासकरमचन्दगान्धि-चिन्तनप्रधानाभ्याम् अहिंसा-सत्याग्रहचक्राभ्यां सञ्चालितो जनजागरणरथः प्रावर्तत। सेवा-स्वदेश-समुद्घोषसंवलितस्य अस्य रथस्य श्रीगणेशो गान्धिमहोदयेन यद् विहितः तस्य विस्तृत आयामे 1906-1947 ईशवीयवर्षेषु हिन्दस्वराज-असहयोगान्दोलन-'भारत छोड़ो' आन्दोलन-प्रभृतिभिर्नैकैः प्रकल्पैः रचनात्मिकां सक्रियतां, सात्त्विकीं राजनीतिं चान्वभवन् सुजनाः।

हिंसाविरुद्धाम् अहिंसाम्, धर्मविशेषविद्वेषविरुद्धं सर्वधर्मसमभावम्, अन्यायविरुद्धं श्रेष्ठतमं न्यायं च स्वसमयोचितं प्रतिपालयतो गान्धिभावस्य समादरः चिरं विश्वस्मिन् विश्वे आदर्शतया स्थास्यति। स्वातन्त्र्यादनन्तरं गान्धिविचारप्रवाहस्य त्रयः उपप्रवाहाः प्रस्फुरिताः अभूवन्-

1. राजसत्ताकेन्द्रितो नेहरूनेतृत्वमाश्रितः सर्वकारीयो गान्धिवादः।

2. विनोबाभावेमार्गदर्शने भूदानसंज्ञकमभियानं सञ्चालयतां सर्वोदयिनाम् विभिन्नैः गान्धी-आश्रमैः सात्त्विकं जीवनम् आध्यात्मिकं चिन्तनं चाधृत्य सम्प्रवृत्तः ज्ञानमार्गी सम्प्रदायः।

3. राजसत्तायाः समाजव्यवस्थायाश्च विकृतायाः अन्यायशतस्य समूहालम्बनं प्रतिरोधिनो डॉ. लोहियामहाशयस्य नेतृत्वे सत्याग्रही समाजवादसम्प्रदायः।

तृतीयस्य उपप्रवाहस्य किमपि कमनीयम् औचित्यमिदानीमुपचिन्वन्ति जनाः।

स्वातन्त्र्यसङ्ग्रामे गान्धिमहोदयस्य स्नेहसिक्तं मार्गदर्शनमवलम्ब्य 'कांग्रेससमाजवादीपार्टी' विशेषस्य सङ्घर्षपरायणानां राष्ट्रानुरागिणां सहयोगं चावाप्य कृषक-श्रमिक-स्नातक-समस्यानां समाधानाय डॉ. लोहियामहाशयेन सत्याग्रहशक्तिसञ्चयस्य तदुपयोगक्षमतायाश्च विकासो विहितः।

एष महाशयः पूँजीवाद-मार्क्सवादयोः यूरोपसमनियतयोः प्रत्यभिज्ञान- द्वारा 1942 ईसवीयसमकालं 'भारत छोड़ो' आन्दोलने श्रीजयप्रकाश- साचिव्येन संवर्धितजनशक्तेः मार्गदर्शनं साफल्येन विहितवान्।

नेपाले, गोवामध्ये तिब्बतप्रदेशे च सामयिकसमस्यानां प्रौढ्या समाधानायाग्रेसरः यातनाशतमनुभूयापि डॉ. लोहियामहाशयः क्रान्तिसंवर्धनेन उत्साहप्रवर्तनेन साफल्याधिगमेन च देशस्य विदेशस्य च प्रतिकोणं विश्रुतिं सम्प्रपेदे। स्वतन्त्रतासेनानीनां मध्ये वयसा कनीयसोऽप्यस्य दृढम् अन्यायविरोधिनो नायकाग्रणीत्वं समपद्यत।

यस्य राजनैतिक्याः प्रेरणायाः स्रोतोगिरिः गान्धीमहोदयः, तस्यास्य लोहियामहाशयस्य मार्क्सं प्रति ऋषिबुद्धिः, गान्धिनम्प्रति तु महामानवदृष्टिः समैधत। अस्य नेतृत्वे भारतीयसमाजवादिदर्शनं समस्यानां समाधानाय प्रवृत्तं तासु अभ्यर्हिततां भजन्ते-हिन्दीभाषां स्त्रीजातिं चाधृत्य असमानता, वैश्विकता, कृषकश्रमिकविशोषणं चेति। विविधानां

तत्कालोचितानां समस्यानां निराकरणद्वारा अनेन नवं स्वस्थं हृद्यं भारतं निर्मातुं दरिद्रनारायणतोषं विधातुं च विनिर्मितेषु कार्यक्रमेषु मुख्याः त्रयः सन्ति-

1. निराशा के कर्त्तव्य- इत्यस्य दर्शनम्
2. इतिहासचक्रसिद्धान्तः
3. सप्रक्रान्तयश्चेति।

औचितीमाधारीकृत्य सृष्टेः व्यापकीभूतान् नियमाँश्च मनसि निधाय यतोऽनेन मार्क्सविरुद्धस्य इतिहासचक्रस्य सङ्कल्पना विहिता, तत एवानेनामन्यत भारतस्य स्वर्णयुगं स्वर्गतुल्यम्, ब्रिटिशराज्यं तु नारकीययातनाशतसङ्कुलम्। विभिन्नपाश्चात्यदर्शनानां, फ्रांसराजनीतिज्ञानां, ब्रिटिश-अर्थशास्त्रिणां च मतान्याधृत्य प्रवृत्तं किल मार्क्ससम्मतं विचारदर्शनम्। परम् भारतसर्वस्वभूतस्य लोहियामहाशयस्य तदीयम् पूर्णतया भौतिकं विचारदर्शनम् अश्रद्धेयमभूत्। भारतीयविचारस्य चिरकालसम्प्रवृत्तस्य श्रद्धायुक्त्युपेतस्य आध्यात्मिकप्राधान्यमुपगतस्य शिरोधार्यतानेन सहर्षमङ्गीकृता। एष महापुरुषः राज्यसत्तायाः चतुर्धा विभाजनं पोषयति स्म-

1. ग्रामस्तरीया, 2. मण्डलस्तरीया, 3. राज्यस्तरीया, 4. केन्द्रस्तरीया चेति।

स्त्री-शूद्र-हरिजन-जनजातिप्रभृतिषु कुतश्चित् कथञ्चिद् वा आयातितां सामाजिकीं विषमताम् अन्ताराष्ट्रियां वा तादृशीमेष युवा सुदृढं विमर्शी समूलमुन्मूलयितुमियेष सम्मिल्य चाकरोद् विविधां चेष्टाम्। अहिंसायाम् आस्थावानेष मानवताव्यापिनीं संवेदनामात्मसाद् व्यधात्। इदन्तु नितरां ध्येयं यदस्य क्रान्तिपुरुषस्य विचारः अन्यायमसह्यं व्यरुणन्नतु कञ्चिद् धर्मविशेषं, सम्प्रदायविशेषं जातिविशेषं वा।

पीडितजनबन्धोः श्रमधनवितरणविवेचनपटोः शोषितजनहृदयस्पन्दनायितस्य शोषकपातकमुद्वमनप्रति- फलितं निर्वासनादियातनादिकमुपभुञ्जतो मार्क्सविचारकस्य यश्च सिद्धान्तः एकतां, मानवतां राष्ट्रियतां चाधृत्य शास्रतात्पर्याश्रितः प्राकाशि धीमतां बुद्धिः श्रमिकाणां श्रमश्च राष्ट्रकोषं पूरयेद्, बलवति राष्ट्रे न कस्यचन व्यक्तिविशेषस्य समृद्धिर्वा दैन्यं वास्थेयम् - इति।

वैश्विकप्रस्तावानां विवेचनायामनेन सप्तसूत्री प्रकल्पिता। तद्यथा-

1. स्त्रीपुंसोः समानताधिकारः।
2. रङ्गभेदं पुरस्कृत्य प्रसृतायाः असमानताया निवारिणी व्यवस्था।
3. सामाजिक्याः जात्याधारिताया वा घृणितायाः असमानतायाः रोधकावसरसमर्थनम्।
4. उपनिवेशवादस्य विदेशिशासनस्य च विरोधी गतिविधिः।
5. यथासम्भवम् आर्थिकं साम्यम्।
6. व्यक्तिगतगोपनीयता लोकतन्त्राधिकारश्च।
7. अस्त्रविरोधी आतङ्कविरोधी च नागरिकस्यावज्ञापक्षः।

अयं विश्वसिति स्म मानवात्मनां परमां महत्ताम्। यत्किल जातिवादप्रथाविरुद्धा क्रान्तिरेनं प्रेरयति स्म तस्य तूद्देश्यं भारते नवजीवनस्य वास्तविकी प्रतिष्ठैव, नान्यत्किञ्चन। भारतीयजनानाम् ओजस्वि हृदयं यद् वैदेशिकैराहतं तद् दाढर्यनिष्पत्तये युगान्तरप्रवर्तकेनानेन सर्वकारमध्ये विद्यालयेषु विश्वविद्यालयेषु च भारतीयभाषाणां प्रयोगाय सङ्घर्षो विहितः। विश्वसमुदाये भारतस्य समानसदस्यताधिकारावाप्तये समाजे मौलिकपरिवर्तनस्य पुनः संयोजनस्य च समर्थनमनेन विहितमभूत्।

23 मार्च, 1910 ईसवीयसमकालं अकबरपुर-फैजाबादमध्ये लब्धजन्मनोऽस्य स्नातकोत्तरीयमध्ययनं भारते कोलकातानगरे संवृत्तम्। तत्समकालमेव 1929ई. वर्षे पी-एच्.डी. उपाधिमवाप्य बाल्ये प्राप्तसंस्कृताध्ययनस्य सुदृढा

समास्था जागर्ति स्म भारतीयं सांस्कृतिकमैतिह्यं प्रति। अत एव 1933ई. वर्षे स्वदेशं प्रतिनिवृत्तोऽसौ वाग्मी इतिहासस्य मार्क्सवादिनीं व्याख्यां तिरस्कृत्य राष्ट्रानुरूपं समाजवादं प्रतिष्ठापयति स्म, यदीय-सभ्यतायां सामाजिकम्, आर्थिकम्, राजनीतिकं शोषणं च सर्वथा नि:सारितमभूत्। सभ्यता चैषा इतिहासस्य, अर्थशास्त्रस्य, राजनीतेः, दर्शनस्य, सामाजिकसङ्गठनस्य च व्यापकं क्षेत्रं निरमात्।

17 मई, 1934ई. वर्षे पाटलिपुत्रे आचार्यनरेन्द्रदेवस्य आध्यक्ष्ये भारतस्य समाजवादिनां सम्मेलनं यदायोज्यत, तत्र सोशलिस्ट पार्टी-स्थापना-निर्णयो गृहीतः। तदर्थं निर्मितायां सङ्गठनसमितौ चास्य पूर्वं सदस्यता पश्चात्तु कार्यकारिणीसदस्यता समर्थिता। तत्पश्चाद् अस्य कांग्रेससोशलिस्टसाप्ताहिक-सम्पादकदायित्व- माविरकारि।

नायमसौ स्वकृते नेतृत्वं, विशिष्टं पदं सत्तासुखं वा अभ्यलषत्। कदाचिदसौ स्वमुखेनैवावोचत्-अहं वाञ्छामि श्रीजयप्रकाशनारायणं भारतस्य प्रधानमन्त्रि-पदे समासीनं यत्राधारो भवेत् जनताविश्वासः।

1963ई. वर्षे उपचुनावं विजित्य लोकसभां प्रविष्टोऽसौ तत्र हिन्दीभाषायाः कृते सम्मानमलम्भयत्।

21 अगस्त, 1963 दिनाङ्के आचार्यकृपलानीद्वारा कृते अविश्वासप्रस्तावे प्रवृत्ते च तर्कसंवादे लोहियामहाशयेन 'तीन आने बनाम पन्द्रह आने' - सम्बद्धस्य विषयस्य रहस्योद्घाटनं विहितम्।

समाजवादिन्याः पत्रिकायाः समृद्धिक्रमे अगस्त 1956ई. वर्षे 'मैनकाइन्ड'-अन्ताराष्ट्रियस्य अंग्रेजी-मासिकस्य प्रकाशनं स्वप्रधानसम्पादकतयानेन समारब्धम्।

समाजवादिनी या नवीना संस्कृतिः, तस्याः प्रचाराय 'जन'नाम्नी हिन्दीमासिकी प्रारब्धा, तत्पश्चाद् विविधेषु प्रान्तेषु समाजवादिनां साप्ताहिक-मासिक-त्रैमासिकानां पत्राणां प्रकाशनमारब्धम्।

गच्छता कालेन हिन्दी, अंग्रेजी, उर्दू प्रभृतिषु विविधासु प्रान्तभाषासु च भारतीयसमाजवादस्य विचाराणां कर्मसिद्धान्तानां च प्रकाशनं भूयसा आरब्धम्।

अथ साहित्य-संस्कृतिविषयिणी मासिकी 'कल्पना' हैदराबादतः प्रकाशितुमारेभे। नैतावदेव, लघुकायानां बहूनां पुस्तकानां क्रान्तिसम्बद्ध-विषयानधिकृत्य रचना स्वयमनेन युगान्तरकारिणी विहिता।

भारतराष्ट्रम्, सांस्कृतिकसन्दर्भे अमेरिकां यूरोपं वा न गणयति। स्मृतिसम्पन्ने अस्मिन् राष्ट्रे श्रुतिस्मृतिशास्त्राणां ज्ञानभण्डारस्यात्मसात्करणेन संस्कृतिरेतदीया भारतीयान् तद्द्वारा अन्यांश्च सर्वान् अतिशयितान् विधत्ते।

धर्मस्य नीतिमयी करुणामयी च भूमिका व्यक्तित्वनिर्माणे अनितरसाधारणं वैशिष्ट्यं बिभर्तीति भारते शास्त्रप्रमाणस्य इतरप्रमाणापेक्षया बलवत्तरं प्रामाण्यं समर्थितमेतेन लोहियाजीमहानुभावेनेति भारतीयानां विचारसरणि-प्रगतिः सदैव अभिनन्दनीया भातीति श्लोकव्यक्तिमाध्यमेन भारतराष्ट्रं संस्तौमि-

**अतः श्रीभारते वर्षे सर्वदेश-शिरोमणौ।**
**प्रामाण्यमागमस्यास्ति सर्वतो बलवत्तरम्।।**

■ पत्रसङ्केतः- धर्मागमविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालयः, वाराणसी-05

# अलिविलासिसंलापस्य पञ्चमशतकेऽलङ्कारप्रयोगः

■ प्रो. रमाकान्तपाण्डेयः

अलिविलासिसंलापो नाम सर्वतन्त्रस्वतन्त्रैः श्रीमद्भिर्महामहोपाध्याय-प्रभृतिविविधोपाधिसमलङ्कृतैः काव्येषु शास्त्रेषु च सममेव प्रागल्भ्यं धारयद्भिः पण्डितप्रवरैर्गङ्गाधरशास्त्रिचरणैः सहस्रपद्यैर्नवशतकेषु विविधदार्शनिक-सिद्धान्तबुबोधयिषया प्रणीतमपूर्वं शास्त्रकाव्यम्। उपनिषत्सिद्धान्तगर्भेऽस्मिन् काव्ये नायकायते कश्चन अलिः। अयं काव्यनायको न साधारणो जन्तुविशेषोऽपि तु अविद्यावृतो जीवः सच्चिदानन्दतत्त्वज्ञो वीतरागी परमहंसः, गुरुः साक्षाद् ब्रह्मरूपो वा विद्यते। 'द्वा सुपर्णा सयुजा सखाया' इत्यादिमन्त्रव्याजेन द्वैततत्त्वमाध्यमेनाऽद्वैतस्य या विच्छित्तिरुपनिषत्सु समुपवर्णिता, तामेवाश्रित्य काव्यमिदं प्रणीतमिति स्फुटं प्रतिभाति। संस्कृतसाहित्ये अलिर्बहुत्र वर्णितो दृश्यते किन्तु तस्य यत्स्वरूपमिह कविनाऽऽविष्कृतं तदपूर्वमेव।

'अल' भूषणपर्याप्तिवारणेषु (भ्वा.प.से.) इति धातोः 'सर्वधातुभ्य इन्' (उ. ४.११२) इति सूत्रेण इप्रत्ययेऽलिरिति शब्दो निष्पद्यते। यद्यपि नाऽत्र धातोरस्य गत्यर्थकत्वं निगदितं तथापि धातूनामनेकार्थत्वनियमादस्य गत्यर्थकत्वकल्पनेऽपि न कापि क्षतिः। अतः 'अलति मकरन्दलोभादितस्ततो लतासु, क्षुच्छान्त्यै वैषयिकसुखलाभाय संसारे जन्ममरणपारवश्येन वा भ्रमति, उपहितचैतन्यतया जीवरूपेणेश्वररूपेण वा प्रकाशते, अविद्यां निवारयति तत्त्वज्ञानेन च संसारिणं भूषयति, जडजीवेश्वररूपेण ब्रह्माण्डं पर्याप्नोति व्याप्नोति वेत्यलिः' इति काव्यनायकस्यास्याऽन्वर्थतायै व्युत्पाद्यतेऽलिशब्दः। अलिरयं काव्येऽस्मिन् क्वचित्सामान्यभ्रमररूपेण, क्वचिज्जीवरूपेण, क्वचित्परमहंसरूपेण, क्वचिच्च सच्चिदानन्दपरमात्मरूपेण चित्रितो विद्यते। चतुर्थशतकान्तेऽयं गुरुरूपेणाऽपि निरूपितः। प्रथमसर्गान्ते सम्पादितपरमात्मरूपहंससाक्षात्कारोऽयं संसारस्य निस्सारतां वेत्ति। जानात्ययं शास्त्रतत्त्वं, विश्वसिति परमसुखे, समुपदिशति ब्रह्मोपासनां, निर्दिशति संसारस्याऽसारतां, निराकरोति चार्वाकमतं, खण्डयति चतुर्विधबौद्धसम्प्रदायम् ,अपाकरोति अर्हन्नव्यमतं, स्थापयति च वेदान्तसिद्धान्तमित्यलिरयं कश्चन अपूर्व एव महाकाव्यनायकोऽत्र कल्पितः।

अलेः प्रतिपक्षितयाऽत्र कल्पितो विलासी विद्यते कश्चन सांसारिकभोगलोलुपो नास्तिकराजः। अलिं मधुकरीवृत्तये वृक्षाद् वृक्षं लताया लतां वा गच्छन्तं दृष्ट्वा स तं कामिनं मत्वा प्रतारयति। श्रुततद्वचनोऽलिर्विविधैस्तर्कैस्तं प्रबोधयति स्वीयं वास्तविकं स्वरूपं च वक्ति किन्तु तद्वचनेषु विश्वासहीनः स क्रमशः चार्वाकरूपेण बौद्धरूपेण जैनरूपेण च प्रकटीभूय अलिसिद्धान्तं निराकरोति। अलिश्च शाङ्करवेदान्तमाश्रित्य वारत्रयं तस्मिन् जयं प्राप्नोति। अन्ते स विलासी शिष्यीभूय तत्पादयोः पतति। अलिश्च तं मोक्षमार्गं निर्दिशतीति काव्यस्यास्य रचनाप्रयोजनं निर्दिशता कविना प्रावाचि-

**वैषयिकब्रह्मविदोः पूर्वोत्तरपक्षशिक्षणे दाक्ष्यम्।**<br>
**व्यक्त्या विवेक्तुकामैर्दृश्योऽसावलिविलासिसंलापः।।**

काव्यान्ते च-

**येऽलङ्कारगभीरचित्रमधुरोपन्यासशुश्रूषवो**<br>
**ज्ञातुं भारतविश्रुतामरपुरीतीर्थानि वाञ्छन्ति ये।**<br>
**ये च द्वादशदर्शनीस्थविषयव्युत्पत्तिजातादराः**<br>
**संलापोऽलिविलासिनोर्मुहुरयं तैरास्थयाऽऽलोच्यताम्।।**

इत्थं काव्यमिदं नानाशास्त्रतत्त्वानामवश्यज्ञातव्यतथ्यानां कोशः। सर्वाण्यपि दर्शनानि पूर्वपक्षतयोपन्यस्य निष्कर्षतया कविरन्तेऽद्वैतवेदान्तमवतारयति। प्रतिशतकं वेदान्तविच्छित्तिरत्र विलोक्यते। 'तत्त्वमसी'ति महावाक्यमेवेह काव्यस्यास्य प्रणयनव्याजेन व्याख्यायते महाकविना गङ्गाधरशास्त्रिणा। वेदान्ते तत्पदेन ब्रह्मनिर्देशस्त्वम्पदेन चाऽचल्पज्ञत्वादिविशिष्टजीवस्य। असीति पदं च तयोरभेदापादकम्। इह पुनस्तत्पदबोध्योऽलिः त्वम्पदार्थो विलासी तयोरभेदापादकासिपदार्थस्थानीय इत्येतेषामैक्योक्तिः।

दार्शनिकविषयानाश्रित्य विरचिते कथाविहीनेऽस्मिन् काव्ये स्वप्रतिभया अलिविलसिनोः संवादमुद्भाव्य कविरुद्भावयति कथाचारुतामिति नूनं प्रबन्धोऽयं रत्नायते संस्कृतसाहित्यरत्नाकरे।

अलिविलासिसंलापोऽयं महाकाव्यलक्षणोपेत: प्रबन्ध:। किन्त्वौदार्येण कविनेदं प्रतिसर्गमन्ते खण्डकाव्यरूपेण निरदेशि। मन्मते तु महाकाव्यत्वमेवाऽस्य। शान्तोऽत्राऽङ्गीरस:। प्रकृतिवर्णनादीनि महाकाव्योपयोगितत्त्वानि सन्तीह पदे पदे गुम्फितानीति काव्यमिदं महाकाव्यरचनाया: कश्चन अभिनवं मानदण्डं प्रस्तौतीति सुधीभिरस्य महाकाव्यत्वमवश्यमेव स्वीकरिष्यत इति मे धी:। काव्यस्याऽस्य विद्यावतीसुतरमाकान्त-प्रणीतया गङ्गाख्यटीकया सनाथित: प्रथमो नास्तिकदर्शनप्रतिपादनपरो भाग: (१-४ शतकम्) राष्ट्रियसंस्कृतसंस्थानात् २०१२ तमे क्राईष्टाब्दे प्रकाशित:। सम्प्रति द्वितीयो भाग: (५-९ शतकानि) प्रकाशनाय सिद्धोऽस्ति।

काव्यस्यास्य पञ्चमे शतके तीर्थयात्रावर्णनमिषेण कुवलयानन्दोक्ताऽलङ्काराणां मनोहारी प्रयोगो विहित: महाकविना। तत्सर्वं विद्यावतीसुतेन मया रमाकान्तपाण्डेयेन स्वोपज्ञायां गङ्गाख्यायां टीकायां वैशद्येन विवृतमिति विदुषां मनोविनोदाय कानिचित् पद्यानि गङ्गाटीकासनाथितानीह प्रस्तूयन्ते -

**ततो गुरुरिवादृत: पितृवदुद्यतो ऽनुग्रहे**
**प्रियोक्तिषु सखा यथा सुतवदत्र वाञ्छन् सुखम्।**
**अलि: सुमसमै: पदै: पथि विलासिनं रञ्जयन्**
**निनाय शनकै: श्रमं परिहरन् नदीं गोमतीम्।।१।।**

**गङ्गाटीका**- पूर्वार्द्धे चार्वाक-बौद्ध-जैनादिनास्तिकसिद्धान्तान् सर्वथा निराकृत्य अलि: विलासिनि आस्तिकबुद्धिमुदपादयत्। शिष्यभावं गतस्य तस्य विलासिनो मन:शुद्ध्यर्थमलिस्तं तीर्थेषु भ्रमयति। तत्तीर्थभ्रमणवर्णनमिषेण कुवलयानन्दोक्ता-लङ्कारप्रतिपिपादयिषया वक्ति - **तत इति**- तत: नास्तिकमतनिस्सारताज्ञानानन्तरं पूर्णकरुणमलिशरणं प्रपन्नं विलासिनं तीर्थयात्रासमुत्सुकं कृत्वा। गुरु: इव आदृत:, अलेरुपदेशेन नास्तिकबुद्धिविनाशात् परं लब्धसन्मतिविलासिना गुरुरिव वन्दितोऽलि:। श्रद्धया लभते ज्ञानमिति परम्परामनुपालयता विलासिना गुरु: इव समादृत: अलि: काव्यनायक:। 'गुरुरिवादृत' इत्यत्र 'इवेन सह समासो विभक्त्यलोपश्च' इत्यनेन समासात् विभक्त्यलोपाच्च समासगता, इवशब्दस्य सादृश्यवाचकत्वात् श्रवणमात्रेणैव सादृश्यरूपोपमाया बोधेन श्रौती च पूर्णोपमा। अनुग्रहे कृपायां पालने पोषणे रक्षणे हितसाधने च पितृवत् पित्रा तुल्य:, तेन तुल्यं क्रिया चेद्वति: (पा.सू. ५.१.११५) इत्यनेन वति:। वतेस्तद्धितप्रत्ययत्वात् तद्धितगता, वतिप्रत्ययबोध्यतुल्यरूपार्थबोधात् परं सादृश्यरूपोपमाया प्रतीते: आर्थी पूर्णोपमेयम्। प्रियोक्तिषु प्रियभाषणेषु सखा मित्रं यथा। इयं वाक्यगता श्रौती। सुतवत् अत्र, सुते इव अत्र विलासिनि उपमेये सुखं वाञ्छन्। पिता यथा सुते सुखं कामयते तद्वत् विलासिनि सुखं कल्याणपरम्परां कामयमान:। तद्धितगता श्रौती पूर्णा। सुमसमै: पुष्पसदृशै: सुकोमलै:। 'स्त्रिय: सुमनस: पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमर:। पदै: शास्त्रान्वितै: हितसाधकैश्च वचनै:। पदैरित्यत्र बहुवचननिर्देशाद् वाक्यैरित्यर्थ:। पथि मार्गे रञ्जयन् मोदं दिशन्। शनकै: श्रमं मार्गगतं बुद्धिगतं च क्लमं परिहरन् दूरीकुर्वन् स अलि: विलासिनं तं गोमतीं नदीं निनाय प्रापयामास। तीर्थयात्राप्रारम्भे स्नानशुद्ध्यर्थं प्रथमं गोमतीं नदीं प्रापयत्। सेयं गोमती रामायणमहाभारतपुराणेषु सुतीर्थत्वेन ख्याता। तथा चोक्तं महाभारते वनपर्वणि-

ततस्तीर्थेषु पुण्येषु गोमत्या: पाण्डवा नृप। कृताभिषेका: प्रददुर्गाश्च वित्तं च भारत॥ (९४.२)

अत्र उपमाया: कुवलयानन्देऽनुक्ता: काव्यप्रकाशोक्ता भेदा: प्रदर्शिता:। विस्तरस्तत्रैव द्रष्टव्य:। पृथ्वीच्छन्द:।

**अथाऽम्बुज इवाऽम्बुजे स उपविश्य तत्सौरभं**
**मरन्दमिव सौरभोपममरन्दमास्वादयन्।**
**विलासिन इहाप्लुतान्मलमिवाऽपयत्कश्मलं**
**निरीक्ष्य बुबुधे नदीयमिह चेदलं गङ्गया।।२।।**

**गङ्गा**- अनन्वयमुपमेयोपमां प्रतीपं च वर्णयितुमाह - **अथाम्बुजेति** - अथ गोमतीं नदीं प्राप्य। स अलि: अम्बुज इव अम्बुजे, कमल इव कमले। उपमानोपमेययोर्वाक्यैक्ये एकत्वादनन्वय:। स्वेन स्वस्योपमेत्यर्थ:। कमल इव कमले उपविश्य मरन्दम् इव तत्सौरभम्, मकरन्दम् इव तस्य कमलस्य सौरभं, सौरभोपममरन्दम्, सौरभम् इव मरन्दं च। उपमानोपमेययो: परिवृत्ते: उपमेयोपमा। तथा चोक्तं तल्लक्षणम्- पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता। सादृश्यस्यानेकवाक्यवाचकत्वान्नानन्वयेऽतिव्याप्ति:। तादृशं सौरभम् आस्वादयन्, आस्वादविषयतां प्रापयन्। अथ च इह गोमत्याम् आप्लुतात् स्नानात् विलासिनस्तस्य मलम् इव कश्मलम् आपयत् दूरीभवत् निरीक्ष्य दृष्ट्वा बुबुधे, अलेर्बोध: सम्बभूव - इह अस्मिन् स्थले इयं गोमती नदी चेत्, गङ्गया अलं, न किञ्चिदपि प्रयोजनम्। गोमतीसत्त्वे गङ्गाया आवश्यकता नास्तीत्यर्थ:। एतेन गङ्गाया वैयर्थ्यं प्रतिपादितम्। मलमिव कश्मलमित्यत्राधिकगुणस्य कश्मलस्योपमेयत्वात् प्रथमं प्रतीपम्, प्रतीपमुपमानस्योपमेयत्वप्रकल्पनमिति तल्लक्षणात्। न्यूनगुणया गोमत्या च अधिकगुणाया गङ्गाया वैयर्थ्यप्रतिपादनाद् द्वितीयप्रतीपालङ्कार:। गोमत्या गङ्गारूपोपमानस्य कैमर्थ्यप्रतिपादनात् कुवलयानन्दोक्तं पञ्चमं प्रतीपम्। 'प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वत' इति तत्र तल्लक्षणात्।

**ततो ऽलिमुनिराव्रजद्धरिपदाम्बुजे नीरज-**
**स्ययाचितपुमर्थदे सुरतरौ सदा सादरः।**
**श्रुते ऽपरगुरुर्भवात्तमजलान्नवात्सागराद्**
**विरक्त्यचलनौकया ऽभिनवयोद्धरन्नैमिषम्।।३।।**

**गङ्गा-** विलासिनो नैमिषारण्यप्राप्तिं वर्णयन् रूपकं निरूपयति- **ततोऽलिरिति-** ततः गोमतीस्नानात् परम्। नीरजसि निर्गतो रजो यस्मात् तस्मिन्। रजो गुणरहित इत्यर्थः। अयाचितपुमर्थदे याचनां विनैव धर्मार्थकाममोक्षप्रदे सुरतरौ कल्पवृक्षे, हरिपदाम्बुजे भगवच्चरणकमले सत्त्वप्रधाने भक्तहितसाधनधिया याचनां विनैव पुरुषार्थचतुष्टयप्रदकल्पवृक्षरूपहरिचरणारविन्द इत्यर्थः। सदा सर्वदा सादरः आदरयुक्तः, श्रुते वेदे अपरगुरुः अपरबृहस्पतिः अनुत्तमो गुरुर्वा अलिमुनिः अजलात् जलरहितात् नवात् भवात् अभिनवसंसारात् सागरात् अभिनवया विरक्त्यचलनौकया विरक्तिः संसाराद् विराग एव अचला सुस्थिरा कामादिवायुप्रकोपादकम्पनशीला नौका तया तं विलासिनम् उद्धरन् नैमिषं तदाख्यतीर्थम् आव्रजद् आगच्छत्। अलिमुनिरित्यत्र उपमानादुपमेयस्य भेदेन प्रतीत्यभावात् न्यूनत्वोत्कर्षयोरनुक्तेश्च अनुभयाभेदरूपकम्। नीरजसि हरिपदाम्बुज इत्यत्र अम्बुजापेक्षया हरिपदाम्बुजे नीरजस्त्वरूपन्यूनताप्रदर्शनान्न्यूनाभेदरूपकम्। 'अयाचितपुमर्थदे सुरतरौ' इत्यत्र हरिपदाम्बुजे नीरजस्त्वपरित्यागेन अयाचितपुमर्थप्रदसुरतरुत्वविभावनादधिका-भेदरूपकम्। अपरनवाभिनवपदैर्भेदे प्रतीतेऽपि ताद्रूप्येण प्रतीतेरद्ये उत्कर्षापकर्षयोः अवर्णनाज्जलराहित्यरूपन्यूनत्ववर्णनाद् अचलत्वरूपाधिक्यवर्णनाच्च अनुभयताद्रूप्यरूपकम्। 'अजलान्नवात्सागराद् भवात्' इत्यत्र भवेऽजलत्वनवत्वादिप्रतिपादना-न्यूनताद्रूप्यरूपकम्। 'विरक्त्यचलनौकया' इत्यत्र नौकायामभिनवत्वाचलत्वाद्याधिक्यप्रतिपादनाच्च अधिकताद्रूप्यरूपकम्। विस्तरस्तु कुवलयानन्दे द्रष्टव्यः। नैमिषारण्यमतीव प्राचीनं तीर्थम्। तथा चोक्तं कूर्मपुराणे -

इदं त्रैलोक्यविख्यातं तीर्थं नैमिषमुत्तमम्। महादेवप्रियकरं महापातकनाशनम्।
अत्र दानं तपस्तप्तं श्राद्धयागादिकं च यत्। एकैकं नाशयेत् पापं सप्तजन्मकृतं च यत्।। (-कूर्म. उत्तर. ४२.१, १४)

महाभारतादावपि तीर्थमिदं प्रसिद्धम्।

नैमिषारण्यस्य माहात्म्यं वर्णितं श्रीमद्भागवते। तत्र नैमिषशब्दस्य व्युत्पत्तिं प्रदर्शयन्नाह श्रीधरस्वामी-नैमिश इति। ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिः शीर्यते कुण्ठीभवति यत्र तन्नेमिशं, नेमिशमेव नैमिशम्। तथा च वायवीये - एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते।। यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः।। इत्युक्त्वा सूर्यसंकाशं चक्रं स्रष्टा मनोमयम्।। प्रणिपत्य महादेवं विससर्ज पितामहः।। तेपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम्।। प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत्।। तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम्।। इति। नैमिष इति पाठे वराहपुराणोक्तं द्रष्टव्यम्। तथाहि गौरमुखमृषिं प्रति भगवद्वाक्यम् - एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा।। उवाच निमेषेणेदं निहतं दानवं बलम्।। अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्।। (श्रीमद्भागवते श्रीधरीटीका, १.७.४)

**सहस्रपरिवत्सरप्रचलितः क्रियोन्मीलितः**
**कलावपि पवित्रतां वहति यत्र सत्रोत्सवः।**
**तपोवनमिति द्विजाः सुरपुरीति वृन्दारका**
**विदन्ति कलिबालिनो भुवि यदृष्यमूकं जनाः।।४।।**

**गङ्गा-** परिणामोल्लेखौ प्रतिपादयितुमाह - **सहस्रेति** - यत्र यस्मिन्नैमिषे सहस्रवत्सरप्रचलितः सहस्रवर्षेभ्यः सम्पादितः, सम्पाद्यमान इत्यर्थः, क्रियोन्मीलितः क्रियाभिर्यज्ञसम्बन्धिनीभिः प्रवृत्तिभिरुन्मीलितः प्रकाशितः सत्रोत्सवः यज्ञोत्सवः पवित्रतां शुचित्वं वहति। नैमिषे सहस्रपरिवत्सरप्रचलितस्य यज्ञस्योल्लेखः श्रीमद्भागवतेऽपि लभ्यते। तथा हि-

नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः। सत्रं स्वर्गाय लोकाय सहस्रसममासत।। (१.१.४)

यच्च नैमिषारण्यं द्विजाः तपोवनमिति विदन्ति, वृन्दारका देवाश्च तन्नैमिषं यज्ञे सततसमाहूतदेवानां निरन्तरवासात् भुवि पृथ्वीतले सुरपुरी इति विदन्ति। 'अमरा निर्जरा देवा वृन्दारका दैवतानि' इत्यमरः। जना लोकाश्च कलिबालिनः कलिरूपस्य बालिनः ऋष्यमूकं विदन्ति। यथा ऋष्यमूके बालिनः प्रवेशो नासीदिति रामायणी कथा तद्वदत्र नैमिषे कलिबालिनः प्रवेशो न भवति। 'सत्रोत्सवः' इत्यत्र उत्सवस्यारोप्यमाणस्य प्रकृतसत्ररूपेण पवित्रतावहनक्रियोपयोगित्वात् परिणामालङ्कारः। तथा चोक्तं तल्लक्षणम् - परिणामः क्रियार्थश्चेद्विषयी विषयात्मना। ऋष्यमूकपर्वते बालिप्रवेशाभावस्य रामायणे प्रसिद्धत्वात् कलिविषये तदारोपः। अयं चानेककर्तृकैकधर्मिकानेकधर्मवर्णनात्मक उल्लेखः। 'बहुभिर्बहुधोल्लेखादेक- स्योल्लेख इष्यते' इति तल्लक्षणम्।

**श्रियाऽतिविपुले कृशे कुचरितैर्महत्त्यध्वरै-**

**रणावकरुणैश्चिरं निवसता ऽमुना नैमिषे।**

**विशुद्धसरयूतटप्रकटहर्म्यदेवालया**

**क्रमादनुसृता ऽऽदिमा शुचिपुरीष्वयोध्या मुदा।।५।।**

गङ्गा- एककर्तृकोल्लेखालङ्कारं निरूपयितुमुपक्रमते – **श्रियाऽतीति** – श्रिया शोभया तपः सम्पत्त्या अतिविपुले विस्तृततमे, कुचरितैः कुत्सितचरितवद्भिः कृशे दुर्बले, सर्वथा रहित इत्यर्थः। तपस्विनां प्राधान्यात् कुत्सितचरितानामभावशालिनि अध्वरैः यज्ञैः महति विशाले। यज्ञः सवोऽध्वरो याग इत्यमरः। अकरुणैः निर्दयैः अणौ अल्पे। अणुर्व्रीह्यल्पयोरिति हैमः। एतादृशे नैमिषे पुराणप्रसिद्धे तीर्थे मुदा प्रसन्नतया चिरं चिरकालं यावत् निवसता अमुना विलासिना क्रमात् विशुद्धसरयूतटप्रकटहर्म्यदेवालया, विशुद्धायाः पवित्रतमायाः सरयूनद्यास्तटे प्रकटितानि हर्म्याणि प्रासादा देवालया मन्दिराणि च यस्यां तथा शुचिपुरीषु सप्तपवित्रनगरीषु 'अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदा स्मृताः' इत्येतासु मोक्षप्रदासु आदिमा अग्रगण्या या अयोध्या सा अनुसृता अनुगता। नैमिषाद् विलासी अयोध्यामगच्छदित्यर्थः। नैमिषारण्यस्य श्रियातिविपुलत्वादि-बहुधोल्लेखादेक-कर्तृकोल्लेखः। 'एकेन बहुधोल्लेखेऽप्यसौ विषयभेदत' इति कुवलयानन्दोक्तं तल्लक्षणम्।

**विलोक्य कपिचापलान्युदधिलङ्घनं स्मर्यते**

**वसिष्ठ इति नागरैर्मखिनि यत्र बम्भ्रम्यते।**

**सिताम्बुजशशाङ्कता शुचियशस्सु संशय्यते ऽ-**

**धुना ऽपि दशकन्धरप्रलयधूमकेतोः प्रभोः।।६।।**

गङ्गा- स्मरणं-भ्रान्तिमत्ससन्देहनिरूपणायाऽऽह – **विलोक्येति** – यत्र यस्यां शुचिपुरीश्रेष्ठायामयोध्यायां कपिचापलान् कपीनां वानराणां चापलान् चपलतया कृतमितस्ततः कूर्दनादिकं विलोक्य उदधिलङ्घनं स्मर्यते। रामायणप्रसिद्धं हनुमत्कृतोदधिलङ्घनं स्मरणविषयतां भजते। एकदर्शने तत्सदृशवस्त्वन्तरस्य स्मृतेः स्मरणालङ्कारः। अथ च यत्र नागरैः नगरादागतैर्जनैः मखिनि यज्ञसम्पादयित्रि मुनौ वसिष्ठोऽयमिति बम्भ्रम्यते भूयोभूयोऽतिशयेन वा भ्रमः क्रियते। मखिनि वशिष्ठभ्रान्तेर्भान्तिमानलङ्कारः। अधुना अपि अद्यापि यस्यामयोध्यायां दशकन्धरप्रलयधूमकेतोः रावणविनाशोत्पातग्रहस्य। धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोरिति विश्वः। प्रभोः श्रीरामस्य शुचियशस्सु धवलकीर्तिषु। शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिष्विति मेदिनी। सिताम्बुजशशाङ्कता श्वेतकमलत्वं चन्द्रत्वं च संशय्यते सन्देहविषयतां नीयते। भगवतो रामस्य शुचियशस्सु सिताम्बुजशशाङ्कतायाः संशयात् ससन्देहालङ्कारः। अस्मिन् पद्ये स्मरणभ्रान्तिमत्ससन्देहाश्चेति त्रयोऽलङ्कारा निर्दिष्टाः। स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयमिति तल्लक्षणम्।

**विधाय रघुनायकप्रणतितीर्थसेवा इह**

**प्रयागमगमत्ततस्तमनघं विधास्यन्नलिः।**

**न यत्र रविजह्नुजे अपि तु तीर्थराजस्य ते**

**मयूरचमरीमृगच्छदकचोच्चिते चामरे।।७।।**

गङ्गा- अलेर्विलासिना प्रयागगमनं निरूपयति – **विधायेति** – इह अयोध्यायां रघुनायकप्रणतितीर्थसेवाः, रघुनायकस्य प्रणतीः प्रणामान् स्नानदानादिना तीर्थसेवाः तीर्थे सम्पाद्यानि कर्माणि च विधाय, तं विलासिनम् अनघं पापरहितं विधास्यन्, पूर्वं चार्वाकादिसिद्धान्तानुसारिजीवनपद्धत्यवलम्बनेन तदघाधिक्यम्, तद्दूरीकर्तुं ततः अयोध्यायाः प्रयागम् अगमत्। तत्र तीर्थराजप्रयागे त्रिवेणी सङ्गमस्नानेन शतजन्मार्जितपापशुद्धिरिति पौराणिका वदन्ति। यत्र यस्मिन् प्रयागे रविजह्नुजे, रविजा यमुना जह्नुजा च गङ्गा। गङ्गा विष्णुपदी जह्नुतनयेत्यमरः। कालिन्दी सूर्यतनया यमुनेति चाऽमरः। प्रयागे गङ्गायमुने न, अपि तु ते तीर्थराजस्य प्रयागस्य मयूरचमरीमृगच्छदकचोच्चिते, मयूरश्च चमरीमृगश्चेति तयोश्छदकचोच्चिते त्वक्केशनिर्मिते चामरे व्यजने स्तः। चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोरिति मेदिनी। चमरी तु मृगान्तरे इति च हैमः। चामरा चामरं बालव्यजनं रोमगुच्छकमिति रभसः। प्रायशश्चमरीमृगच्छदकचोच्चितमेव चामरं दृश्यते। प्रयागे गङ्गाया धवलधारत्वात्तस्याश्चमरीमृगकचनिर्मितचामरत्वं यमुनायाश्च गभीरवर्णत्वात् तस्या मयूरकचनिर्मितचामरत्वं निर्दिष्टम्। राजानो द्वाभ्यां चामराभ्यां सेवमाना दृश्यन्त इति चामरद्वयकल्पना तीर्थराजस्यापि। न रविजह्नुजे अपित्वित्यादौ प्रकृते मयूरचमरीमृगच्छदकचोच्चिते चामर इत्यप्रकृतधर्मारोपफलिका स्वगतधर्मापलापरूपा शुद्धापह्नुतिः। तल्लक्षणम्- शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः।

**इयं निशितकर्तरी न तु सिताऽसितासङ्गमः**

**कृणत्ति यदघावृति दिवि भवत्वसौ सम्भवात्।**

**अयञ्च वटपादपो न हरितातपत्रं महत्**

**सुतीर्थपटलीपतेरिति वदन्ति यत्रास्तिकाः ।।८।।**

**गङ्गा-** इयं निशितेति - यत्र प्रयागे आस्तिका वेदोक्तधर्मपरायणाः सङ्गमाक्षयवटविषये एवं वदन्ति - प्रयागेऽयं सिताऽसितासङ्गमो न, शुक्लकृष्णरूपयोः गङ्गायमुनयोः सङ्गमस्थलं न, इयं निशितकर्तरी तीक्ष्णकर्तनयन्त्रं विद्यते। यद्धि अघावृति पापावरणं कृणत्ति छिनत्ति पापावरणविच्छेदपूर्वकं पुण्यात्मानं विदधातीत्यर्थः। इदं हि प्रयागस्य सितासिताविशेषणमृग्वेदेऽपि दृश्यते - सितासिते सरिते यत्र (ऋ. वे. खि. सू. १०.७५.६) असौ सङ्गमः सम्भवात् दिवि स्वर्गे भवतु। तत्र निष्पापदेवानां निवासात्तस्य सङ्गमत्वं सम्भाव्यते। पृथ्व्यां पुनः पापपरायणमनुष्याणां पापावरणच्छेदनाय निशितकर्तरीत्वमेवाऽस्य। अयं च प्रयागे गङ्गातटे विद्यमानो वटपादपो न, अपितु सुतीर्थपटलीपतेः सुतीर्थसमूहाधिपतेः प्रयागस्य महत् विशालं हरितातपत्रं हरितं छत्रम्। छत्रं त्वातपत्रमित्यमरः। सितासितासङ्गमे अघावृतिकर्तनयुक्त्या निशितकर्तरीत्यस्यारोपे हेतूक्तेः हेत्वपह्नुतिः। स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिरिति कुवलयानन्दे तल्लक्षणोक्तेः। दिवि भवत्वसौ सम्भवादित्यत्र प्रकृतस्यान्यत्रारोपोक्तेः पर्यस्तापह्नुतिः। अयं च वाटपादपो न हरितातपत्रं महदित्यनेन परस्य भ्रान्तिवारणाद् भ्रान्तापह्नुतिरलङ्कारः।

**सितं न खलु सैकतं लसति राजतीयं स्थली**
**सुराः पथिककैतवादिदमुपासते मुक्तये।**
**इति च्छलितयात्रिकान् चतुरतैर्थकान्सो ऽर्चयन्**
**कृतोचितविधिर्ययौ शिवदिदृक्षया काशिकाम्।।९।।**

**गङ्गा-** सङ्गमसुषमां वर्णयति - **सितमिति** - इदं सितं धवलं सैकतं सिकतामयं गङ्गातटं न। सितमवसिते च बद्धे धवल इति मेदिनी। सैकतं सिकतामयमित्यमरः। अपि तु इयं राजती रजतनिर्मिता स्थली विद्यते। सुराः देवाः इदं सितं गङ्गातटं पथिककैतवात् अध्वगच्छलात्। तीर्थयात्रिणां मिषेण मुक्तये मोक्षप्राप्तये उपासते। कैतवपदेनापह्नवाभिधानात् कैतवापह्नुतिः। इति एवम्प्रकारेण कृतोचितविधिः कृतः सम्पादितः उचितः तीर्थयात्रासमुचितो विधिर्येन स तादृशः विलासी छलितयात्रिकान् छद्मपथिकान् चतुरतैर्थकान् निपुणतीर्थव्रतिनः अर्चयन् पूजयन् शिवदिदृक्षया भगवतो विश्वनाथस्य दर्शनसमीहया काशिकां ययौ विश्वनाथपुरीं वाराणसीं जगाम।

**इयं शमनयातनाविधिशतापवादो ध्रुवं**
**सहर्षमिह जाह्नवी धुरि च नृत्यतीवोर्मिभिः।**
**इहाश्रयति भारती विधिधियेव शिष्टान्द्विजा-**
**निह ध्वजविधूननैरिव निवार्यते संसृतिः।।१०।।**

**गङ्गा-** उत्प्रेक्षानिरूपणमिषेण काशीं वर्णयति - **इयं शमनेति** - इयं काशी शमनयातनाविधिशतापवादः, शमनो यमः। शमनो यमराड्यम इत्यमरः। तस्य यमस्य यातनायास्तीव्रवेदनायाः। यातना तीव्रवेदनेत्यमरः। यमप्रदत्तमृत्युकष्टमित्यर्थः। विधीनां शतम् उपायबहुत्वं तस्य अपवादः निन्दा इति ध्रुवम्। अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपीति मेदिनी। इयं काशी यमराजस्य मरणादियातनाविधिबहुत्वस्य नैरर्थक्यं निरूपयति। अत्र वासात् मुक्तिलाभान्न यमयातनाभयमित्यर्थः। इयमित्यनेन काशिकाया विषयस्योक्तत्वात् शमनयातनाविधिशतापवादो ध्रुवमित्यत्र उक्तविषया अपवादत्वसम्भावनारूपा वस्तूत्प्रेक्षा। काश्यां जाह्नवी गङ्गा ऊर्मिभिर्लहरिकाभिः धुरि अग्रे नृत्यतीव। प्रवाहरूपविषयस्यानुक्तत्वादनुक्तविषया वस्तूत्प्रेक्षा। इह च भारती सरस्वती विधिधिया इव ब्रह्मबुद्ध्या इव शिष्टान् नानाशास्त्रविचक्षणान् द्विजान् ब्राह्मणान् आश्रयति आश्रित्य तिष्ठति। शिष्टद्विजाश्रिता सरस्वती काश्यामेव निवसतीत्यर्थः। विधिधियेत्यनेन तत्रत्यद्विजन्मनां वेदादिविविधशास्त्रपारङ्गतत्वात् ब्रह्मणा उत्प्रेक्षा। भारत्याः द्विजेषु विधिधियोऽभावाद् असिद्धविषया हेतूत्प्रेक्षा। इह पुनः मन्दिरेषु ध्वजविधूननैः संसृतिः संसारः निवार्यत इव दूरीक्रियत इव। सांसारिकता न काशीं व्याप्नोतीत्यर्थः। ध्वजविधूननरूपविषयस्य सत्त्वादिह सिद्धविषया हेतूत्प्रेक्षा। अत्रत्याः सर्वे ब्राह्मणा मायामोहादिरहिता भगवतो विश्वेश्वरस्योपासका ज्ञानवन्तश्चेति न तत्र सांसारिकताया भयम्।

**भवं तरितुमत्र किं सुरसरिज्जले बालका-**
**स्तरन्ति किमु तद्धिये सततमुच्छलन्त्यण्डजाः।**
**कलाविभववैदुषीविरतिमुक्तिसङ्केतभूः**
**पुरीयमिह सेव्यतामनिशमेष विश्वेश्वरः।।११।।**

**गङ्गा-** पुनः काशीमेव वर्णयन्नाह - **भवमिति-** अत्र काश्यां बालकाः भवं संसारं तरितुं, मायामोहादिभ्यो जन्ममरणादिभ्यश्च पारं गन्तुं सुरसरिज्जले गङ्गाजले तरन्ति किम्? फलस्य भवतरणस्य सत्त्वात् सिद्धविषया फलोत्प्रेक्षा। अण्डजाः पक्षिणः तद्धिये संसारभयाय संसारोऽत्र नागच्छेदिति तद्भयोत्पादनाय सततमुच्छलन्ति किम्? नानाप्रकारेण गङ्गायां पक्षिणामुच्छलनं संसारं भाययितुं विद्यते किमिति भीतिरूपफलाभावाद् असिद्धविषया फलोत्प्रेक्षा। इह काश्यां कला-विभव-वैदुषी-विरति-मुक्ति-सङ्केतभूः, भगवतो

विश्वनाथस्य नाट्यादिविविधकलाजनकत्वादियं कलाया: सङ्केतस्थली, विभवो धनम्, भगवत्या अन्नपूर्णाया: प्रसादादियं विभवस्य सङ्केतभूमि:। वैदुषी वैदुष्यम्। विश्वनाथाधिष्ठितत्वात् वैदुषीसङ्केतस्थली, तथैव विरते: वैराग्यस्य मुक्ते: मोक्षस्य चेयं सङ्केतभू:, अत एतादृशीयं पुरी एप अत्र विराजमानो विश्वेश्वरश्च अनिशं निरन्तरं सेव्यताम् इति विलासिनं प्रति अलेरुक्ति:।

**कलिन्दतनयां शिरस्युरसि तुङ्गशैलद्वयं**

**वहन्त्युदरधारितोरगशिशुस्तपो दुश्चरम्।**

**विधाय शरदम्बुदे स्थितिमनश्वरीं बिभ्रती**

**बिभर्ति भजतो जनानिह हि काऽपि सौदामनी।।१२।।**

**गङ्गा**- रूपकातिशयोक्तिनिरूपणव्याजेन पार्वतीं वर्णयति - **कलिन्देति** - काप्यपूर्वा सौदामिनी काश्यामिह भजतो जनान् बिभर्ति। कीदृशी सा? शिरसि कलिन्दतनयां यमुनाम्, यमुनाया: श्यामवर्णत्वात् केशपाशमित्यर्थ:। उरसि वक्ष:स्थले तुङ्गशैलद्वयं कुचयुगं वहन्ती, उदरधारितोरगशिशु:, उदरे धारिता उरगशिशव: रोमावली यया सा। दुश्चरम् अतिकष्टेन चरितुं योग्यं तप: विधाय शरदम्बुदे शरत्कालीने मेघे शिवे अनश्वरीं विनाशरहितां नित्यां स्थितिं विभ्रती धारयन्ती काऽपि सौदामिनी विद्युत् पार्वती इह भजत: जनान् सेवमानान् तपस्विन: धारयति। कलिन्दतनयया केशपाशस्य गिरिद्वयेन कुचयुगस्य उरगशिशुभि: रोमावले: शरदम्बुदेन शिवस्य सौदामिन्या च पार्वत्या निगरणाद् रूपकातिशयोक्ति:।

**चतुर्विधपुमर्थद: सुरनगो ऽत्र नाके तु ने-**

**त्यमुष्य निजसूक्तिभिर्गिरिशिभक्तिमुद्रेचयन्।**

**अभीक्ष्णमघमर्पणं स मणिकर्णिकायां व्यधा-**

**ज्जगाम च ततो गयां पितृगणोद्धृतावुद्यत:।।१३।।**

**गङ्गा**- पुन: काश्या वैशिष्ट्यं वर्णयति - **चतुर्विधेति**- अत्र काश्यां चतुर्विधपुमर्थद: धर्मार्थकाममोक्षपुरुपार्थप्रद: पुरनग: कल्पवृक्ष: भगवान् विश्वनाथो वर्तते। शैलवृक्षौ नगावगावित्यमर:। स सततं काश्यामेव निवसतीति न नाके स्वर्गे तस्य स्थितिरिति स्वर्गापेक्षया काश्या: श्रेष्ठता। इत्येवं निजसूक्तिभि: स्वसुन्दरकथनै: अमुष्य विलासिन: गिरिशभक्तिं शिवभक्तिम् उद्रेचयन् वृद्धिं गमयन् स अलि: मणिकर्णिकायां काशीस्थमणिकर्णिकातीर्थे अभीक्ष्णं वारं वारं पौन: पुन्येन अघमर्पणं पापप्रक्षालनं व्यधात् अकरोत्। ततश्च पितृगणोद्धृतौ पितृपितामहानामुद्धारे उद्यत: गयां गयातीर्थं जगाम ययौ। सुरनगस्य स्वर्गेऽपह्नवपूर्वकं तत्त्वेनाऽध्यवसितस्य विश्वनाथस्य काश्यां वर्णनात् सापह्नवोऽतिशयोक्त्यलङ्कार:। यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मतेति तल्लक्षणम्।

**नवैव जलमाधुरी विमलशीतता ऽन्यैव सा**

**परैव लघुगामिता जगति फल्गुनद्या इति।**

**स्तुवन्कृतनिमज्जनो ऽभजदथैष विष्णो: पदं**

**पिपर्ति शिखरै: पुरं हरिहयस्य यन्मन्दिरम्।।१४।।**

**गङ्गा**- गयातीर्थमाहात्म्यं वर्णयति - **नवैव जलेति**- जगति संसारे फल्गुनद्या: गयायां प्रवहन्त्या: तटिन्या नवा अभिनवा एव जलमाधुरी विद्यते। इयं फल्गुनदी गङ्गादिपवित्रतमनदीष्वन्यतमा। अन्या अपूर्वा एव सा विमलशीतता स्वच्छता शीतलता च वर्तते। परा उत्कृष्टा एव लघुगामिता अस्ति। इत्येवं स्तुवन् स्तुतिं कुर्वन् कृतनिमज्जन: सम्पादितस्नान: एप अलि: विष्णो: पदं प्रसिद्धं विष्णुपदमन्दिरम् अभजत् असेवत। यत् विष्णुपदमन्दिरं हरिहयस्य इन्द्रस्य पुरं स्वर्गं शिखरै: पिपर्ति पूरयति। स्वोच्चशिखरै: विष्णुपदमन्दिरं स्वर्गं स्पृशतीत्यर्थ:। इन्द्रो मरुत्वान् मघवा हरिहय: स्वराण्नमुचिसूदन इत्यमर:। फल्गुनद्या जलमाधुर्यां विमलशीततायां लघुगामितायां च प्रसिद्धमाधुर्या विमलशीतताया लघुगामिताया भेदाभावेऽपि नवैव अन्यैव परैवेत्यादिना भेदवर्णनाद् भेदकातिशयोक्त्यलङ्कार:। भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम्। 'पिपर्ति शिखरै:' इत्यनेन इन्द्रपुरस्य पूरणसम्बन्धाभावेऽपि तद्वर्णनात् सम्बन्धातिशयोक्ति:।

**ततो ऽक्षयवटे पितॄनतृपदेष पिण्डोदकै-**

**र्यदाप्तिमुदिता: सुधामपि न पातुमिच्छन्त्यमी।**

**अथोपमिथिलं स्तुवन्सनति वैद्यनाथेश्वरं**

**ययौ पशुपतिं शिवं हिमगिरौ च नेपालगम्।।१५।।**

**गङ्गा**- ततोऽक्षयवट इति - तत: विष्णुपदमन्दिरेऽर्चनं विधाय एष अलि: अक्षयवटे पिण्डोदकै: शास्त्रोक्तविधिना पितॄन्

पूर्वपुरुषान् अतृपत् तृप्तान् अकरोत्। गयायां पिण्डोदकपानेन पितरस्तृप्यन्तीति शास्त्रोक्तप्रकारेण स पितृतर्पणमकरोत्। तत्र गयास्थे अक्षयवटे यदाप्तिमुदिताः यस्य पिण्डोदकस्य आप्त्या प्राप्त्या प्रसन्नाः अमी पितरः सुधाममृतमपि पातुं नेच्छन्ति। तथा चोक्तं वायुपुराणे गयामाहात्म्ये-

वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्वतारकम्। गयातीर्थं सर्वदेशे तीर्थेभ्योऽप्यधिकं शृणु॥
गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः। प्राप्तस्य तस्य शिरसि शिलां धर्मो ह्यधारयत्॥
तत्र ब्रह्माकरोद्यागं स्थितश्चादिगदाधरः। फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशम्॥
गयासुरस्य विप्रेन्द्र! ब्रह्माद्यैर्दैवतैः सह। कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकम्॥
श्वेतकल्पे तु वाराहे गयो यागमकारयत्। गयनाम्ना गया ख्याता क्षेत्रं ब्रह्माभिकाङ्क्षितम्॥
काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः। गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति॥
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्। पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति॥
गयां गत्वाऽन्नदाता यः पितरस्तेन पुत्रिणः। पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम्॥
न चेत् पञ्चादशाहं वा सप्तरात्रं त्रिरात्रकम्। महाकल्पकृतं पापं गयां प्राप्य विनश्यति॥
पिण्डं दत्वा च पित्रादेरात्मनोऽपि तिलैर्विना। ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
पापं तत्सङ्गजं सर्वं गयाश्राद्धाद् विनश्यति॥

अक्षयवटे पितॄन् अतृपत्। यदाप्तिमुदिता अमी सुधामपि पातुं न इच्छन्तीति सुधापानेच्छासम्बन्धसत्त्वेऽप्यसम्बन्धवर्णनादसम्बन्धातिशयोक्तिः।

**समर्च्य गिरिनन्दिनीं रहसि कामरूपाश्रितां**
**निमज्ज्य कपिलादृते जलधिजाह्नवीसङ्गमे।**
**अथोत्कलमहीस्थितं स भुवनेश्वरं प्राणमत्**
**सहाभिमतसम्पदोदयति यत्सपर्या सताम्।।१६।।**

**गङ्गा**- कामरूपादिदर्शनवर्णनायोपक्रमते - **समर्च्येति**- अथ वैद्यनाथपशुपतिशिवयोर्दर्शनात् परम्, रहसि एकान्ते सुविशाले पर्वते ब्रह्मपुत्रतटे कामरूपाश्रितां कामरूपाख्यदेशस्थितां गिरिनन्दिनीं भगवतीं कामाख्यां समर्च्य सम्पूज्य कपिलादृते कपिलेन पुराणप्रसिद्धेन मुनिना समधिष्ठिते जलधिजाह्नवीसङ्गमे गङ्गासागरयोर्मिलनस्थले निमज्ज्य स्नानं विधाय तेनैव मार्गेण गत्वा सः उत्कलमहीस्थितं भुवनेश्वरं भगवन्तं लिङ्गराजं प्राणमत्। यत्सपर्या यस्य भगवतो लिङ्गराजस्य सपर्या पूजा सतां सज्जनानाम् अभिमतसम्पदा सह अभीष्टसम्पत्त्या सह उदयति उदयं प्राप्नोति। कामं पूरयतीत्यर्थः। भुवनेश्वरनगरे लिङ्गराजनाम्ना प्रसिद्धं विशालं मन्दिरमस्ति। भगवतो लिङ्गराजस्यैवाऽपरं नाम भुवनेश्वरो विद्यते। तन्नाम्नैव तन्नगरमपि प्रसिद्धम्। सपर्यासम्पदोः हेतुकार्ययोः सहत्ववर्णनाद् अक्रमातिशयोक्तिः। अक्रमातिशयोक्तिः स्यात् सहत्वे हेतुकार्ययोः।

**ननाम पुरुषोत्तमं विमलनीलशैलालयं**
**यदर्चनकथाऽप्यलं भजदभीष्टसम्पत्तये।**
**पतन्ति शिरसि स्रजः सुरकरोज्झिताः प्राक् ततो**
**मुखं सुकृतकारिणां विशति यत्प्रसादौदनः।।१७।।**

**गङ्गा**- जगन्नाथं वर्णयति - **ननामेति**- विमलनीलशैलालयं विमलनीलशैलः स्वच्छनीलगिरिः आलयो निवासो यस्य तं विमलनीलशैलालयं भगवन्तं पुरुषोत्तमं ननाम नमश्चकार। यदर्चनकथा अपि यस्य भगवतो जगन्नाथस्य अर्चनकथा पूजनकथा अपि भजदभीष्टसम्पत्तये भजतां सेवमानानां भक्तानाम् अभीष्टसम्पत्तये वाञ्छितार्थपूर्त्तये अलं पर्याप्तम्। का कथा तत्साक्षाद् दर्शनस्येति। अर्चनप्रसक्तिमात्रेण तत्कार्यभूतभक्ताभीष्टसम्पत्तिवर्णनाच्चफलातिशयोक्तिः। सुरकरोज्झिताः देवानां करैः त्यक्ताः स्रजः मालाः शिरसि भक्तानां मस्तके प्राक् पतन्ति, ततः यत्प्रसादौदनः यस्य महाप्रसादत्वेन प्रसिद्ध ओदनः सुकृतकारिणां भक्तानां मुखं विशति। न तु जनसामान्यानाम् असुकृतकारिणां पापात्मनामित्यर्थः। प्रसादौदनभक्षणरूपकारणात् पूर्वमेव सुरकरोज्झितपुष्पमालापतनरूपकार्यवर्णना-दत्यन्तातिशयोक्तिः।

**सुराधिपदिगापगापतितरङ्गमालोन्नता**
**हृताध्वगजनातपा सरलनारिकेलावली।**
**विशालपुरुषोत्तमालयविराजिकेतुच्छटा ऽ-**

**तनोदिह मनोमुदं सहविलासिनो ऽस्येक्षिता।।१८।।**

**गङ्गा**- अलेर्मनोमोदं वर्णयति - **सुराधिपेति** - इह नीलाचले पुरीति प्रसिद्धतीर्थे ईक्षिता दृष्टिविषयीकृता। प्रणतिपुरस्सरं सभक्ति निरीक्षितेति यावत्। सुराधिपदिगापगापतितरङ्गमालोन्नता सुराधिपदिश: पूर्वदिग्भागस्य। इन्द्र: पूर्वदिश: स्वामी। इन्द्रो वह्निः पितृपति: ..... पतय: पूर्वादीनां दिशां क्रमादित्यमर:। अपगापते: समुद्रस्य तरङ्गमाला लहरिकासमूह:, उन्नत उत्कृष्टा हृताध्वगजनातपा हृत: अध्वगजनानां पथिकानाम् आतप: रविकिरणजन्यतापोऽनया सा तादृशी सरलनारिकेलावली सरला अवक्रा नारिकेलवृक्षाणामवली पङ्क्ति:। सरल: पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु इति मेदिनी। विशालपुरुपोत्तमालयविराजिकेतुच्छटा, पुरुषोत्तमस्य भगवतो जगन्नाथस्य आलय: मन्दिरम्। विशालश्चासौ पुरुषोत्तमालय:, तस्य शिखरे विराजिकेतो: शोभायमानध्वजस्य छटा सुषमा। भगवतो जगन्नाथस्य विशालमन्दिरशिखरे विराजमानध्वजसुषमा च सहविलासिन: विलासिना सहित: सहविलासी तस्य सहविलासिनोऽलेरस्य मनोमुदं चेतसि आनन्दम् अतनोत् व्यतनुत। तरङ्गमाला नारिकेलावली केतुच्छटा चेति प्रकृतानामनेकेषां मनोमोदजननरूपैकक्रिययाऽन्वयात् प्रकृतानेकविषया तुल्ययोगिता। वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगितेति तल्लक्षणम्।

**कलिङ्गविषये तत: परिनिपीय गोदावरीं**
**सुधामधुसितारसं स्वदितवानवामन्यत।**
**स्वतोयमभिनन्दत: सरिदियं तथा निन्दत:**
**सदा रसिकसंसदि प्रकटयत्यमन्दाक्षताम्।।१९।।**

**गङ्गा**- गोदावरीं वर्णयितुमाह - **कलिङ्गविषय इति**- तत: नीलाचलनिवासिनो दर्शनं विधाय कलिङ्गविषये उत्कलक्षेत्रे गोदावरीम् एतदाख्यां महानदीं परिनिपीय आचम्य स्नात्वा सम्पूज्य तीर्थयोग्यविधिं च सम्पाद्य परिपानं कृत्वा। उत्कलक्षेत्रे गोदावर्या: स्थिति: कवे: जीवनकाले आसीत्। तदानीं विशाखापट्टनप्रभृतीनि नगराणि उत्कलराज्ये समभवन्। अद्यत्वे तु न तथा। स्वदितवान् स्वदितं नानावृक्षेपु पुष्पासवास्वादोऽस्यास्तीति तादृशोऽलि:, स्वदितं संसारभोगप्रसक्तिरस्यास्तीत्येतादृशो विलासी वा सुधामधुसितारसं पीयूषमकरन्दशर्करासवम् अवामन्यत अनिन्दत्। गोदावरीजलपानानन्तरं सर्वे तद्भिन्नरसास्तस्मै नारोचन्त इत्यर्थ:। सुधामधुसितारसादीनामनेकेषाम-प्रकृतानामवमाननारूपैकक्रियाऽन्वयात् अप्रकृतानेकविषया तुल्ययोगिता। इयं सरित् गोरावरीनदी स्वतोयं स्वजलमभिनन्दत: सादरं पीतवत: तथा निन्दत: तत्तिरस्कारं कुर्वत: च समभावेन रसिकसंसदि रसपाने समादरवतां सज्जनानां समाजे सदा अमन्दाक्षतां निर्लज्जतां कार्यक्षमेन्द्रियतां च प्रकटयति। अथाक्षमिन्द्रिय इत्यमर:। इयं हिताहितयोर्वृत्तितौल्यरूपा तुल्ययोगिता।

**प्रसन्नकविता मुखे सहृदयस्य मन्दाकिनी**
**तथा त्रिदशविष्टपे भुवि चकास्ति कृष्णा नदी।**
**इति स्तुतरसां बुधैरथ निषेव्य कूलङ्कषां**
**मुदाऽऽन्ध्रविषयं गतोऽभजत कालहस्तीश्वरम्।।२०।।**

**गङ्गा**- अले: कालहस्तीश्वरगमनं निरूपयति - **प्रसन्नकवितेति** - यथा सहृदयस्य कवे: मुखे प्रसन्नकविता प्रसादगुणोपेता शब्दरचना, त्रिविष्टपे स्वर्गे च मन्दाकिनी स्वर्गङ्गा शोभते तथा भुवि पृथिव्यां कृष्णा नदी चकास्ति विलसति। इत्येवं रूपेण स्वपवित्रतया बुधै: विद्वद्भि: स्तुतरसां पूजितजलाम्। रस: स्वादे जले वीर्ये इति हैम:। अथ च कूलङ्कषां, कूलं तटं कषति, भिनत्ति इति यावदिति कूलङ्कषा, प्रवाहेण तटभङ्गकारिणी, ताम्। निषेव्य सम्पूज्य। तत्र स्नानादिकं विधाय। मुदा प्रसन्नमनसा आन्ध्रविषयम् आन्ध्रदेशं गत: प्राप्त: स: कालहस्तीश्वरम् एतन्नामानं शिवमभजत असेवत। गुणोत्कृष्टै: प्रसन्नकवितया मन्दाकिन्या च कृष्णाया: साम्यकथनात् साम्यकथनरूपा तुल्ययोगिता 'गुणोत्कृष्टै: समीकृत्य वचोऽन्या तुल्ययोगितेति लक्षणम्।

**तमो हरति भानुमानथ च कालहस्तीश्वरो**
**भवत्युचितकृन्नतो भवति चात्र भक्तो गुणै:।**
**चकास्ति शशिन: कला शिरसि शोभते ऽङ्के ऽद्रिजा**
**स्तुवन्त्यमुमिहर्षय: श्रुतिगिर: स्तुवन्त्यादरात्।।२१।।**

**गङ्गा**- कालहस्तीश्वरमाहात्म्यं वर्णयति - **तम इति**- भानुमान् सूर्य: अथ कालहस्तीश्वरश्च तम: अन्धकारमज्ञानं हरति दूरीकरोति। उचितकृत् भक्त:, उचितं शिवभक्तये तदर्चनाय वा शास्त्रोक्तकर्मकरोतीत्युचितकृत्, तादृशो भक्त: अत्र भगवति कालहस्तीश्वरे नत: नम्र: भवति, गुणै: शिवोपासनया लब्धै: निरहङ्कारतादिभि: भवति च, भव इव आचरति च। भगवत: कालहस्तीश्वरस्योपासनया शिवसारूप्यं प्राप्नोतीत्यर्थ:। तेन तस्य भव इवाचरणशीलस्य भक्तस्य शिरसि शशिन: कला चकास्ति शोभते। अङ्के क्रोडे च अद्रिजा पार्वती

शोभते। इह अमुं लब्धशिवसारूप्यं भक्तम् ऋषयः स्तुवन्ति, आदरात् श्रुतिगिरः स्तुवन्ति च। शिवोपासनया भक्तः शिव एव भवतीति शैवानां सिद्धान्तः। तस्य शिवसम्पत्तिरपि विलसतीति तन्मस्तके चन्द्रकला क्रोडे पार्वती च शोभते। प्रथमचरणे प्रकृतस्य शिवस्य अप्रकृतस्य च सूर्यस्य एकक्रियया अन्वयाद दीपकम्। 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधा' इति तल्लक्षणम्। अत्र द्वितीयचरणे 'भवति भवति' इत्यावृत्तेः पदावृत्तिदीपकम्। प्रथमं भवतीतिपदं सत्तावाचकं क्रियापदं द्वितीयं च भव इवाचरतीत्यर्थभेदे प्रयुक्तम्। तृतीयचरणे चकास्ति शोभते' इत्यत्र एकस्मिन्नर्थे शब्दभेदात् अर्थावृत्तिदीपकम्। चतुर्थचरणे ऋषिश्रुतिगिरोः स्तवनरूपैकधर्माभिसम्बन्धे सत्यपि कविना तस्मिन्नेवार्थे तस्यैव क्रियापदस्य पुनरावृत्तिः कृतेति उभयावृत्तिदीपकमलङ्कारः। तथा च तल्लक्षणम् – 'त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम्।'

**प्रमोदयति वैष्णवान्सपदि वेङ्कटेशः परं**
**प्रहर्षयति शीतलो मलयवायुरेवाऽध्वगान्।**
**स्मृतो ऽयमरुणाचलो दहति संसृतेः साध्वसं**
**कथञ्चिदुदितो रविर्ननु निहन्ति नैशं तमः।।२२।।**

गङ्गा- वेङ्कटेशादिदेवान् वर्णयितुं वदति – **प्रमोदयतीति**- वेङ्कटेशः तिरुपतिस्थो भगवान् वेङ्कटनाथः वैष्णवान् विष्णुभक्तान् परं प्रसादयति, अतिशयेन आनन्दयति। तत्र शीतलो मन्दवायुः एव अध्वगान् प्रहर्षयति, प्रमोदयति। अत्रोपमाने वेङ्कटेशे उपमेये मलयवायौ च एकस्यैव सामान्यधर्मस्य पृथक् पृथक् रूपेण निर्देशात् प्रतिवस्तूपमा। वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मतेति लक्षणम्। स्मृतः स्मरणविषयीकृतः अयमरुणाचलः अरुणाचलनाथः संसृतेः संसारस्य साध्वसं भयम्। मायामोहादिसांसारिकभयम्। त्रासोत्रासौ दरो भीतमातङ्को भीश्च साध्वसमिति शब्दार्णवः। ननु इत्यवधारणे। कथञ्चिद् उदितो रविः नैशं तमः निहन्ति। संसारभयमरुणाचल एव दहतीति रवेः आवश्यकतैव नास्ति। तथापि कथञ्चिदुदितः सः रात्रिजन्यमन्धकारं दूरीकरोति। अत्र तमःसंसृतिभीत्योः दुःखदत्वेन सूर्यारुणाचलनाथयोश्च आनन्ददत्वेन विम्बप्रतिविम्बभावः। तेन च दृष्टान्तोऽलङ्कारः। विम्बप्रतिविम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति लक्षणम्।

**इति प्रतिसुरालयं नवनवैः स्वसूक्तिक्रमै-**
**र्मनो ऽस्य चिरदूषितं पथि विलासिनः पावयन्।**
**अलिर्यदनयत्क्रमादमुमथैष काञ्चीपुरी-**
**मुपाक्रमत सो ऽस्य तच्छुभपरम्परासाधने।।२३।।**

गङ्गा- काञ्चीदर्शनमुपवर्णयति – **इति प्रतिसुरालयमिति** – इत्येवं प्रकारेण प्रति सुरालयं मदिरालयं मदिरालयं प्रति गमनेन अनुचिताचरणेन अहर्निशं भोगाच्च चिरदूषितम् अस्य विलासिनः मनः प्रतिसुरालयं देवालयं देवालयं प्रति गमनेन नवनवैः सूक्तिक्रमैः तीर्थमाहात्म्यभगवत्कथादिश्रावणक्रमैः पथि मार्गे पावयन् पवित्रीकुर्वन्। सुरालयशब्दस्य मदिरालये देवालये चोभयत्र सामर्थ्यात् उभयत्रान्वयः। अलिः अमुं विलासिनं यत् यस्मात् काञ्चीपुरीम् अनयत्। तत् तस्मात् एष सः अस्य विलासिनः शुभपरम्परासाधने उपाक्रमत कल्याणततीनां सिद्धौ प्रयत्नवान् अभूत्। समानवाक्यार्थयोरैक्यारोपे भवति निदर्शना। अत्र विलासिनः काञ्चीपुरीनयनशुभ-परम्परासाधनयोरैक्यारोपाद् निदर्शना। वाक्यार्थयोः सदृशयोरैक्यारोपाद् वाक्यार्थवृत्तिनिदर्शना।

**इहाम्रतरुमूलगो ददृश एककाम्रेश्वरः**
**सभक्ति नतमौलिना मुहुरनेन चाऽपूज्यत।**
**यदीयशिरसि स्थिता विकचमल्लिकामालिका**
**बिभर्ति कविभिः स्तुतां त्रिदशसिन्धुलीलां किल।।२४।।**

गङ्गा- आम्रेश्वरमहादेवदर्शनं वर्णयति- **इहाम्रतरुरिति**- इह काञ्चीपुरे आम्रतरुमूलगः आम्रवृक्षस्य अधस्तले प्रतिष्ठितः एककाम्रेश्वरः एकक एकाकी तपोमुद्रया विराजमान आम्रेश्वरमहादेवः ददृशे। नतमौलिना विनम्रशिरसा अनेन विलासिना सहितेन अलिना मुहुः बारंबारं सभक्ति भक्त्या सहितं यथा स्यात्तथा अपूज्यत पूजितोऽभवत्। यदीयशिरसि स्थिता विकचमल्लिकामालिका पुल्लमल्लिकामाला कविभिः स्तुतामादृतां त्रिदशसिन्धुलीलां त्रिदशानां देवानां सिन्धुः नदी मन्दाकिनी, तस्याः लीलां विलासं बिभर्ति धारयति। लीला विलासक्रियेत्यमरः। किलेति निश्चये। त्रिदशसिन्धुलीलाया विकचमल्लिकामालायाम् आरोपः। अन्यगतलीलाया अन्यत्र असम्भवेनाक्षेपे पर्यवसानात् पदार्थवृत्तिनिदर्शना। तथा च तल्लक्षणम्- पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्।

**कलाधरकलां वहन्स्वशिरसा व्यनक्ति ह्यसौ**
**सतामुचित आदरो द्विजपतेः शुचेः साध्विति।**
**त्रिलोकजिदपि स्मरः क्षणरुषा ऽस्य भस्मीभवन्**

**निवेदयति निश्चितां महदतिक्रमे दुर्दशाम्।।२५।।**

**गङ्गा**- द्विजादरस्यावश्यकतां प्रतिपादयति - **कलाधरकलेति** - असौ आम्रेश्वरः स्वशिरसा कलाधरकलां चन्द्रस्य कलां वहन् शिरसि धारयन्। सतां सद्भिः। कर्तृकर्मणोः कृति (पा.सू. २.३.६५) इति कर्तरि कर्मणि च षष्ठी। शुचेः पवित्रस्य द्विजपतेः ब्राह्मणश्रेष्ठस्य चन्द्रस्य वा आदरः समादरः उचितः सम्मत इति साधु सम्यक् व्यनक्ति। अस्य भगवतः शिवस्य क्षणरुषा क्षणमात्रक्रोधेन भस्मीभवन् त्रिलोकजित् अपि त्रैलोक्यस्य विजेता सन् अपि स्मरः कामः महदतिक्रमे महतां पूज्यजनानामपमाने निश्चितां दुर्दशां दुरवस्थां निवेदयति। अत्र पूर्वार्द्धे कलाधरकलां वहन् इत्यादौ द्विजपतेः आदराभिव्यक्तिबोधनात् सदर्थबोधननिदर्शना। उत्तरार्धे तु स्मरस्य शिवकोपाद् दुर्दशावर्णनाद् अनिष्टपर्यवसायिनोऽर्थस्य बोधनात् असदर्थबोधननिदर्शना।

**श्रिताखिलमनोरथान्फलति कल्पवल्ली यथा**
**न तु भ्रमरसङ्गता विजयते ऽत्र कामाक्ष्यहो।**
**दृशौ शिशिरयत्यसौ शशिकलेव नव्या नृणां**
**विभाति तु सदोदिता वरदराजकायच्छविः।।२६।।**

**गङ्गा**- कामाक्षीमाहात्म्यं वर्णयितुमुपक्रमते - **श्रिताखिलेति**- अहो इति कामाक्षीसौन्दर्यदर्शनजन्यविस्मय-वाचकमव्ययम्। अत्र अस्मिन् कामाक्षीतीर्थे श्रिता भक्तिभावेन भक्तैः आश्रिता, उपासिता शरणं प्रपन्नेति यावत्। कामाक्षी भगवती भ्रमरैः सङ्गता कल्पवल्ली यथा कल्पलता इव अखिलमनोरथान् भक्तानां निखिलाभीष्टान् फलति पूरयति। भक्तो यद्यद् वाञ्छति तत्सर्वं कामाक्षी कल्पलतेव सङ्कल्पमात्रेण पूरयति। तु किन्तु भ्रमरसङ्गता भ्रमरैर्युक्ता न भवति। कल्पवल्ली तु भ्रमरसङ्गता भवति। अथवा भ्रमरसङ्गता भ्रमस्य रसं गता अपि फलति। कल्पवल्ली कदाचित् भ्रमस्य रसं विषयतां प्राप्ता भवति न फलति च किन्तु कामाक्षी भ्रान्तिविषयतां प्राप्ता न भवति सर्वदा फलति च। अत एव कल्पवल्ल्यपेक्षया विजयते उत्कर्षेण वर्तते। भ्रमरः कामुके भृङ्गे इति मेदिनी। वरदराजकायच्छविः वरदराजस्य भगवतः शिवस्य कायस्य शरीरस्य छविः सुषमा असौ भगवती कामाक्षी नव्या शशिकला इव अभिनवज्योत्स्नेव नृणां दर्शनार्थं समागतानां भक्तानां दृशौ चक्षुषी शिशिरयति शीतलीकरोति, तु किन्तु शशिकलापेक्षया सदा उदिता उत्कर्षं प्राप्ता भवति। शशिकला तु कृष्णपक्षे क्षयात् न सदा उदिता भवति। प्रथमार्द्धे उपमानभूतायां कल्पवल्ल्यां भ्रमरसम्बन्धरूपः भ्रान्तिविषयतारूपश्च धर्मोऽधिकोऽस्ति। कामाक्ष्यां च उपमेयभूतायामुक्तधर्मद्वयस्य न्यूनता वर्तत इति श्लेषानुप्राणितः उपमेयन्यूनतापर्यवसायी व्यतिरेकः। उत्तरार्धे तु उपमानरूपशशिकलापेक्षया वरदराजशरीरसुषमाया उपमेयभूतायाः कामाक्ष्याः सदोदितेत्यनेन उत्कर्षवर्णनाद् उपमेयाधिक्यपर्यवसायी व्यतिरेकः। 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति तल्लक्षणम्।

**अथैक्षत चिदम्बरे द्रविडगे नटेशं शिवं**
**यतः सह दयादृशा ऽलभत पाणिनिर्व्याकृतिम्।**
**यदीक्षणमृते जनुर्भवति जन्मिनां निष्फलं**
**विना च्छलमदौ चकासति यदर्चने दीक्षिताः।।२७।।**

**गङ्गा**- चिदम्बरेशं वर्णयति - **अथैक्षतेति**- अथ अनन्तरं द्रविडगे द्रविडदेशस्थिते चिदम्बरे चिदम्बरक्षेत्रे नटेशं शिवं नटराजं भगवन्तं शङ्करम् ऐक्षत अपश्यत्। यतः भगवतः शिवात् पाणिनिः अष्टाध्यायीप्रणेता दयादृशा सह करुणया सह व्याकृतिं व्याकरणशास्त्रज्ञानमलभत। तथा चाभियुक्तोक्तिः -

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥

यदीक्षणमृते यस्य भगवतः चिदम्बरेशस्य दर्शनं विना जन्मिनां मनुष्याणां जनुः संसारे जन्म निष्फलं भवति, भगवद्दर्शनस्यैव जन्मफलत्वात् तद्दर्शनाभावे जन्मनो नैरर्थ्यक्यम्। दीक्षिताः शिवपूजाविधौ शास्त्रविधिना निष्णाताः यदर्चने यस्य भगवतः शिवस्य अर्चने छलमदौ विना छलेन मदेन च रहिताः चकासति प्रकाशन्ते। अत्र दयादृष्टिव्याकरणयोर्लाभे साहित्योक्तेः सहोक्तिः। पाणिनिः 'दयादृशा सह व्याकरणमलभत्।' इति दयादृष्टिव्याकरणशास्त्रलाभे साहित्योक्तिः। 'सहोक्तिः सहभावश्चेद् भासते जनरञ्जन' इति तल्लक्षणम्। 'यदीक्षणमृते जनुर्भवति जन्मिनां निष्फलम्' इत्यत्र नटेशस्य शिवस्य दर्शनं विना प्राणिनां जीवनस्य हीनत्वप्रतिपादनात् प्रस्तुतस्य हीनत्वपर्यवसायी विनोक्तिरलङ्कारः। 'विनोक्तिश्चेद् विना किञ्चित् प्रस्तुतं हीनमुच्यत' इति तल्लक्षणम्। 'विना च्छलमदौ चकासति यदर्चने दीक्षिता' इति चतुर्थचरणे छलमदौ विना प्रस्तुतानां दीक्षितानां शोभाप्रतिपादनात् प्रस्तुतशोभनत्वपर्यवसायिनी विनोक्तिः। तथा चोक्तं तल्लक्षणम् - तच्चेत् किञ्चिद् विना रम्यं विनोक्तिः सापि कथ्यते।

**इयं कुटिलगामिनी लसदनेकधाविभ्रमा**

**रुचिं विदधती नृणां बहुलसज्जवायौवने।**
**निरुध्य सुचिरं मनोभुवमुपेत्य रत्नाकरं**
**रसादभिसरत्यहो रहसि सह्यशैलाङ्गजा।।२८।।**

**गङ्गा-** श्लिष्टसाधारणोभयविधविशेषणोत्थापितां समासोक्तिं वर्णयति – **इयं कुटिलेति** – इयं पुरो विद्यमाना कुटिलगामिनी कुटिलम् ऊर्मिमद्गमनं यस्याः सा, अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम्। आविद्धं कुटिलमित्यमरः। लसदनेकधाविभ्रमा लसन्तः शोभायमाना अनेके धाविनः आवर्ताः भ्रमाश्च यस्याः सा, तादृशी उत्तालतरङ्गैः प्रवहन्ती शोभायमानविविधावर्तभ्रमा सह्यशैलाङ्गजा सह्याद्रितनया कावेरी, बहुलसज्जवायौवने बहुरत्यधिकः लसन् शोभमानः जवः वेगः यस्याः सा बहुलसज्जवा यौवने जलप्रवाहे नृणां रुचिं विदधती धारयन्ती भुवं पृथ्वीमुपेत्य मनुष्याणां मनः स्वजलधारया सुचिरं निरुध्य स्वाधीनीकृत्य रसात् स्वभावात् रत्नाकरं समुद्रम् अभिसरति गच्छतीति कावेरीपक्षेऽर्थः।

नायिकापक्षे तु – कुटिलगामिनी कुटिलं तरुणानां मनोवशीकरणाय वक्रं विलासपूर्वकं गमनं यस्याः। लसदनेकधाविभ्रमा लसन्तोऽनेकप्रकारा विभ्रमा विलासा यस्याः सा, बहुलसज्जवा यौ वने बहुलाः सज्जाः वायवो यस्मिन् तादृशे बहुलसज्जवायौ रमणयोग्ये मनोहरे वने नृणां रुचिं प्रीतिमुत्पादयन्ती तेषां मनः सुचिरं निरुध्य स्वसौन्दर्येण रसिकाणां चित्तं वशीकृत्य यद्वा मनोभुवं कामं चिरं निरुध्य कामस्य आघातं चिरं विषह्य रत्नाकरं धनिनमुपेत्य प्राप्य रसात् स्वभावात् रहसि एकान्ते अभिसरति गच्छतीत्यहो। अत्र कावेरीवृत्तान्ते वर्ण्यमाने अप्रस्तुताया अभिसारिकाया वृत्तान्तस्य प्रतीतिरिति समासोक्तिरलङ्कारः। 'समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेदिति' तल्लक्षणम्।

**पदक्रमजटाघनाद्यखिलवेदविद्योन्नताः**
**प्रमाणनिपुणाः पदे स्खलनवर्जनाद् दुर्जयाः।**
**द्विजाः सदसि सम्मताः सरसवाक्यमर्यादया**
**कलिं निजतपोबलाज्जहति कुम्भकोणे पुरे।।२९।।**

**गङ्गा-** द्विजानां वर्णनमिषेण परिकरं निरूपयति – **पदक्रमेति** – पदक्रमजटाघनाद्यखिलवेदविद्योन्नताः पदपाठक्रमपाठजटापाठघनपाठादिप्रसिद्ध-समस्तवेदसम्बन्धिविद्यासून्नता दक्षाः प्रमाणनिपुणाः गौतमप्रवर्तितन्यायविद्यापारङ्गताः पदे व्याकरणशास्त्रे स्खलनवर्जनात् दोषराहित्यात् दुर्जयाः दुःखेन जेतुं योग्याः, अपराजेया इति यावत्। वेदविद्यायां न्यायशास्त्रे व्याकरणशास्त्रे च तेषां पारङ्गतत्वाद् दुर्जयत्वं निरूपितम्। सरसवाक्यमर्यादया, सरसा मनोहारिणी वाक्यमर्यादा वाक्यशास्त्रं मीमांसेति प्रसिद्धं शास्त्रं, जैमिनिमुनिप्रवर्तिता विद्या तया, एतेन द्विजानां वेदविद्याप्रवीणानां पदवाक्यप्रमाणशास्त्र-पटुत्वं निरूपितम्। यद्वा सरसवाक्यमर्यादया सरसपदसमूहप्रयोगनिपुणतया सदसि सम्मताः सभायां समादृताः द्विजाः ब्राह्मणाः निजतपोबलात् कुम्भकोणे पुरे एतदाख्ये नगरे कलिं जहति कलिप्रभावं दूरीकुर्वन्ति। सर्वेषां विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः। तथा चोक्तं कुवलयानन्दे तल्लक्षणम्- अलङ्कारः परिकरः साभिप्राये विशेषण इति।

**यतीनथ महीपतीन्कृतमतीनतीवात्मनाऽ-**
**नुरञ्जयति सेवकानिह च रङ्गनाथश्चिरम्।**
**कवेरतनयातटोल्लसितपूततीर्थावलिं**
**विलासिनमदीदृशत्तमिति चोलभूमावलिः।।३०।।**

**गङ्गा-** रङ्गनाथवर्णनव्याजेन परिकराङ्कुरं निरूपयति – **यतीनथेति** – अथ च इह अस्मिन् श्रीरङ्गपुरे रङ्गनाथः यतीन् सन्यासिनः महीपतीन् राज्ञः कृतमतीन् विदुषः सेवकान् आत्मना स्वयं चिरम् अतीव अनुरञ्जयति आनन्दयति। इति एवम्प्रकारेण अलिः चोलभूमौ तं विलासिनं कवेरतनयातटोल्लसितपूततीर्थावलिं कवेरतनयायाः कावेर्याः आदिगङ्गेति प्रसिद्धाया राज्ञः कवेरस्य दुहितुः तटे उल्लसितां सुशोभितां पूतां पवित्रां तीर्थावलिं तीर्थसमूहम् अदीदृशत्। दृश् धातोः णिचि लुङि रूपम्। दर्शनं कारितवानित्यर्थः। कावेरीनदी राज्ञः कवेरस्य दुहिता महर्षेरगस्त्यस्य च पत्नीति पुराणेषु काचित् कथा प्रसिद्धा। हरिवंशेऽपीयं कवेरतनया प्रोक्ता –

कवेरकन्यां सर्वासां नदीनां प्रवरां शुभाम्।
अगगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम्।। (–हरिवंशपुराणे द्वितीयभागे, पृ.८६८)

रङ्गनाथत्वेन सूत्रधारतया यतीनां महीपतीनां कृतमतीनां सेवकानां च अनुरञ्जनशक्तिद्योतनात् विशेषयस्य साभिप्रायत्वात् परिकराङ्कुरः। साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुर इति तल्लक्षणम्।

**अहीनवसनाकृतिर्वहति विग्रहे भूषणा-**

**न्यहर्निशमुपास्यते जगति योदयाकाङ्क्षिभिः।**
**सदानवविभूतिभासिततनुश्च मीनाक्ष्यसौ**
**स पाण्ड्यविषये मनो हरति सुन्दरेशश्च मे।।३१।।**

**गङ्गा**– वर्ण्यानेकविषयकश्लेषेण मदुरैनगरस्थौ मीनाक्षीसुन्दरेशौ वर्णयति – **अहीनेति** – मीनाक्षीपक्षे– पाण्ड्यविषये पाण्ड्यक्षेत्रे अहीनवसनाकृतिः वसनं च आकृतिश्चेति वसनाकृती, वस्त्रस्वरूपे। अहीने हीनतारहिते उत्कृष्टे वसनाकृती यस्याः सा। धारितोत्कृष्टवस्त्रा त्रिभुवनसुन्दरीत्यर्थः। विग्रहे शरीरे भूषणानि अलङ्कारान् वहति। या मीनाक्षी उदयाकाङ्क्षिभिः, उदयं प्रभुत्वम् ऐश्वर्यं काङ्क्षन्तीति तैः, प्रभुत्वकामिभिः अहर्निशं रात्रिन्दिवमुपास्यते, शास्त्रोक्तविधिना पूज्यते। सदा नवविभूतिभासिततनुः, सदा सर्वदा नवया अभिनवया विभूत्या ऐश्वर्येण भासिता सुशोभिता तनुः शरीरं यस्याः सा असौ पुरो विद्यमाना मीनाक्षी भगवती पार्वती मे मनो हरति।

सुन्दरेशपक्षे – अवसनाकृतिः विग्रहे अहीन् भूषणानि वहति। यः जगति दयाकाङ्क्षिभिः अहर्निशम् उपास्यते। स दानवविभूतिभासिततनुः इति सुन्दरेशपक्षेऽन्वयः – अहीनवसनाकृतिः, अवसना वस्त्ररहिता आकृतिः यस्य सः। दिगम्बर इत्यर्थः। विग्रहे अहीन् भूषणानि वहति। विग्रहे शरीरे अहीन् सर्पान् भूषणानि अलङ्कारान् धारयति। यो दयाकाङ्क्षिभिः, यः सुन्दरेशः दयाकाङ्क्षिभिः करुणाकामिभिः। सदानवविभूतिभासिततनुः, सुन्दरेशः दानवानां विभूत्या भस्मना भासिततनुः अलङ्कृतशरीर इत्यर्थः। विभूतिर्भूतिरैश्वर्यमित्यमरः। भूतिर्भस्मनि सम्पदीति चामरः। नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रित इति लक्षणादत्र श्लेषालङ्कारः। मीनाक्षीसुन्दरेशयोरुभयोः वर्ण्यत्वात् वर्ण्यानेकविषयकश्लेषोऽयम्।

**समस्तवसुधातलातुलविशालदेवालयां**
**निरीक्ष्य मधुरां पुरीं विविधगोपुरैरद्भुताम्।**
**भयेनगरदाहिभिर्निरुपमानभोगैर्वृताऽ-**
**मुना सुरपुरी हृदा न चकमे च पूर्भोगिनाम्।।३२।।**

**गङ्गा**– अवर्ण्यानेकविषयश्लेषेण मधुरां पुरीं सुरपुरीं च वर्णयति – **समस्तवसुधेति**– अमुना विलासिना अलिना वा विविधगोपुरैः, विविधैः अनेकैः गोपुरैः पुरीद्वार्भिः अद्भुताम् अनितरशोभाशालिनीम्, समस्तवसुधातलातुलविशालदेवालयां समग्रे पृथ्वीतले अनुपमा विशालाश्च देवालया देवमन्दिराणि यस्यां तां मधुरां पुरीं निरीक्ष्य विलोक्य। भये नगरदाहिभिः, स्वर्गपक्षे – भये सति नगरदाहिभिः शत्रुपुरदाहकैः नभोगैः आकाशगामिभिः देवैः वृता निरुपमा पूः नगरी सुरपुरी न चकमे, न समीहिताभूत्। पातालपक्षे – गरदैः विषप्रदातृभिः अनुपमशरीरैः अहिभिः सर्पैः भयेन वृता, गरुडस्य भीत्या गुप्तस्थानावस्थितैः तेषामभीष्टत्वात्। भोगिनां पूः सर्पाणां पातालपुरी। अन्यत् समानम्। मधुरापुर्या वर्णने प्रकृते स्वर्गपातालयोः अवर्ण्यत्वाद् अवर्ण्यानेकविषयः श्लेषालङ्कारः।

**अनन्तशयनामितक्षितिधरो ऽत्र पद्मार्पणैः**
**प्रमोदजनकैरलावनिशवृद्धये सोद्यमः।**
**स्वविक्रमलवानमद्बलिशिरोनिविष्टाङ्घ्रिको**
**विभाति पुरुषोत्तमः सततमेष संसेव्यताम्।। ३३।।**

**गङ्गा**– वर्ण्यावर्ण्यानेकविषयश्लेषं निरूपयितुमाह– **अनन्तशयनेति**– अत्र केरलप्रदेशे अनन्तशयनामितक्षितिधरः, अनन्तस्य शेषनागस्य। अनन्तः केशवे शेषे पुमानिरवधौ त्रिष्विति मेदिनी। शयने पर्यङ्के अमितां भूयसीं महतीं वा क्षितिं पृथ्वीं धरतीति। केरले प्रकृतः पुरुषोत्तमोऽनन्तशयनः। पद्मार्पणैः पद्मानां सम्पदाम् अर्पणैः दानैः प्रमोदो येषां तादृशा जना यस्यां तादृशी या केरलदेशसम्बन्धिनी भूस्तस्या अनिशवृद्धये सततोन्नत्यै सोद्यमः उद्यमशीलः। एवं व्याख्याने 'केरलावनिशवृद्धये' इत्यत्र शकारस्य निरर्थकत्ववारणाय भुवोऽध्याहारः। केरल्या भुवः अनिशवृद्धये इति कवेः तात्पर्यात्। स्वविक्रमलवानमद्बलिशिरोनिविष्टाङ्घ्रिकः स्वस्य निजस्य विक्रमलवेन पराक्रमलेशेन आनमतः नतस्य बलेः शिरसि उत्तमाङ्गे निविष्टो न्यस्तः अङ्घ्रिः पादः येन सः। स्वार्थे कन्। तादृशः पुरुषोत्तमः भगवान् विष्णुः विभाति शोभते। एष एतादृशगुणविशिष्टो महिमशाली भगवान् सततं संसेव्यतां सेवाविषयः क्रियताम्। भगवान् पद्मनाभः नारायणः केरलदेशस्थः सदा त्वया सेव्य इति भावः।

अवर्ण्यस्य पुरुषश्रेष्ठस्य पक्षे– अनन्तशयनामितक्षितिधरः, अनन्ताः शयेन हस्तेन। पञ्चशाखः शयः पाणिरित्यमरः। नामिता वशीकृता जिता वा क्षितिधराः राजानः येन सः। प्रमोदजनकैः सन्तोषप्रदैः पद्मानां कमलपुष्पाणां दानैः समर्पणैः अलौ भ्रमरे विषये अनिशवृद्धये निरन्तरोन्नत्यै सोद्यमः यत्नवान्। भ्रमरस्य पेयभूतस्य मकरन्दस्य आश्रयस्य कमलस्य दानेन तत्पोषक इत्यर्थः। स्वविक्रमलवानमद्बलिशिरोनिविष्टाङ्घ्रिकः, स्वकीयेन पराक्रमलेशेन आनमतां नम्रतां गतानां बलिनां बलवतां राज्ञां शिरस्सु निविष्टः स्थापितः अङ्घ्रिः पादः येन तादृशः पुरुषश्रेष्ठश्च। अन्यत्

समानम्। वर्ण्यस्य भगवन्नारायणस्य वर्ण्यत्वात् पुरुषश्रेष्ठस्य चावर्ण्यत्वात् वर्ण्यावर्ण्यनिकविषयः श्लेषः।

**असंख्यजनुरर्जितप्रबलपापनीलीरसं**
**नदीनदसुरालयस्नपनघर्षणैः क्षालयन्।**
**प्रयाति विपुले मले ऽप्यजहतीं तनुं श्यामिकां**
**विलोक्य स विलासिनः पुनरचिन्तयच्छोधनम्।। ३४।।**

गङ्गा- कारणनिबन्धनामप्रस्तुतप्रशंसां पुरस्करोति – **असंख्येति** – नदीनदसुरालयस्नपनघर्षणैः तीर्थेषु भ्रमन् नद्यश्च नदाश्च सुरालयाश्च तेषु स्नपनैः घर्षणैश्च गङ्गादिपवित्रनदीषु स्नानैः साष्टाङ्गप्रणामैश्च, असंख्यजनुरर्जितप्रबलपापनीलीरसम् अनन्तजन्मकृतस्तेयगुर्वङ्गनासङ्गमादिमहापाप-कृष्णरसं क्षालयन् प्रक्षालयन्, दूरीकुर्वन्निति यावत्। तेन कृततीर्थयात्रानदीनदस्नानादिना विपुले महति मले पापे प्रयाति गच्छति सत्यपि श्यामिकां नानाजन्मकृतकश्मलच्छायारूपां कृष्णताम् अजहतीम् न परित्यजन्तीं तनुं शरीरम्। कृतेऽपि तीर्थादिस्नाने विलासिकृतपापैस्तद्देहनिर्मुक्तिं दृष्ट्वेत्यर्थः। स अलिः पुनः विलासिनः शोधनं शुद्धिम् अचिन्तयत् अविचारयत्। मानसिकीं शुद्धिं लब्ध्वाऽपि शरीरेणाऽयमपवित्र इति तस्य पुनः शुद्ध्युपायमविचारयदित्यर्थः। नदीनदसुरालयस्नपनघर्षणादिभिः प्रबलपापप्रक्षालनरूपस्य कार्ये प्रस्तुते तत्कारणस्य पापशोधनेच्छारूपस्य वर्णनात् कारणनिबन्धना अप्रस्तुतप्रशंसाऽलङ्कारः।

**स योजनशताधिकभ्रमणखिन्नदेहो वसन्**
**क्वचित्परिचितं पुरा प्रतिनिवृत्तमालोकयत्।**
**प्रयाणसमयासितं कृतमहाब्धिरत्नाकरे-**
**तरेतरसमागमाप्लुतिजकाञ्चनाभं नरम्।। ३५।।**

गङ्गा- विलासिनो महापापैर्निर्मलतां वर्णयति – **स योजनेति** – योजनशताधिकभ्रमणखिन्नदेहः गोमत्या आरभ्य तीर्थयात्राप्रसङ्गे बहुयोजनचलनेन पीडितशरीरः सः अलिः क्वचित् कस्मिंश्चित्तीर्थे वसन् मार्गजन्यां शरीरबाधां निवारयन् पुरा गोमतीतः प्रयाणसमयासितं तीर्थयात्रार्थं गमनकाले असितं पापनीलीरसेन कृष्णशरीरं किन्तु कृतमहाब्धिरत्नाकरेतरेतरसमागमाप्लुतिजकाञ्चनाभं महाब्धिश्च रत्नाकरश्चेति महाब्धिरत्नाकरौ। यद्यपि महाब्धिरत्नाकर-शब्दावेकार्थवाचकौ तथाप्यत्र कन्यातीर्थे समुद्रसङ्गमे मिलितयोः द्वयोः समुद्रयोः पृथक् पृथक् पदेन समानार्थवाचिना व्यपदेशः। तयोर्महाब्धिरत्नाकरयोरितरेतरसमागमे परस्परसङ्गमस्थले आप्लुतिः स्नानम्। तज्जन्या काञ्चनमिव आभा कान्तिः काञ्चनाभा। महाब्धिरत्नाकरेतरेतरसमागमाप्लुतिजन्या काञ्चानाभा यस्य सः तं प्रतिनिवृत्तं स्नानं सम्पाद्य स्वसमीपे पुनरागतं परिचितं नरं विलासिनम् आलोकयत् अपश्यत्। एतेन कन्यातीर्थस्य असंख्यजन्मार्जितप्रबलपापजन्यदेहकालुष्यप्रक्षालनवैशिष्ट्यं निर्दिष्टम्। कन्यातीर्थमाहात्म्यातिशयस्य कारणस्य वर्णने प्रस्तुते तत्कार्यस्य महापापिनो नैर्मल्यस्य वर्णनात कार्यनिबन्धना अप्रस्तुतप्रशंसा।

**परेशदयया क्वचिल्लसति पूतता ऽलौकिकी-**
**त्यवेत्य स निराशतां हृदि निरस्य भूयो ऽचलत्।**
**निदाघजनिताखिलप्रबलतापविच्छित्तये ऽ-**
**भिषिञ्चति मुहुर्महीं जलधरो ऽम्बुधाराशतैः।।३६।।**

गङ्गा- सामान्यनिबन्धनामप्रस्तुतप्रशंसां पुरस्करोति - **परेशदययेति** - परेशदयया परेशस्य परमेश्वरस्य दययाऽनुकम्पया क्वचित् तीर्थेषु अलौकिकी अपूर्वा पूतता पवित्रता लसति शोभते। पूतं पवित्रमित्यमरः। इति अवेत्य विज्ञाय स अलिः हृदि हृदये निराशतां नैराश्यं निरस्य दूरीकृत्य भूयः अचलत्। पुनः तीर्थदर्शनाय प्राचलत्। जलधरः मेघः निदाघजजनिताखिलप्रबलतापविच्छित्तये। निदाघो घर्मः। घर्मो निदाघस्वेदः स्यादित्यमरः। घर्मकारणतयोत्पन्ननिखिलप्रबलतापानां विच्छित्तये विच्छेदाय वारणाय वा महीं पृथ्वीम् अम्बुधाराशतैः मुहुः भूयोभूयः अभिषिञ्चति आर्द्रीकरोति। मेघानां पुनः पुनर्वर्षणेन निदाघजन्यमार्गश्रान्तिजनकतत्त्वानां शमनमिति पुनः स यात्रायां प्रवृत्तो बभूव। सेतुरूपस्य तीर्थविशेषस्य वर्णने प्रस्तुते तीर्थसामान्ये परेशानुग्रहजनितमाहात्म्यस्य वर्णनात् सामान्यनिबन्धना अप्रस्तुतप्रशंसा।

**दशाननजिगीषया रघुवरेण सेतौ कृते**
**व्रजन् जलधिमध्यगं सकलपापशैलस्वरुम्।**
**महेश्वरपुराहृतैरभिषिषेच गङ्गाजलै-**
**रपावयदमुं चतुर्द्विदशतीर्थतोयेषु च।।३७।।**

गङ्गा- विलासिनः पुनः पवित्रीकरणं वर्णयति- **दशाननेति** – दशाननजिगीषया दशाननस्य रावणस्य जिगीषया जेतुमिच्छया

रघुवरेण श्रीरामेण कृते सेतौ सेतुबन्धतीर्थे जलधिमध्यगं समुद्रमध्यस्थितं सकलपापशैलस्वरुम्, समस्तानां पापरूपपर्वतानां भेदने वज्रम्। निखिलकल्मषपर्वतवज्रं रामेश्वरमित्यर्थः। व्रजन् गच्छन्। शतकोटिः स्वरुः शम्बोदम्भोलिरशनिरित्यमरः। समुद्रमध्यस्थितं पापप्रक्षालकं तीर्थविशेषं रामेश्वरं गच्छन्नित्यर्थः। चतुर्द्विदशतीर्थतोयेषु च चतुरधिकानि द्विरावृतानि दश। चतुर्विंशतितीर्थजलेष्वित्यर्थः। महेश्वरपुराहृतैः भगवतः शिवस्य पुरादानीतैः गङ्गाजलैः अभिषिषेच, अभिषेकं कृतवान्। तेन अमुं विलासिनम् अपावयत् अशोधयत्।

**तमो निरसितुं भुवो भ्रमति भानुमानम्बरे**
**निरन्तरममुष्य किं फलमिह प्रकाशात्मनः।**
**इमे मधुकरा वनान्यनुसरन्ति लब्ध्वा मधु**
**प्रयत्नशतकैर्नरान् हृतगदान्विधातुं किल।।३८।।**

**गङ्गा– तमो निरसितुमिति** – भानुमान् सूर्यः भुवः पृथ्व्याः तमः अन्धकारं निरसितुं दूरीकर्तुं निरन्तरं सततम् अम्बरे आकाशे भ्रमति। अमुष्य प्रकाशात्मनः प्रकाशस्वरूपस्य इह भ्रमणे किं फलम्? न किमपीत्यर्थः। इमे मधुकराः भ्रमराः प्रयत्नशतकैः मधु लब्ध्वा पुष्परसं समवाप्य नरान् हृतगदान् रोगरहितान् विधातुं वनानि अनुसरन्ति गच्छन्ति। अत्राऽपि मधुकराणां न स्वीयः कश्चन लाभ इति। सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसा।

**निशम्य पथि गच्छतामिति वचांसि सेत्वाश्रये**
**नवीकृतमना मनाग् जलधितोयमार्गे सभीः।**
**नलाभिधबलीमुखातुलितकौशलज्ञापकं**
**विभाजकमुदन्वतोः किमपि वस्तु भक्त्यैक्षत।।३९।।**

**गङ्गा–** निशम्येति – सेत्वाश्रये सेतोः श्रीरामेण दशाननजिगीषया निर्मापितस्य आश्रये दर्शनाय गच्छतामिति वचांसि पथि मार्गे निशम्य श्रुत्वा नवीकृतमना योजनशताधिकगमनखेदस्य दूरीभूतत्वात् प्रसन्नमना जलधितोयमार्गे समुद्रजलपथि किञ्चिद् भीतः उदन्वतोः समुद्रयोः। उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः इत्यमरः। विभाजकं भेदकं नलाभिधबलीमुखातुलितकौशलज्ञापकं, नलनामकवानरस्य नैपुण्यातिशयप्रदर्शकम्। कपिप्लवङ्गप्लवगशाखामृगबलीमुखा इत्यमरः। रामसेनाया उदधितरणाय नलाभिधवानरेण सेतुर्निर्मित इति रामायणे प्रसिद्धिः। किमपि वस्तु सेत्वाख्यमपूर्वं वस्तु भक्त्या, भगवता रामेण निर्मापितत्वात् भक्तिभावेन ऐक्षत अपश्यत्। रत्नाकरमहोदध्योर्मध्यस्थो नलाख्यकपेः कौशलस्य अनुमापको हि सेतुरेव। तस्य च सेतोः रूपान्तरेण कथनात् पर्यायोक्तमलङ्कारः। तल्लक्षणं च – पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्।

**श्रमेण पदमप्यहं न चलितुं क्षमे तद्भवान्**
**समानयतु राघवेष्वसनकोटितीर्थाज्जलम्।**
**छलादिति विलासिनं जलधिसङ्गमे स्नापयन्**
**निनाय कृतकृत्यतां प्रमुदितः प्रतस्थे ततः।।४०।।**

**गङ्गा–** श्रमेणेति – अहम् अलिः श्रमेण योजनशताधिकगमनजन्यश्रान्त्या पदम् अपि चलितुं न क्षमे, एकमपि पदमग्रे गन्तुं न शक्नोमि। तत् तस्मात् मम श्रान्तिकारणात् भवान् विलासी राघवेष्वसनकोटितीर्थात्, रामधनुर्बाणकोटितीर्थात् जलं समानयतु। इत्येवमुक्त्वा छलात् कपटात्। अश्रान्तोऽपि श्रान्तिमिषेण विलासिनः प्रेषणात्। जलधिसङ्गमे समुद्रसङ्गमे तं विलासिनं स्नापयन् कृतकृत्यतां कृतार्थतां निनाय नीतवान्। ततः तस्मात् स्थानात् प्रमुदितः सन् प्रतस्थे प्रस्थानमकरोत्। अन्यतीर्थदिदृक्षयाऽन्यत्र प्राचलत्। व्याजेन परेष्टसाधनरूपं पर्यायोक्तम्।

**विहाय रजताचलं निवसता ऽत्र गोकर्णके**
**दयामघिषु तन्वता ऽलमविवेकिना शम्भुना।**
**इमे सुचतुरा नृपाश्चिरमुपाश्रिता ये ऽर्थिभिः**
**विभाव्य लघु दूषणं सपदि तान् बहिष्कुर्वते।।४१।।**

**गङ्गा–** विहाय रजताचलमिति – रजताचलं धवलं कैलासपर्वतं विहाय अत्र गोकर्णके तीर्थे निवसता निवासं कुर्वता अघिषु पापिषु दयां तन्वता करुणां कुर्वता अविवेकिना विवेकरहितेन शम्भुना शिवेन अलं पर्याप्तम्। तद्विषये बहु न विचारणीयमित्यर्थः। रजताचलपरित्यागपूर्वकं गोकर्णके वासोऽपि अविवेकस्यैव फलम्। पुनश्च पापिषु दयाभावप्रदर्शनमिति ततोऽप्यधिकमविवेकशालिता। इमे लोके विद्यमानाः अर्थिभिः उपाश्रिताः याचकैः सादरं पूजिताः सुचतुराः नृपाः सन्ति ये लघु दूषणं विभाव्य, क्षुद्रमपि दोषं ज्ञात्वा। अर्थिनामिति शेषः। तान् अर्थिनः सपदि शीघ्रमेव बहिष्कुर्वते दूरीकुर्वन्ति, न तु शिववत्तान् करुणया पूरयन्तीति। 'दयामघिषु तन्वताऽलमविवेकिना शम्भुना' इत्यत्र निन्दया स्तुत्यभिव्यक्तिरूपा व्याजस्तुतिः। 'विभाव्य लघु दूषणं सपदि तान् बहिष्कुर्वते' इत्यत्र च निन्दाभिव्यक्तिरूपा व्याजस्तुतिः।

**स एव भुवि निन्द्यतां सृजति यो नरान्नास्तिकान्**
**समाधिरुपशिक्ष्यतामलमनेन वेशे स्थिते।**
**धनं हरत शर्मणे क इह दृष्टवान् दुर्गती-**
**रितीह वदतो नरानभिनन्द गूढाशयान्।।४२।।**

**गङ्गा-** स एव भुवीति - यः नरान् नास्तिकान् सृजति करोति स एव नास्तिकत्वोत्पादनदोषात् भुवि पृथ्व्यां निन्द्यताम् अवमन्यताम्। समाधिः साधनानुष्ठानविशेषः उपशिक्ष्यतां पाठ्यताम्। समाधेरभ्यासो वा कार्यताम्। ईशे स्थिते वा, ईशः भगवान् शिवः तस्मिन् स्थिते अनेन कथनेन अलम्। न किमपि क्रियतामित्यर्थः। शर्मणे कल्याणाय सुखाय वा धनं हरत। स्यादानन्दथुरानन्दशर्मशातसुखानि चेत्यमरः। इह संसारे दुर्गतीः दुरवस्थाः कः दृष्टवान्? न कोऽपीत्यर्थः। इह इति एवम्प्रकारेण वदतः कथयतः गूढाशयान् गूढाभिप्रायान् नरान् अभिनन्द पूजयामास। 'स एव भुवि निन्द्यतां सृजति यो नरान्नास्तिकान्' इत्यत्र निन्दया निन्दाभिव्यक्तिरूपा व्याजनिन्दा। 'समाधिरुपशिक्ष्यतामलमनेन वेशे स्थिते' इत्यत्र स्वयमुक्तस्य प्रतिषेधरूप आक्षेपः। आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणादिति तल्लक्षणम्। 'धनं हरत शर्मणे क इह दृष्टवान् दुर्गतीः' इत्यत्र विधिना निषेधावगमनरूप आक्षेपः। निशेधाभासमाक्षेपं बुधः केचन मन्वत इति लक्षणात्।

**न वन्द्यहमुमापतेः कुरु यथेप्सितं किन्त्वयं**
**सकृत्प्रणतिमात्रतो वितरतीह मुक्तिं शिवः।**
**अगे प्रणयमाश्रयन्नपि बिभर्ति नागे रुचिं**
**जनैरिति नुतं शिवं बहु ननाम गोकर्णगम्।।४३।।**

**गङ्गा-** न वन्द्यहमिति - अहम् अलिः उमापतेः शिवस्य वन्दी न स्तुतिपाठकः नास्मि। वन्दिनः स्तुतिपाठकाः इत्यमरः। यथेप्सितं यथेच्छं कुरु, यथेच्छकार्यं सम्पादयेत्यर्थः। किन्तु अयं शिवः इह गोकर्णतीर्थे सकृत् एकदैव कृतात् प्रणतिमात्रतः प्रणामभावतः मुक्तिं मोक्षाख्यपुरुषार्थं वितरति। सांसारिकजन्ममरणपारवाश्याद् मोचयति। तत्कृते योगिन आजीवनं व्रततपश्चर्यादिकमनुतिष्ठन्ति किन्त्वयं एकवारं कृतेन नमस्कारमात्रेण भवबन्धनान्मोचयतीत्यर्थः। अयं शिवः अगे पर्वते प्रणयं प्रीतिम् आश्रयन् धारयन्नपि अगे पर्वते रुचिं प्रीतिं न विभर्तीति विरोधः। नागे हस्तिनि सर्पे वा रुचिं प्रीतिं धारयतीति विरोधपरिहारः। शिवस्य नागाजिनधारणं सर्पमालाधरणं वा पुराणेषु प्रसिद्धम्। इति जनैः नुतं नमस्कृतं गोकर्णगं शिवं वहु ननाम नमश्चकार। शैलवृक्षौ नगावगावित्यमरः। गजेऽपि नागमातङ्गावित्यमरः। न वन्द्यहमुमापतेरित्यादौ प्रथमचरणे निषेधेन विध्यभिव्यक्तिरूप आक्षेपः। आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहतीति तल्लक्षणम्। अगे प्रणयमाश्रयन्नपि विभर्त्ति नागे रुचिमित्यत्र विरोधाभासः। 'आभासत्वे विरोधस्य विरोधाभास इष्यत' इत्युक्तं कुवलयानन्दे तल्लक्षणम्।

**तमो व्यनशदाश्वितो रविमृते प्रभासङ्गता-**
**दनौषधवराप्लवादिह शशी विमुक्तः क्षयात्।**
**अथैष समलोकयत्प्रणतमुक्तिदां द्वारकां**
**सुरोचितसुखं नरैरपि यदाश्रितैर्भुज्यते।।४४।।**

**गङ्गा-** तमो व्यनशदिति - इतः गोकर्णतीर्थात् प्रभासङ्गतात् भगवतः शिवस्य तेजः समन्वयात्। रविम् ऋते सूर्यं विना आशु शीघ्रं तमः अन्धकारः व्यनशत् विनष्टमभूत्। इह अस्मिन् तीर्थे अनौषधवराप्लवात् न औषधवरं भेषजश्रेष्ठं तस्मिन्नाप्लवात् स्नानात्। न औषधवराप्लवादित्यनौषधवराप्लवात्। औषधश्रेष्ठसेवनं विनैव। भेषजौषधभैषज्यान्यगदो जायुरित्यपीत्यमरः। शशी चन्द्रः क्षयात् क्षयरोगात् विमुक्तः। अथ अनन्तरमेष अलिः प्रणतमुक्तिदां प्रणतेभ्यो विनतेभ्यो मुक्तिं मोक्षाख्यपुरुषार्थं ददातीति प्रणतमोक्षदा, तां द्वारकां समलोकयत्। यदाश्रितैः यस्यां द्वारकानगर्यामाश्रितैः नरैः अपि सुरोचितं देवयोग्यं सुखं भुज्यते प्राप्यते। रविमृते तमो व्यनशदिति वर्णनात् कारणाभावेऽपि कार्योत्पत्तिरूपा विभावना। तथा च तल्लक्षणम् - विभावना विनापि स्यात् कारणं कार्यजन्म चेत्। अनौषधवराप्लवादित्यादौ हेतूनामसमग्रतायामपि शशिनः क्षयाद् विमुक्तिरूपस्य कार्यस्य वर्णनात् हेतूनामसमग्रत्वेऽपि कार्योत्पत्तिरूपा विभावना। सुरोचितसुखं नरैरपि यदाश्रितैर्भुज्यत इत्यादौ प्रतिबन्धकस्यत्त्वेऽपि कार्योत्पत्तिरूपा विभावना। कार्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके इति लक्षणात्।

**विमोचयति संसृतेः स यमलार्जुने संयतो ऽ-**
**प्यतीव विशदं यशस्तनुत एष कृष्णो ऽपि सन्।**
**इतो ऽजनि पितामहो वटदले शयानाच्छिशो-**
**र्गुणानिति गृणन् हरेर्व्यतरदत्र पुष्पाञ्जलीन्।।४५।।**

**गङ्गा-** विमोचयतीति – स बालरूपो भगवान् श्रीकृष्णः यमलार्जुने संयतः बद्धः अपि संसृतेः संसाराद् विमोचयति। भक्तानिति शेषः। एष कृष्णः सन् अपि कृष्णवर्णो भूत्वा अपि अतीव अतिविस्तृतं यशः कीर्तिं तनुते। वटदले शयनादितः कृष्णात् शिशोः पितामहः ब्रह्मा अजनि जन्म अलभत। इत्येवम्प्रकारेण अत्र द्वारकायां हरेः भगवतः श्रीकृष्णस्य गुणान् गृणन् उच्चारयन्। गृशब्दे इति धातोः शतृप्रत्यये रूपम्। पुष्पाञ्जलीन् श्रद्धया पुष्पानामञ्जलीन् भगवतश्चरणयोः व्यतरत् समार्पयत्। 'विमोचयति संसृतेः स यमलार्जुने संयतः' इत्यत्र अकारणात् कार्योत्पत्तिरूपा विभावना 'अतीव विशदं यशस्तनुत एष कृष्णोऽपि सन्' इत्यत्र विरुद्धात् कार्योत्पत्तिरूपा विभावना। 'इतोऽजनि पितामहो वरदले शयानाच्छिशोः' इति कार्यात् कारणोत्पत्तिरूपा विभावना।

**हृते ऽग्रजनिहाटके गुरुवराङ्गनासङ्गमे**
**कृते ऽपि वदने ऽर्पिते ऽपि च सुराघटे मानवैः।**
**हते द्विजशते ऽपि यत्सलिलसेविभिर्नाप्यते**
**कदा ऽपि यमयातना ऽगमदथैष तत्पुष्करम्।। ४६।।**

**गङ्गा-** पुष्करस्य पञ्चमहापातकमोचनमाहात्म्यं निरूपयति – **हृतेऽग्रजेति** – मानवैः अग्रजनिहाटके अग्रजनेः विप्रस्य हाटकं स्वर्णः। विप्रस्वर्णचौर्येऽपि। स्तेयं पञ्चमहापातकेषु परिगणितम्। तत्रापि ब्राह्मणस्वर्णहरणं महत्पापकारीति कविनाऽत्राग्रजनिशब्दः प्रायोजि। तथा च पञ्चमहापातकानि मनूक्तानि –

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥

एतान्येव अत्र कविना प्रतिपादितानि। गुरुवराङ्गनासङ्गमे कृते अपि गुरुपत्न्या सह सम्भोगसम्पादने अपि, सुराघटे वदने अर्पिते अपि, द्विजशते हते अपि, यत्सलिलसेविभिः यस्य पुष्करस्य जलसेविभिः यमयातना यमप्रदत्तपीडा न आप्यते। तज्जलसेवनेन सर्वपापेभ्यः मुक्तिः भवति। अथ द्वारकादर्शनानन्तरम् एष अलिः तत् पुष्करं तीर्थश्रेष्ठम् अगमत् अगच्छत्। पञ्चमहापातकेषु परिगणितानि पातकानीह सविशेषेण प्रतिपादितानि पुष्करमहत्त्वख्यापनायेति। हाटके हृते कथञ्चिन्मुक्तिर्न किं पुनः विप्रहाटकहरणेन। गुर्वङ्गनासमागमजन्यपापं कथञ्चित् प्रायश्चित्तादिभिः शमयितुं शक्यते न पुनः गुरुवराङ्गनासमागमः। सुरापानजन्यपापं मर्षणीयं भवेन्न पुनः सुराघटे वदनार्पणम्। ब्रह्महत्या कथञ्चित् शमनयोग्या भवेन्न पुनः ब्राह्मणशतवधः। एतानि महापातकेभ्योऽपि बृहत्तमानि पापानि पुष्करसलिलसेवनेन विनश्यन्तीति हि कवेरभिप्रायः। कारणे सत्यपि कार्यानुत्पत्तिरूपा विशेषोक्तिः। कार्याजनिर्विशेषोक्तिः सति पुष्कलकारण इति तल्लक्षणम्।

**यदम्बुकणिका दहेदखिलपातकानीति कै-**
**रबोधि तदुदाहृतिर्वहति यत्र शिप्रा नदी।**
**य आश्रयदवन्तिकां पितृगणो ऽस्य नाके ऽवसत्**
**जिगीषुरलकामियं सुरपुरीं श्रिया ऽत्यक्रमीत्।।४७।।**

**गङ्गा-** असम्भवालङ्कारमिषेण उज्जयिनीं वर्णयति – **यदम्बुकणिकेति** – यदम्बुकणिका यस्याः जलबिन्दुः अखिलपातकानि निखिलान्यपि जन्मजन्मातरकृतानि ब्रह्महत्यादीनि पापानि दहेत् भस्मीभावं नयेत् इति कैः अबोधि न कैरप्यज्ञायीत्यर्थः। तदुदाहृतिः यदम्बुकणिकामात्रेण निखिलपतकानि ह्रियन्ते तस्या उदाहृतिः उदाहरणभूता यत्र शिप्रा नदी वहति सा महाकालेश्वरनगरी उज्जयिनी विद्यते। यः अवन्तिकाम् उज्जयिनीम् आश्रयत् सर्वतो भावेन तस्या आश्रयणमकरोत्, अस्य पितृगणः पितृपितामहादिपूर्वजाः सर्वपापविनिर्मुक्तः सन् नाके स्वर्गे अवसत्। पापिनां नरके निवासः, पुण्यकृतां च स्वर्गे। इयम् उज्जयिनी श्रिया शोभया सम्पत्त्या च अलकां कुबेरपुरीं जिगीषुः जेतुमिच्छुः सुरपुरीम् अत्यक्रमीत् जिगाय। यदम्बुकणिकेत्यादौ अर्थनिष्पत्तेः असम्भाव्यत्वरूपोऽसम्भवः। तथा च तल्लक्षणम्- असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्। य आश्रयदवन्तिकामित्यादौ कार्यहेत्वोर्भिन्नदेशत्वरूपाऽसङ्गतिः। विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिरिति तल्लक्षणम्। जिगीषुरलकामियमित्यादौ अन्यत्र करणीयस्य अन्यत्र करणरूपाऽसङ्गतिः। अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सेति तल्लक्षणम्।

**समर्च्य विधिना महोपपदमत्र कालेश्वरम्**
**प्रहर्षयितुमाप्लुतान्सुरभिनर्मदां नर्मदाम्।**
**वगाह्य समहेश्वरप्रणवनाथपूजाविधेः**
**परं मथुरयोत्सुको निरगमत्ततो ऽसावलिः।। ४८।।**

**गङ्गा-** महाकालेश्वरपूजनं वर्णयति – **समर्च्येति** – असौ तीर्थयात्रायां प्रवृत्तोऽलिः महोपपदं कालेश्वरं महाकालेश्वरमित्यर्थः। उज्जयिन्यां महाकालेश्वरो द्वादशज्योतिर्लिङ्गेष्वन्यतमः। तं महाकालेश्वरं विधिना शास्त्रोक्तनियमेन विविधोपचारैः सम्पूज्य आप्लुतान् स्वजले भक्त्या

स्नातान् प्रहर्षयितुम् आनन्दयितुं सुरभिनर्मदां निखिलपापशमनपूर्वकं सुगन्धिं परीहासं क्रीडां सकलं सुखं वा ददातीति सुरभिनर्मदा ताम्। नर्मदां प्रसिद्धां रेवानदीं वगाह्य आलोड्य भागुरिमते अवोपसर्गस्य अकारलोपः। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्युक्तेः। समहेश्वरप्रणवनाथपूजाविधेः महेश्वरेण महाकालेन सहितस्य प्रणवनाथस्य भगवतः ओङ्कारेश्वरस्य नर्मदा तटे प्रतिष्ठितस्य पूजाविधेः परं मधुरया शुचिनगर्या उत्सुकः स्वस्मरणमात्रेण मथुरया उत्सुकीकृतः ततः उज्जयिनीतः निरगमत् निरगच्छत्। अन्यत् कर्तुं प्रवृत्तस्य तद्विरुद्धकरणरूपा असङ्गतिः। नर्मणा प्रत्युत कोपसम्भवात्।

**क्व कालियमहाफणी क्व मधुरो यशोदासुतो**
**निहन्तुममुमुद्यतः स निरवास्यत स्वह्रदात्।**
**अयं हलिसखो वशे ऽकुरुत कौशलेनाङ्गनाः**
**सुयुक्त इह माधवे सुमनसां विकासः परः।।४९।।**

**गङ्गा–** क्व कालियेति – कालियमहाफणी क्व? कालिय इत्याख्यः पुराणप्रसिद्धः महाफणी महासर्पः क्व? कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणीत्यमरः। महदिति पदेन तस्य शक्तिमत्तां भयोत्पादकतां विशालतां विषाधिक्यादिकं द्योतयति। क्वेत्याक्षेपे। मधुरः – शोभनः। त्रैलोक्यसुन्दरः कोमलः स्वल्पवया इति यावत्। यशोदासुतः श्रीकृष्णः क्व? मधुरौ स्वादुशोभनाविति व्याडिः। अमुं मधुरं यशोदासुतं निहन्तुमुद्यतः स महाफणी कालियः स्वह्रदात् अगाधजलात्। तत्रागाधजलो ह्रद इत्यमरः। निरवास्यत निस्सारितोऽभवत्। अयं हलिसखः हलिनो बलरामस्य सखा मित्रम्। राजाहः सखिभ्यष्टच् (पा. ५.४.९१) इत्यनेन टचि रूपम्। बलरामस्य बन्धुरित्यर्थः। कौशलेन वशीत्वादनादिनैपुण्येनेत्यर्थः। अङ्गनाः गोपीः वशीकुरुत वशीकृतवान्। इह मथुरायां माधवे श्रीकृष्णे मासविशेषे वा। दामोदरो हृषीकेशः केशवो माधवः स्वभूः इत्यमरः। वैशाखे माधवो राध इति चामरः। सुयुक्तः सुष्ठु योजितः सुमनसां सज्जनानां पुष्पाणां वा परः उत्कर्षशाली विकासः भवति। माधवं श्रीकृष्णं प्राप्य सज्जनानां, माधवं वैशाखं च प्राप्य पुष्पाणां विकासो भवति। सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोरिति मेदिनी। 'क्व कालियमहाफणी क्व मधुरो यशोदासुत' इत्यत्र अननुरूपघटनारूपं विषमम्। 'निहन्तुममुमुद्यतः स निरवास्यत स्वह्रदात्' इत्यत्र अनिष्टाप्तिरूपं विषमम्। अयं हलिसख इत्यादौ तृतीयचरणे विरूपकार्योत्पत्तिरूपं विषमम्। 'सुरूप इह माधव' इत्यादौ चतुर्थचरणे अनुरूपपाटनारूपं समम्।

**अमुष्य यमुनातटोद्भवतयोचिता कृष्णता**
**पदार्थ्यलभतामुतः स सहसा ऽऽपदं पौण्ड्रकः।**
**बलेः सदसि वामने ऽजनि जगत्त्रयक्रान्तये**
**पुरा ऽयमिति तुष्टुवे स मथुरापुरे श्रीपतिम्।।५०।।**

**गङ्गा–** अमुष्येति – यमुनातटोद्भवतया यमुनायास्तटे जातत्वात् अमुष्य श्रीकृष्णस्य कृष्णता कृष्णत्वम् उचिता। कृष्णजलाया यमुनायास्तटे जातत्वादस्य कृष्णत्वमुचितम्। सारूप्यादित्यर्थः। अमुतः श्रीकृष्णात् सः पदार्थी पदस्य वासुदेवपदस्य अर्थी कामी पौण्ड्रकः सहसा आपदं विपत्तिमलभत प्रापत्। अयं श्रीकृष्णः जगत्त्रयक्रान्तये त्रैलोक्यस्यातिक्रमणाय बलेः सदसि बलेः गृहे वामनः अजनि जातः। अयं बलिः पुरा मथुरापुरे श्रीपतिं विष्णुं तुष्टुवे पुपूज। श्रीमद्भागवतादौ सेयं वामनकथा वर्णिता। 'अमुष्य यमुनातरोद्भवतया' इति प्रथमचरणे सरूपकार्योत्पत्तिरूपं समम्। 'पदार्थ्यलभतामुतः' इति द्वितीयचरणे इष्टावाप्तिरूपं समम्। पौण्ड्रको राजा वासुदेवपदं स्वगतं कामयमानः कृष्णात् आपदं प्रापेति पुराणेषु प्रसिद्धम्। पदं प्रापेति श्लेषेणेवेष्टावाप्तिः। 'बलेः सदसि' इत्यादौ फलप्राप्तये तद्विपरीतप्रयत्नारम्भरूपं विचित्रम्। तथा च तल्लक्षणम् – विचित्रं तत्प्रयत्नश्चेद् विपरीतः फलेच्छया।

**अथोदितसरस्वतीजलरुचिः कुरुक्षेत्रगो**
**व्यलोकयत तान् ह्रदान् हसितवारिधीन् येष्वहो।**
**समस्तनृपविग्रहक्षरितशोणितौघः पुरा**
**ममौ न तु ममौ यशो भृगुभटस्य भूमण्डले।।५१।।**

**गङ्गा–** अथोदितेति – अथ अनन्तरम्। उदितसरस्वतीजलरुचिः उदिता उत्पन्ना सरस्वतीजले रुचिः स्पृहा यस्य स उदितसरस्वतीजलरुचिः। अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियामित्यमरः। कुरुक्षेत्रगः कुरुक्षेत्रतीर्थं प्राप्तः स अलिः हसितवारिधीन् हसितस्तिरस्कृतः वारिधिः समुद्रः यैस्तान् ह्रदान् अगाधजलाशयान् व्यलोकयत् अपश्यत्। येषु ह्रदेषु पुरा समस्तनृपविग्रहक्षरितशोणितौघः सर्वेषां राज्ञां शरीरात् निस्सृतः रक्तस्य वेगः ममौ ममे। सन्निविष्टोऽभूत्। तैर्ह्रदैः स रक्तवेगः मापितः किन्तु भृगुभटस्य परशुरामस्य तद्वधजन्ययशः भूमण्डले न ममौ। भूमण्डले परशुरामयशोमापनयोग्यता न बभूव। तद्यशो भूमण्डलाद् बहिरागतमित्यर्थः। 'समस्तनृपविग्रहक्षरितश्पेणितौघः पुरा ममौ' इत्यादौ आधाराधिक्यरूपमधिकम्। न तु ममौ यशो भृगुभटस्य भूमण्डले' इत्यत्र

आधेयाधिक्यरूपमधिकम्। अधिकं पृथुलाधारादाधेयाधिक्यवर्णनमिति तल्लक्षणम्।

**तनूकृतमपि क्रमादघमसंख्यतीर्थाटना-**
**न्मनो ऽत्यणु विलासिनो न खलु वोढुमत्राशकत्।**
**अघक्षपणतो नरानुपकरोति तीर्थव्रजो**
**ह्यमी तमुपकुर्वते विकलुषा यशःख्यापनात्।।५२।।**

**गङ्गा**- तनूकृतमिति - क्रमात् क्रमानुसारेण। गोमत्या आरभ्य कुरुक्षेत्रं यावत् क्रमशः असंख्यतीर्थाटनात् असंख्येयु गणयितुमयोग्येपु तीर्थेपु अटनात् भ्रमणात्। तनूकृतं किञ्चिन्निर्बलीकृतम्। तीर्थाटनजन्यपुण्यप्रभावाल्लघूकृतमित्यर्थः। अपि अघं पापं विलासिनः अत्यणु अतिसूक्ष्मं मनः खलु वोढुं धारयितुं न अशकत्, न समर्थमभूत्। तनूकृतमपि तदघं मनोवदणु नासीत्। अतो मनस्तद्धारणेऽसमर्थमभूत्। अत्र लोके तीर्थव्रजः तीर्थसमूहः अघक्षपणतः पापविनाशनतः नरान् मनुष्यान् उपकरोति। विकलुषाः कालुष्यरहिता अघरहिता वा अमी मानवाः यशः ख्यापनात् तीर्थव्रजमुपकुर्वते। तीर्थगमनेन विगतकल्मषा मानवाः तस्य तीर्थस्य गुणगानं कुर्वन्ति यत्तत्र गमनेन मम कालुष्यं गतमिति तीर्थयशो विस्तार एतेन भवति लोके। 'मनोऽत्यणु' इत्यादौ आधेयादाधारस्य सूक्ष्मतारूपमल्पम्। 'ह्यमी तमुपकुर्वते' इत्यादौ अन्योन्योपकाररूपमन्योन्यम्।

**हृदोऽप्यथ बलाद्धृता प्रयततीर्थदेवार्चनैः**
**कथास्ववसदीश्वरश्रुतिवचस्स्वविश्वासिता।**
**स दिक्षु च विदिक्षु चाप्यध उपर्यपश्यत्प्रभुं**
**निरास दुरितं व्रतैः सुकृतमाप चानुत्तमम्।।५३।।**

**गङ्गा**- हृदोऽप्यथेति - अथ प्रयततीर्थदेवार्चनैः प्रयतानां पवित्राणां तीर्थानां देवानां च अर्चनैः षोडशोपचारादिशास्त्र-विहितनियमानुसारिपूजनैः। पवित्रः प्रयतः पूत इत्यमरः। हृदः अपि बलात् हृता हृदयादपि बलाद् दूरीकृता ईश्वरश्रुतिवचस्सु अविश्वासिता ईश्वरे श्रुतिवचस्सु च विलासिनोऽविश्वासिता अप्रत्ययः। पूर्वं चार्वाकबौद्धजैनादिरूपेण स ईश्वरं श्रुतिवचांसि च नैवामन्यत किन्तु सम्प्रति तीर्थाटनेन तत्र तस्याविश्वासिता हृदयाद् बलान्निःसारिता। सम्प्रति सा अविश्वासिता न तस्य हृदये अपितु कथाम् अवसत्। कथाशेषतां गतेत्यर्थः। जनानां मुखे एषा कथा भवति यदयं विलासी पूर्वम् ईश्वरे श्रुतिवचस्सु च श्रद्धावान् न आसीदिति। इदानीं स विलासी दिक्षु प्राच्यादिचतसृषु दिक्षु अग्न्यादिविदिक्षु अधः उपरि अपि सर्वत्र प्रभुम् ईश्वरमपश्यत्। एक एव स ईश्वरः सर्वत्र व्याप्तस्तेन दृष्ट इति भावः। स विलासी व्रतैः धर्मशास्त्रोक्तव्रताचरणैः दुरितं पापं निरास बहिरकरोत्। कलुषं वृजिनैनोघमंहोदुरितदुष्कृतमित्यमरः। अनुत्तमं नास्त्युत्तमं यस्मात् तदनुत्तमं तादृशं सुकृतं पुण्यं च आप प्राप। स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष इत्यमरः। 'कथास्ववसद्' इत्यादौ प्रसिद्धाधरं विना आधेयवर्णनरूपो विशेषः। 'स दिक्षु च विदिक्षु च' इत्यादौ एकस्यानेकत्र युगपदवस्थानरूपो विशेषः। 'निरास दुरितं व्रतैः सुकृतमाप चानुत्तमम्' इत्यत्र एकप्रयत्नेन अनेकफलसम्पादनरूपो विशेषः।

**विभेत्यलस आस्तिकः स्फुरति तीर्थसेवाश्रमात्**
**सुखाय न बहिर्जडो व्रजति याति तस्मै सुधीः।**

**विनश्यति मलं सतां प्रयततीर्थसंसेवना-**
**दनेन मतिरेधते स्फुरति तेन च ब्रह्म तत्।।५४।।**

**गङ्गा-** विभेत्यलस इति - अलसः आलस्ययुक्तो जनः बिभेति। तीर्थयात्रादौ मार्गश्रमादिभिया तन्मनो न प्रवर्तत इत्यर्थः। आस्तिकः श्रुतिवचनतीर्थसेवादौ श्रद्धावान् जनः तीर्थसेवाश्रमात् तीर्थानां गमनदर्शनपूजनादिश्रमात् स्फुरति पापादिरहितो भवति। जडः मूर्खः सुखाय बहिः गृहात् बहिः न व्रजति न गच्छति किन्तु सुधीः विद्वान् पुरुषः तस्मै सुखाय बहिः तीर्थादिषु याति। प्रयततीर्थसंसेवनात् पवित्रतीर्थानामर्चनात् सतां सज्जनानां मलं पापावरणं विनश्यति दूरीभवति। अनेन तीर्थादिसंसेवनेन मतिः बुद्धिः एधते वृद्धिं याति। सदसद्विवेके क्षमा भवतीत्यर्थः। तेन च तद् ब्रह्म स्फुरति, श्रुतिषु तत्पदवाच्यं ब्रह्म स्फुरतिं स्फुरितं भवति। 'बिभेत्यलस' इत्यादौ प्रथमचरणे एककार्यसम्पादकस्य तद्विरुद्धकार्यार्थमुपादानरूपो व्याघातः। स्याद् व्याघातोऽन्यथाकारि तथाकारि क्रियते चेदिति कुवलचानन्दे तल्लक्षणमुक्तम्। द्वितीयचरणे विरुद्धस्य सौकर्योपनिबन्धनरूपो व्याघातः। तृतीयचतुर्थचरणयोः पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुत्वात् कारणमाला।

**सदागमवदो गुरुः सुमतिदश्च साध्वागमः**
**सदाचरणकृन्मतिर्नियतमैक्षि काश्मीरके।**
**अतो मनसि तत्स्पृहा तदपि नेत्रयोरग्रत-**
**स्तदाविरभवद्रयादिह च सिद्धिदा शारदा।।५५।।**

**गङ्गा-** सदागमवद इति - तेन अलिना काश्मीरके किं किमैक्षि दृष्टम्? सदागमवदः सदागमान् सच्छास्त्रान् वदति व्याख्यातीति सदागमवदः तादृशो गुरुः। स आगमः कीदृशः? सुमतिदः साध्वागमः सुमतिम् अज्ञानं निरस्य सद्बुद्धिं ददाति सन्मार्गे नयतीति सुमतिदस्तादृशः सध्वागमः सदागमः। अपि च सदाचरणकृन्मतिः सदाचरणं शास्त्रोक्तयज्ञयागादिकं करोतीति सदाचरणकृत् तादृशी मतिः च तेन अलिना काश्मीरके कश्मीरसम्बन्धिप्रदेशेषु नियतम् ऐक्षि अदर्शि। अतः मनसि तत्स्पृहा कश्मीरदर्शनेच्छाऽभवत्। तदपि तत् काश्मीरकमपि नेत्रयोश्चक्षुषोः अग्रतः अभूत्। इह कश्मीरे तदा तस्मिन् काले रयात् वेगात् सिद्धिदा शारदा आविरभवत् प्रकटिताऽभूत्। दृष्टिपथमागतेत्यर्थः। प्रथमद्वितीयचरणयोः गृहीत-मुक्त-रीत्या अर्थनिबन्धनरूपा एकावलिः। तृतीयचतुर्थचरणयोः दीपकैकावलीयोगाद् मालादीपकम्।

**चकास्ति भुवि भारतं विलसतीह काश्मीरकं**
**सदा विजयते ऽत्र सा सरससूक्तिदा शारदा।**
**धनैः सुभगवाक्क्रमैः सुरभिकुङ्कुमैर्भूरियं**
**जिगाय हि सदा ऽलकामथ सुधां च कस्तूरिकाम्।।५६।।**

**गङ्गा-** चकास्तीति - भारतं भारतदेशः भुवि पृथ्व्यां चकास्ति अनितरसाधारणसुषमया विद्यया सदुपासनया आध्यात्मिकचिन्तनेन च शोभते। इह तादृशे भारते काश्मीरकं कश्मीरदेशः विलसति शोभते। अत्र काश्मीरके सरससूक्तिदा सरसा रसोन्नताः सहृदयमनोहारिण्यः सूक्तीः काव्यावलीः ददातीति। महाकवित्वप्रदात्रीति यावत्, तादृशी शारदा सदा विजयते। विद्वद्भिरुपासितेति यावत्। अस्या नाम्नैव अयं देशः शारदादेशनाम्नाऽपि प्रसिद्धिमलभत। इयं हि भूः कश्मीरभूमिः धनैः सम्पत्तिभिः सुभगवाक्क्रमैः सुन्दरवचोविन्यासैः सुरभिकुङ्कुमैश्च क्रमशः अलकां सुधाम् अमृतं कस्तूरिकां च जिगाय। धनैः अलकां सुभगवाक्क्रमैः सुधां सुरभिकुङ्कुमैश्च कस्तूरिकां विजितवती। तथा चोक्तं विल्हणकविना-सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः। न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः। एतदेव किञ्चिद् वैशिष्ट्येन निरूपितं कविना। प्रथम-द्वितीयचरणयोः उत्तरोत्तरमुत्कर्षरूपः सारः। तृतीयचतुर्थचरणयोः क्रमेणान्वयरूपं यथा सङ्ख्यम्।

**विहाय जडता ऽऽननं कवयतां वितस्तामगा-**
**दिहास्त हृदयं पुरा तनुरुवास पश्चादलेः।**
**समर्प्य पदमग्रहीत्सुखभरं स काश्मीरका-**
**द्वितीयं फलकुङ्कुमान्यहरदेतदस्माच्छ्रमम्।।५७।।**

**गङ्गा-** विहाय जडेति- जडता मूर्खता, डलयोरभेदात् जलता वा कवयतां कवीनाम् आननं मुखं विहाय वितस्तामेतदाख्यां नदीमगात् अगच्छत्। जलाधिक्यात् जलता वितस्तायां विद्यते सैवेह डलयोरभेदात् कविना जडतोक्ता। इह कश्मीरे पुरा दर्शनात् पूर्वं जनानां मुखात् कश्मीरकथां श्रुत्वा अलेः

हृदयमास्त पश्चात् तत्र गमनानन्तरं तनुः शरीरमुवास वासं चकार। स अलिः पदं समर्प्य चरणं दत्त्वा काश्मीरकात् कश्मीरदेशात् सुखभरम् आनन्दस्य भारम् अग्रहीत् प्रापत्। एतत्काश्मीरकं अलये फलकुङ्कुमादि वितीर्य एतस्मात् अलेः श्रमं श्रान्तिम् अहरत् दूरीकृतवान्। प्रथमचरणे एकस्य पर्यायेण अनेकाश्रयरूपः पर्यायः। द्वितीयचरणे एकत्रानेकावस्थानरूपः पर्यायः। तृतीयचरणे अल्पेन अधिकग्रहरूपा परिवृत्तिः। चतुर्थचरणे च अधिकदानेन हीनग्रहणरूपा परिवृत्तिः।

**अथो हिमगिरेः पथा कनखलं शनैः प्राविश-**
**त्सरिन्मुनिवराश्रमानधिवसंश्च मायापुरीम्।**
**इह द्युसरितीक्ष्यते न पुनरिन्द्रिये चापलं**
**पतन्ति नतयो नृणामिह च भागधेयानि वा।।५८।।**

**गङ्गा-** अथो हिमगिरेरिति- अथोऽनन्तरम्। हिमगिरेः पथा हिमालयमार्गेण सरिन्मुनिवराश्रमान् नदीस्तपोवननिवासिनां मुनीनाम् आश्रमान् अधिवसन् तान् पश्यंश्च शनैः क्रमात् कनखलं मायापुरीं च कनखलतीर्थं मायापुरीतीर्थं च प्राविशत्। इह कनखले मायापुर्यां च चापलं द्युसरिति मन्दाकिन्याम् ईक्ष्यते न पुनः इन्द्रिये। मुनयो जितेन्द्रिया भवन्तीति तेषामिन्द्रियेषु तत्र तीर्थदर्शनार्थं गतानां वा इन्द्रियेषु चाञ्चल्यं न परिलक्ष्यते। इह तीर्थेऽस्मिन् नृणां नतयः प्रणतयो भागधेयानि वा पतन्ति। तीर्थदेवानां चरणेषु भक्तानां प्रणतयः तेषां भागधेयानि वा पतन्ति वर्षन्ति। न केषुचिदप्यवलोक्यते। तृतीयचरणे द्युसरिति चापलस्य नियममाद् इन्द्रिये च तस्य निषेधाद् एकस्मिन् निषिध्य अपरस्मिन् वस्तुनियमनरूपा परिसंख्या। चतुर्थचरणे तुल्यबलयोर्विरोधे विकल्पालङ्कारः। नतिभागधेययोः तुल्यबलयोः विरोधवर्णनात्।

**य एति नमतीक्षते ऽर्चति च नौति दक्षेश्वरं**
**पुनाति गिरिशः सती सुरसरिच्च तं मानवम्।**
**बिभेत्यथ च वेपते ऽपि च पलायते क्षीयते**
**ततः सुकृतकारिणः सकलमेव पापं क्षणात्।।५९।।**

**गङ्गा-** य एति नमतीति - यः मानवः दक्षेश्वरं प्रजापतिं हरिद्वारे स्थितम् एति आगच्छति नमति नमस्करोति ईक्षते पश्यति अर्चति पूजति नौति साष्टाङ्गं वा प्रणमति, गिरिशः शिवः सती शिवपत्नी दक्षप्रजापतिपुत्री सुरसरित् गङ्गा च तं मानवं पुनाति पवित्रीकरोति। तत्र गमनेन नमस्कारादिना वा सुकृतकारिणः पुण्यकर्मशालिनस्तस्मात् सकलं सर्वमेव पापं बिभेति भयमनुभवति, वेपते कम्पते पलायते दूरीभवति अथ च क्षणात् क्षीयते क्षीणं भवति। प्रथमचरणे एति नमतीत्यादीनाम् अनेकक्रियाणां यौगपद्यात् बहूनां क्रियाणां यौगपद्यरूपः समुच्चयालङ्कारः। बहूनां युगपद्भावभाजां गुम्फः समुच्चय इति तल्लक्षणात्। द्वितीयचरणे गिरिशादिभिरनेकैः मानवानां पवित्रीकरणरूपस्य एककार्यस्य सम्पादनात् अनेकैरेककार्यसम्पादनरूपः समुच्चयः। 'अहं प्राथमिकाभाजामेककार्यान्वयेऽपि सः' इति लक्षणम्। तृतीयचरणे बिभेतीत्यादीनाम् एक गतक्रमिकानेकक्रियाणां गुम्फनात् एकगतक्रमिकानेकक्रियागुम्फरूपं कारकदीपकम्। 'क्रमिकैकगतानां तु गुम्फः कारकदीपकम्' इति तल्लक्षणम्।

**इयेष च तपोवनं स गिरिगूढमासेवितुं**
**तदैव बहवो जना ददृशिरे च तद्यात्रिकाः।**
**विशद्भिरिह पापिभिः सततधिक्कृतो ऽप्यक्षम-**
**स्तदीयमिति पातकं किल निहन्ति तेषां यमः।।६०।।**

**गङ्गा-** इयेष चेति - स विलासी गिरिगूढं गिरिणा पर्वतेन गूढम् आच्छन्नम्। हिमालयेनावृतं तपोवनविशेषमित्यर्थः। तपोवनमासेवितुम् इयेष इच्छति स्म। तदैव तस्मिन्नेव काले तद्यात्रिकाः यात्रिण एव यात्रिकाः तस्य तपोवनस्य पूर्वोक्तस्य यात्रिका बहवो जनाः ददृशिरे दृष्टा बभूवुः। तीर्थयात्रिदर्शनरूपकारणान्तरसन्निधेः बदरीशदर्शनरूपकार्यसौकर्यात् कारणान्तरसन्निधेः कार्यसौकर्यरूपः समाधिरलङ्कारः। 'समाधिः कार्यसौकर्यं कारणान्तरसन्निधे'रिति लक्षणम्। इह तपोवने विशद्भिः प्रविशद्भिः पापिभिः सततधिक्कृतः सततं सर्वदा धिक्कृतस्तिरस्कृतः अपि भगवतो नरनारायणस्य कृपया अक्षमः यमः मृत्युदेवता यमराजः तेषां पापिनां पापं तदीयं पापिनां तीर्थयात्रिणामिति मत्वा निहन्ति दूरीकरोति। किलेति निश्चयवाचकमव्ययम्। तत्र तपोवनं विशद्भिः पापिभिः सततविधक्कृतस्तेषां पापिनां हननेऽक्षमो यमस्तेषां पापं तत्सम्बन्धित्वात् निहन्तीति वर्णनादत्र बलवतः शत्रोः पक्षे पराक्रमरूपं प्रत्यनीकम्। 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रम' इति लक्षणम्।

**खगा अपि शमे रताः किमुत तत्र भूमीसुरा**
**विभीरहिभुजः पुरो ह्यनुकरोत्यहिस्ताण्डवम्।**
**श्रुतेक्षितसुराङ्गनासरसगीतिनृत्या अमी**
**समाध्यशिथिला द्विजाः किमिव विघ्नकृद्योगिनाम्।।६१।।**

गङ्गा- खगा अपीति – तत्र मायापुर्यां खगाः पक्षिणोऽपि शमे शान्तौ रताः लग्नाः। शमथस्तु शमः शान्तिरित्यमरः। किमुत भूमीसुराः? तर्हि ब्राह्मणानां का कथा? तेषां त्वेतत्कर्म एव। किमुतातिशते प्रश्ने विकल्पे च प्रयुज्यत इति विश्वः। 'खगा अपि शमे रताः किमुत तत्र भूमीसुराः' इत्यत्र कैमुत्यन्यायेन ब्राह्मणानां तपश्चर्याया वर्णनात् काव्यार्थापत्तिरलङ्कारः। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यत' इति तल्लक्षणम्। अहिभुजः मयूरस्य, अहिं भुङ्क्ते। केकिताक्ष्यविहिभुजावित्यमरः। पुरः समक्षं विभीः विगता भीः भयं यस्मात् स विभीः। निर्भय इति यावत्। अहिमयूरयोः स्वाभाविको वैरः प्रसिद्धः किन्त्वत्र मयूरस्य पुरः भयरहितः सर्पस्ताण्डवमनुकुरुते, नटति। सर्पस्य भयरहितत्वरूपस्य समर्थनीचस्य अर्थस्य समर्थनं तस्य मयूरस्य पुरतः ताण्डवानुकरणवर्णनेन कृतमिति वाक्यार्थहेतुकं काव्यलिङ्गम्। 'समर्थनीचस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणम्। अमी पुरो विद्यमानाः श्रुतेक्षितसुराङ्गनासरसगीतिनृत्या द्विजाः, सरसगीतिः नृत्यं चेति सरसगीतिनृत्ये सुराङ्गनानामप्सरसां सरसगीतिनृत्ये सुराङ्गनासरसगीतिनृत्ये श्रुते ईक्षिते च सुराङ्गनासरसगीतिनृत्ये यैस्ते, तादृशा द्विजाः अत्र कनखले समाध्यशिथिलाः समाधौ दृढाः सन्ति। सुराङ्गनानां गीतिनृत्याभ्यां तेषां समाधिः न शिथिलीक्रियते। योगिनां विघ्नकृत् विघ्नोत्पादकं किमिव? न किमपीत्यर्थः। किमपि वस्तु योगिनः समाधिशिथिलान् न करोति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

**गृहानुपगतोऽतिथिर्गुरुवदर्च्यते साधुभि-**
**र्विलास्ययमिहाश्रमेऽलभत कन्दमूलं ततः।**
**अतीतृपदमुं जलैरिह च कोऽपि नैसर्गिकी**
**दया खलु तपस्विनां श्रमणयाऽऽर्चि यद्राघवः।।६२।।**

गङ्गा- गृहानुपगत इति – साधुभिः सज्जनैः कनखलस्थैस्तपस्विभिः गृहान् उपगतः गृहेषु प्राप्तः अतिथिः गुरुवत् गुरुर्यथा अर्च्यते पूज्यते। अतिथिदेवो भव इति श्रुतिवचनपालनमेतेन दर्शितम्। ततस्तस्मादयं विलासी इह तीर्थक्षेत्रे आश्रमे कन्दमूलम् अलभत। ऋषयस्तं कन्दमूलं भक्षणाय दत्तवन्तः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। अथ च इह कोऽप्यन्यो मुनिः विलासिनममुं जलैः अतीतृपत् तृप्तमकरोत्। तपस्विनां नैसर्गिकी दया करुणा भवति। यस्मात् राघवोऽपि वनं गतः श्रमणया शबर्या आर्चि आसमन्तात् पूजितोऽभूत्। क्व राघवः क्व च श्रमणा तथापि स्वाभाविकदयावशात् स तया पूजितः। अतीतृपदमुं जलैरिति विशेषोक्तेः पुष्टिः 'इह च नैसर्गिकी दया तपस्विनाम्' इति सामान्यकथनेन कृता। पुनरस्य कथनस्य पुष्टिः 'श्रमणयाऽऽर्चि राघवः' इत्यनेन कथनेन कृतेति विकस्वरोऽलङ्कारः। 'यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः'।

**सशैलचिरवासतो दृढमतिस्ततः प्रस्थितो**
**ययौ बदरिकाश्रमं पथिमिलद्धृषीकेशदृक्।**
**निदाघशतकं यदि क्रममपास्य तत्रापते-**
**द्भवेदपि कदाचनातपभयं स्थितानामिह।।६३।।**

गङ्गा- सशैलचिरवासेति – सशैलचिरवासतः शैलेन हिमालयेन सहितं सशैलं कनखलतीर्थं मायापुरी वा। तस्मिन् चिरवासतः चिरं निवासात् दृढमतिः दृढा तीर्थयात्रायां प्रगाढा मतिः बुद्धिः यस्य सः। दृढः स्थूले नितान्ते च प्रगाढे बलवत्यपीति मेदिनी। पथि मिलद्धृषीकेशदृक् पथि मार्गे मिलन्ती हृषीकेशस्य दृक् यस्य दर्शनं सः, ततः कनकखलात् मायापुर्या वा प्रस्थितः बदरिकाश्रमं नरनारायणतीर्थं ययौ जगाम। सशैलचिरवासस्य उत्कर्षहेतोः दृढमतिहेतुत्वकल्पनात् उत्कर्षहेतौ तद्धेतुत्ववर्णनरूपा प्रौढोक्तिः। 'प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनम्' इति लक्षणम्। तत्रत्यं शैत्यमनुभूय वदति – यदि कदाचन निदाघशतकं ग्रीष्मर्तुशतं क्रमम् अनुक्रमम्। क्रमशः प्रतिवर्षं निदाघ आगच्छति। यदि नाम क्रमं परित्यज्य निदाघशतकम् एकदैव तत्र आपतेत् तदैव इह बदरिकाश्रमे स्थितानामपि आतपभयं ग्रीष्मभयं भवेत्। अन्यथा तु अत्र सर्वदा शीततुरेव भवति। आतपस्य कथैव नास्ति। 'निदाघशतकं यदि क्रममपास्य तत्रापतेद्' इति रूपेण बदरिकाश्रमे शीतर्तोरपोहनाद् ग्रीष्मर्तुद्धिवर्णनात् एकसिद्धयेऽन्यस्य अपोहरूपं सम्भावनम्। 'सम्भावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति कुवलयानन्दोक्तं तल्लक्षणम्।

**प्रकाशचरणोरगैः खगकुलैरनण्डोद्भवै-**
**रिहाघमुपमीयते धृतगुरुच्छदैर्मानवैः।**
**अभूत्क्षपितकल्मषो विविधतीर्थसंसेवना-**
**दिहायमुदिते रवौ विरचितप्रदीपावलिः।।६४।।**

गङ्गा- प्रकाशचरणेति – इह बदरिकाश्रमे अघं पापं प्रकाशचरणोरगैः प्रकाशाः प्रत्यक्षाः चरणाः पादाः यस्य स प्रकाशचरणः स चासौ उरगः सर्पः प्रकाशचरणोरगास्तैः। सर्पः गुप्तचरणो भवति। अत्र पुनः असम्भवात् प्रकाशचरणोरगाः कल्पिताः। अथ च पापम् अनण्डोद्भवैः अण्डादनुत्पन्नैः खगकुलैः

पक्षिसमूहैः धृतगुरूच्छदैः मानवैः, विशालपक्षयुक्तमनुष्यैः उपमीयते। एते सर्वेऽपि पदार्थाः असम्भवा इत्युपमानानामप्रसिद्ध्योपमेयस्याप्यप्रसिद्धिः। तत्र पापस्याऽत्यन्ताभावो भवति प्रकाशचरणेशगादिवदित्यर्थः। एकस्य अघस्य मिथ्यात्वसिद्ध्ये प्रकाशचरणेशगाद्यनेक-मिथ्यार्थान्तरकल्पनात् मिथ्याध्यवसितिरलङ्कारः। इह बदरिकाश्रमे रवौ उदिते सूर्ये उदिते सति विरचितप्रदीपावलिः विरचिता सूर्यपूजनाय सज्जीकृता प्रदीपानामवलिर्येन स विलासी विविधतीर्थसंसेवनात् समग्रभारते प्रथततीर्थानां दर्शनात् क्षपितकल्मषः निष्पापोऽभूत्। पूर्वकृतकर्मजन्यपापसमूहस्तीर्थदर्शनेन नष्टोऽभूदित्यर्थः। प्रस्तुते तद्वृत्तान्तप्रति-बिम्बवर्णनात् ललितालङ्कारः। विविधतीर्थसंसेवनात् क्षपितकल्मषरूपे प्रस्तुते रवौ उदिते विरचितप्रदीपावलिरूप-तद्वृत्तान्तप्रतिबिम्बवर्णनमिह ललितालङ्कारं पुष्णाति।

**इहर्षिमभिलष्यता स ददृशे यदृच्छागतः**
**स वन्दित उदैरयच्छ्रुतिगिरा ऽऽशिषो मोक्षदाः।**
**तदर्थमननोन्मुखो ऽध्यगमदेष रूपं निजं**
**वचोविभवलङ्घिनी बदरिकाश्रमे पुण्यता।।६५।।**

**गङ्गा-** इहर्षिमभीति – इह बदरिकाश्रमे ऋषिमभिलष्यता ऋषेः कस्यचिद् दर्शनं वाञ्छता तेन विलासिना यदृच्छागतः स्वेच्छया समागतः स ऋषिः ददृशे दृष्टोऽभूत्। यत्नं विना अभिलषितर्षेः दर्शनस्य वर्णनात् यत्नं विना इष्टार्थलाभरूपः प्रहर्षणालङ्कारः। तेन विलासिना श्रुतिगिरा वेदवाण्या वन्दितः नमस्कृत्यादिभिः पूजितः स ऋषिः मोक्षदाः मुक्तिप्रदाः आशिषः आशीर्वचांसि उदैरयत् उदचारयत्। ऋषिदर्शनमात्राभिलाषे तदाशीर्वादस्यापि प्राप्तिवर्णनाद् अधिकार्थलाभरूपः प्रहर्षणालङ्कारः। तदर्थमननोन्मुखः तेन ऋषिणा समुच्चारिताया वाण्या अर्थस्य मनने चिन्तने उन्मुखः मग्नः एष विलासी निजं रूपं वास्तविकं स्वरूपमध्यगमत् अध्यगच्छत्। पापरहितं स्वरूपं स प्राप्तवानित्यर्थः। तदर्थमननोन्मुखस्य तस्य निजरूपस्य लाभवर्णनाद् उपायार्थिनः फललाभरूपः प्रहर्षणालङ्कारः। बदरिकाश्रमे वचोविभवलङ्घिनी वाणीसम्पदतिक्रमकारिणी पुण्यता विद्यते। तत्रत्य पुण्यताया वाण्या वर्णनं न भवितुमर्हतीत्यर्थः।

**समर्च्य विधिवत्स्थिते नरमथापि नारायणं**
**विलासिनि बिभन्त्सुभिर्द्रुतमवापि विघ्नैर्लयः।**
**परेशकृपया नरो भवति सिद्धिमानत्र चा-**
**प्यनिष्टकरणोद्यतैः कुमतिभिः क्षयः प्राप्यते।।६६।।**

**गङ्गा-** समर्च्य विधिवदिति – नरमथ नारायणमपि बदरिकाश्रमस्थितं नरनारायणं विधिवत् समर्च्य सम्पूज्य विलासिनि स्थिते बिभन्त्सुभिः भन्तुमिच्छुभिः विघ्नैः द्रुतं शीघ्रं लयः विनाशः अवापि। सर्वेऽपि विघ्नास्तत्र नष्टाः। इष्यमाणविरुद्धार्थसम्प्राप्तिरूपो विषादनालङ्कारः। 'इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनमिति लक्षणम्।' अत्र बदरिकाश्रमे परेशकृपया भगवतो नारायणस्य कृपया नरः सिद्धिमान् सिद्धियुक्तो भवति। परेशस्य कृपया नरस्य सिद्धिमत्तावर्णनात् परगुणेन गुणप्राप्तिरूप उल्लासालङ्कारः। अनिष्टकरणोद्यतैः अनुचितकार्यसम्पादनतत्परैः कुमतिभिः कुबुद्धिभिः दुष्टैः क्षयः विनाशः प्राप्यते। अनिष्टकरणोद्यतानां कुमतीनां क्षयप्राप्तिवर्णनात् दोषेण दोषरूपः उल्लासालङ्कारः।

**विविक्तवनसेविनो मृगयवो मृगान् घ्नन्त्यहो**
**सुरभ्युदयते ऽम्बुजं सरसि गाढपङ्के ऽपि च।**
**अतश्च भवितव्यता बलवती तमित्थं भुवः**
**प्रदक्षिणमकारयन्ननु निमित्तमासीदलिः।।६७।।**

**गङ्गा-** विविक्तवनेति- अहो, आश्चर्यम्। मृगयवः व्याधाः विविक्तवनसेविनः एकान्तवननिवासिनः मृगान् प्राणिनः घ्नन्ति मारयन्ति। व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः इत्यमरः। सुरभिः सुगन्धितम् अम्बुजं कमलं च गाढपङ्के कर्दमक्लिन्ने सरसि सरोवरे अभ्युदयते। दोषेण दोषाभावरूपोऽवज्ञालङ्कारः अतः भवितव्यता बलवती भवति। इत्थं तं विलासिनं भुवः प्रदक्षिणं तीर्थाटनमिषेण पृथ्व्याः परिक्रमाम् अकारयत्। ननु अलिः तत्र निमित्तमासीत्। वस्तुतस्त्वेतदपि भवितव्यतया बलवत्त्वाज्जातम्।

**अभूद्धृदि विलासिनो भवतु नित्यमीदृक् श्रमो ऽ-**
**न्वहं नवनवेक्षणाद्भवति हि प्रसादो ऽत्र मे।**
**धिगाढ्यमपि यो गृहे वसति कूपमण्डूकव-**
**न्ममायमपरिग्रहो ऽद्भुतनिरीक्षणाद्रोचते।।६८।।**

**गङ्गा-** अभूद्धृदीति – नित्यं प्रत्यहम् ईदृक्तीर्थाटनजन्यः श्रमः भवतु इत्येवं विलासिनः हृदि हृदये अभूत् भावनोत्पन्ना। यतो हि अत्र बदरिकाश्रमे अन्वहमनुदिनं नवनवेक्षणात् अभिनवस्थलदर्शनात् हि निश्चयेन मे मम विलासिनः प्रसादः प्रसन्नता भवति। दोषस्यैव गुणदर्शनवर्णनात्

प्रार्थनारूपोऽनुज्ञालङ्कारः। यः कूपमण्डूकवत् कूपे निवसतः मण्डूकस्येव गृहे वसति, भ्रमणार्थं कुत्रचित्तीर्थं न गच्छति तम् आढ्यं धनिनमपि धिक्। गुणे दोषत्वकल्पनारूपोलेशालङ्कारः। अद्भुतनिरीक्षणात् प्रतिदिनं विभिन्नतीर्थेषु नवनवानामाश्चर्यकारिस्थानादीनां दर्शनात् मम अयं यो हि अपरिग्रहः त्यागवृत्तिः स मह्यं रोचते। अपरिगृहवृत्त्या मम असन्तोषो न भवति। अपरिग्रहरूपदोषे गुणत्वकल्पनारूपो लेशालङ्कारः।

**जसौजसि हि यो लगत्यथ च तस्य पृथ्वी वशे**
**भवत्वतिकटूदयं तदलसत्त्वमत्रोचितम्।**
**अपामरजसम्मतं हितमसङ्गतासेवनं**
**यतो ऽत्र हृदि मुद्रयाद्भवति सैव रत्नावली।। ६९।।**

**गङ्गा – जसौजसीति** – अथ यः कोऽपि पुरुषः जसौजसि जसं हिंसकमोजः। शौर्यमिति यावत्। तस्मिन् यः लगति पृथ्वी तस्य वशे भवति। हिंसकाद् भीताः सर्वे तस्य वशंवदा भवन्तीत्यर्थः। 'जसौजसि हि यो लगति' इत्यत्र जगण–सगण–जगण–सगण–यगणा लघुगुरू च सन्निवेशिताश्चेत् पृथ्वीनाम छन्दः सिद्ध्यतीत्यर्थान्तरेण मुद्रालङ्कारः। 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैरिति तल्लक्षणम्। अत्र अस्मिन् तीर्थे अतिकटूदयं तत् प्रसिद्धम् अलसत्त्वम् उचितं भवतु। अपामरजसम्मतं विद्वद्भिरादृतम् असङ्गतासेवनं विरक्तेराश्रयणं हितं कल्याणकृद् भवति। यतः यस्मात् अत्र असङ्गतासेवने मुद् आनन्दः हृदि हृदये रयाद् वेगात् भवति। सा असङ्गतासेवनजन्या मुद् एव रत्नावली अस्ति।

तदलसत्त्वम्, इत्यत्र सत्त्वस्य, अपामरजसम्मतम्, इत्यत्र रजसः, हितमसङ्गतासेवनमित्यत्र च तमसः उल्लेखात् सत्त्वरजस्तमसां शब्दानामर्थान्तरतात्पर्यकाणां क्रमेण निवेशात् रत्नावली। 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः' इति तल्लक्षणम्। मुद्रा रत्नावली चेत्युभयमपि चतुर्थचरणे सूचितमिति मुद्रालङ्कारेण सौन्दर्यातिशयः।

**हिमाचलरुचा सितो भवति यत्र कृष्णो हरि–**
**र्हरिन्मणिविभूषणैः पुनरुपैत्यसौ कृष्णताम्।**
**निशास्वपि रविप्रभौषधिशतैरिहारभ्यते**
**हरन्नपि मलं नृणां विशद एव नारायणः।। ७०।।**

**गङ्गा** – हिमाचलरुचेति – यत्र यस्मिन् बदरिकाश्रमे कृष्णः हरिः नीलवर्णो विष्णुः। कृष्णे नीलासितश्यामेत्यमरः। भगवतो नारायणस्य नीलवर्णता पुराणादिषु प्रसिद्धा। एतादृशः कृष्णः हरिः हिमाचलरुचा हिमालयपर्वतस्य कान्त्या सितः धवलो गौरो वा भवति। सितो गौरो वलक्षो धवल इत्यमरः। हिमालयस्य कान्त्या भगवतः गौरत्ववर्णनात् स्वगुणत्यागादन्यदीयगुणग्रहणरूपस्तद्गुणालङ्कारः। 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रह' इति तल्लक्षणम्। पुनः असौ हिमालयकान्त्या गौरतां गतः भगवान् हरिन्मणिविभूषणैः हरिन्मणिनिर्मिताभूषणानां कान्त्येत्यर्थः। कृष्णतां नीलवर्णतामुपैति। पुनः स्वस्वरूपतां प्राप्नोति। अनेन वर्णनेनाऽत्र पुनः स्वगुणसम्प्राप्तिरूपः पूर्वरूपालङ्कारः। 'पुनः स्वगुणसम्प्राप्तिः पूर्वरूपमुदाहृतम्' इति लक्षणम्। इह हिमालये रविप्रभौषधिशतैः रवेः प्रभा कान्तिरिव प्रभा येषां तादृशौषधीनां शतं तैः निशासु अपि रात्रिषु अपि आरभ्यते। नृणां मनुष्याणां मलं पापं हरन् दूरीकुर्वन् अपि वस्तुविकारेऽपि पूर्वावस्थानुवृत्तिरूपः पूर्वरूपालङ्कारः। शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डरा इत्यमरः। नारायणः बदरीशो भगवान् विष्णुः विशद एव शुभ्र एव नृणां मलं हरतोऽपि नारायणस्य शुभ्रतावर्णनात् अन्यदीयगुणाग्रहणरूपोऽतद्गुणालङ्कारः। 'सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम्' इति लक्षणम्।

**हिमाद्रिरतिशुक्लतां हरियशोभिराप्नोत्यसा–**
**विह स्फटिकभूर्हिमावृतभुवः पृथग्नेक्ष्यते।**
**विदन्ति बुधपामरा इह तुषारहीरौ समं**
**विरक्तिसितभास्वरच्छविनिदानभेदस्तयोः।।७१।।**

**गङ्गा – हिमाद्रिरतीति–** असौ पुरो विद्यमानः बदरिकाश्रमत्वेन प्रसिद्धः हिमाद्रिः हिमालयः हरियशोभिः तत्र प्रतिष्ठितस्य भगवतो नारायणस्य कीर्तिभिः अतिशुक्लतां प्रबलभास्वरतां प्राप्नोति। हरियशोभिः हिमाद्रेरतिशुक्लतायाः प्राप्तिवर्णनात् पूर्वसिद्धगुणातिशयरूपोऽनुगुणः परसन्निधेरिति तस्य लक्षणम्। इह बदरिकाश्रमे हिमाधिक्यात् स्फटिकभूः नारायणमन्दिरजटितस्फटिकमणिनिर्मितपृथ्वी हिमावृतभुवः तुषाराच्छादितपृथ्व्याः पृथक् न ईक्ष्यते। स्फटिकभूः हिमावृतभुवः पृथक् न ईक्ष्यत इति सादृश्याद् भेदाग्रहणरूपो मीलितालङ्कारः। 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते' इति लक्षणम्। हिमावृतभुवः स्फटिकभुवश्च परस्परं सादृश्यातिशयात्राऽत्र भेदप्रतीतिः। इह बदरिकाश्रमे बुधपामराः बुधाश्च पामराश्च तुषारहीरौ हिमं हीरकमणिं च समानवर्णत्वात् समं समानं विदन्ति जानन्ति। तुषारहीरयोः सादृश्याद् विशेषस्यानुपलम्भात् सादृश्याद् विशेषाग्रहणरूपः सामान्यालङ्कारः। 'सामान्यं यदि सादृश्याद् विशेषो नोपलभ्यत' इति लक्षणम्। तयोः पार्थक्ये न प्रभवन्तीत्यर्थः।

तयो: तुषारहीरयो: विरक्तिसितभास्वरच्छविनिदानभेद: विशिष्टा रक्तिमा च सिता च तयो: भास्वरा शुक्ला छवि: सुन्दरता। विरक्त्या तुषारस्य सितया च हीरकस्येत्यर्थ:। तस्या: निदानभेद: कारणभेद: भवति न कश्चिदन्यो भेदस्तत्र लक्ष्यत इत्यर्थ:।

**प्रफुल्लनवमल्लिका सुरभिभावतो ज्ञायते**
**हिमाच्च विशिनष्ट्यहो दधि गिराविह स्निग्धता।**
**विराममधुनार्थये ऽध्ययनतस्तनुर्वेपते**
**जुहुध्यनलमित्यलं चलति शिष्यगुर्वोर्वचः।।७२।।**

**गङ्गा** – प्रफुल्लनवेति– अत्र हिमालये प्रफुल्लनवमल्लिका विकसिता मल्लिकाख्या विशिष्टलता सुरभिभावत: सुगन्धिसत्त्वात् ज्ञायते ज्ञानविषयतामानीयते। विविधपुष्पाणां विकासात्तत्र प्रफुल्लनवमल्लिकाया: सुरभिभाव एव तस्या: परिचायक:। अत्र प्रफुल्लनवमल्लिकाया: सुरभिभावत: ज्ञानात् भेदप्रतीतिरूप: उन्मीलितालङ्कार:। इह च हिमालये पर्वते स्निग्धता चिक्कणता हिमात् तुषारात् दधि विशिनष्टि पृथक्करोति। उभयो: शुक्लत्वात् स्निग्धतैव हिमात् दध्नो भेदिका। स्निग्धताकारणात् हिमाद् दध्न: वैशिष्ट्यज्ञानाद् विशेषप्रतीतिरूपो विशेषालङ्कार:। अधुना बहुकालं यावत् अध्ययनं कृत्वा सम्प्रति अध्ययनत: विरामम् अर्थये। तनु: शरीरं वेपते कम्पते। शैत्याधिक्यादिति शेष:। अनलम् अग्निं जुहुधि ज्वालय। जुहोते: लोटि मध्यमपुरुषैकवचने रूपम्। तेनैव शरीरकम्पस्य शान्तेरित्यर्थ:। इत्येवं शिष्यगुर्वो: वच: संवाद: अलं पर्याप्तं चलति प्रचलति। साभिप्रायोत्तरदानरूप उत्तरालङ्कार:। 'किञ्चिदाकूटसहितं स्याद् गूढोत्तरमुत्तरम्' इति लक्षणम्।

**अभाजि पथिकैर्लता कुसुमिता ऽऽश्रमे कीदृशाः**
**प्रवान्ति मरुतो ऽत्र के न तप आरभन्ते जडाः।**
**इतीह वनवासिनां निशमयन् विचित्रा गिरो**
**विलास्यलकनन्दया स्वसविधं समाकृष्यत।।७३।।**

**गङ्गा** – अभाजीति – कै: कुसुमिता पुष्पिता लता अभाजि भञ्जिता इति प्रश्ने पथिकैरित्युत्तरमिति चित्रालङ्कार:। आश्रमे कीदृशा: मरुत: पवना: प्रवान्ति? अथ च अत्र आश्रमे के तप: न आरभन्ते न कुर्वन्ति इति द्वयोरपि प्रश्नयो: उत्तरम्– जडा इति। वायुपक्षे – जडा: शीता वायव आश्रमे प्रवान्ति। तप:पक्षे जडा मूर्खा आश्रमे तपो न आरभन्त इति द्वयोरपि जडा इत्येवोत्तरमिति चित्रोत्तरालङ्कार:। एवं विधा वनवासिनां विचित्रा गिर: निशमयन् शृण्वन् विलासी अलकनन्दाख्यया नद्या स्वसविधं समाकृष्यत समानीयत। एतादृशवार्तालापम् शृण्वन् विलासी अलकनन्दासमीपं गत इति तात्पर्यम्।

**विलासिनि शनैर्व्रजत्युपजहार दण्डं मुनि-**
**र्विनिःश्वसति को ऽप्यमुं निजकुटीं समीपे ऽब्रवीत्।**
**अयं गिरिदिदृक्षुतागृहजनस्मृती वर्णयन्**
**जुगोप च परिश्रमं तनुहृदोरजातत्वरः।।७४।।**

**व्याख्या** – विलासिनीति – विलासिनि अलिशिष्ये गिरिमार्गभ्रान्ते: शनै: मन्दं व्रजति सति कश्चन मुनि: तस्मै दण्डं गमनसौकर्यार्थं मार्गश्रमापनयनाय च काष्ठदण्डम् उपजहार उपायनत्वेन ददौ। दण्डोपहारेण श्रमसत्वसूचनात् सूक्ष्मालङ्कार:। 'सूक्ष्मं पराशयभिज्ञेतरसाकूतचेष्टितम्' इति तल्लक्षणम्। विनि:श्वसति सति कोऽपि मुनि: अमुं विलासिनं सान्त्वयितुं समीपे निजकुटीम् अब्रवीत् अवदत्। ब्रूधातोर्द्विकर्मकत्वात् निजकुटीमिति प्रधानं कर्म अमुमिति च गौणं कर्म। कुट्या: सामीप्यबोधनेन चलनाशक्तिज्ञातत्वसूचनात् पिहितालङ्कार:। अयं विलासी गिरिदिदृक्षुतागृहजनस्मृती गिरे: पर्वतस्य दिदृक्षुता द्रष्टुमिच्छुता च गृहजनानां परिवारसदस्यानां स्मृतिश्च ते वर्णयन् मार्गे चर्चयन्। अलिनेति शेष:। तनुहृदो: तनु: शरीरं च हृत् हृदयं च तयो: अजातत्वर:। शरीरस्य गिरिदिदृक्षुताविषये हृदयस्य च गृहजनस्मृतिविषये त्वरारहितत्वात् परिश्रमं जुगोप गोपनं चकार। तस्य परिश्रमं न कोऽपि जज्ञे। हेत्वन्तरकथनेन आकारगोपनरूपा व्याजोक्ति:। 'व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम्' इति लक्षणम्।

**मतङ्गज सुरापगान्तिकतमेत्यवादीत्परो**
**घटी परमपेक्षितेत्यभिदधे ऽपरः सूचयन्।**
**शिवार्चनकृते सुमान्यवचिनोमि मे न श्रम-**
**स्त्विति व्यपदिशन्स तान्व्यरमयत्प्रहासाद्धसन्।।७५।।**

**गङ्गा** – **मतङ्गजेति** – श्रान्तं विलासिनं दृष्ट्वा प्रहासोक्ति: – हे मतङ्गज! करिन्! हे चाण्डालपुत्र! सुरापगा देवनदी गङ्गेति हस्तिपक्षे मद्यधारा च चाण्डालपुत्रपक्षे। अन्तिकतमा समीपवर्तिनीति पर: कश्चन सहयात्रिषु अवादीत्। नीचोद्देशेन गजं प्रति करिन्! चाण्डालजात!

गङ्गा मद्यधरा चेति कथनाद् गूढोक्तिः।'गूढोक्तिरन्योद्देश्यं चेद् यदन्यं प्रति कथ्यत' इति तल्लक्षणम्। परं सुरापगायामन्तिकतमायां सत्यामपि घटी अल्पकलशः मुहूर्तार्धं च अपेक्ष्यत इति सूचयन् अपरः कश्चन सहयात्री अवदत्। सूचयन्निति तात्पर्यस्य कविनैव आविष्कृतत्वाद् विवृतोक्तिः।'विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि' इति लक्षणम्। अहं शिवार्चनस्य कृते सुमानि पुष्पाणि अवचिनोमि। मे मम तु श्रमः श्रान्तिः न इति व्यपदिशन् कथयन् हसन् स विलासी तान् सर्वान् सहयात्रिणः प्रहासाद् व्यरमयत् विराममकल्पयत्। श्रमरूपमर्मगुप्तये प्रहासक्रियया परवञ्चनस्य वर्णनात् युक्तिरलङ्कारः।'युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये' इति लक्षणम्। अत्र मर्मगुप्तये क्रियया परवञ्चनं वर्णितम्।

**व्रजेत् किमिति पर्वतं यदि तु लभ्यते ऽक्के मधु**
**स्थिरो भव तपश्चरन्निह पवित्रमेतत्स्थलम्।**
**स केनचिदितीरितः प्रतिजगाद किं श्रेयसि**
**क्वचिद्भवति तृप्तिरित्यनुसरामि तीर्थान्तरम्।।७६।।**

गङ्गा – व्रजेत् किमितीति– यदि तु अक्के गृहे भाण्डागारे वा मधु लभ्यते तर्हि कोऽपि पर्वतं किमिति गच्छेत्? न गच्छेदित्यर्थः। लोकप्रवादस्य अनुकृतेः लोकप्रवादानुकरणरूपो लोकोक्तिरलङ्कारः। अत्र आश्रमे तपश्चरन् तपस्यां कुर्वन् स्थिरो भव। एतत्पवित्रं स्थलं विद्यते। एवं केनचित् सहयात्रिणा ईरितः कथितः स विलासी – किं श्रेयसि कल्याणे क्वचित् तृप्तिः भवति? इति हेतोः तीर्थान्तरमनुसरामि गच्छामि इति प्रतिजगाद प्रत्युवाच।'श्रेयसि केन तृप्यत' इत्युक्तेः प्रभावोऽत्र स्पष्टः। लोकोक्तेः अर्थान्तरगर्भितया छेकोक्तिरलङ्कारः।

**नमेरुचिरसंश्रयात्प्रशममेति तापः सतां**
**न हेमगिरिमर्थये हिमगिरौ निवत्स्याम्यहम्।**
**परानिति गिरा जयन् विततबर्हनृत्यच्छिखि–**
**प्रकामरमणीयताहृतविलोचनो ऽत्रावसत्।।७७।।**

गङ्गा – वक्रोक्तिं स्वभावोक्तिं च निरूपयति – नमेरुचिरेति– सतां सज्जनानां तापः नमेरुचिरसंश्रयात्, नमेरूणां, सुरपुन्नाम् – छायावृक्षाणाम्। नमेरुः सुरपुन्नाग इति विश्वः। चिरसंश्रयात् बहुकालं यावद् आश्रयणात् प्रशमं शान्तिम् एति गच्छतीत्यर्थकस्य वाक्यस्य श्रोत्रा मेरोः सुमेरुपर्वतस्य चिरसंश्रयात् सतां तापः प्रशमं न एतीत्यर्थकरणात् वक्रोक्तिः।'वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम्' इति लक्षणम्। हेमगिरिं सुमेरुपर्वतं न अर्थये, न याचे, हिमगिरौ निवत्स्यामि इति गिरा वाण्या परान् सहयात्रिणो जयन् विततबर्हनृत्यच्छिखिप्रकामरमणीयताहृतविलोचनः वितताः प्रसृता बर्हाः पिच्छा येषां तादृशानां नृत्यतां शिखीनां मयूराणां प्रकामरमणीयतया अतिसौन्दर्येण हृते विलोचने यस्य तादृशः विलासी अत्र हिमालये अवसत् वासमकरोत्। मयूरस्य स्वाभाविकनृत्यवर्णनात् स्वभावोक्तिरलङ्कारः।'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति लक्षणम्।

**तपोऽकृत भगीरथश्चिरमिहोद्धरिष्यन् पितॄन्**
**मखो ऽत्र भविता कलेरुपरमे प्रपश्याम्यहम्।**
**अचार्यत स योगिनेत्यनुगिरं स्थलीरास्थया**
**हरिन्मणिगणप्रभास्थगितनव्यदूर्वाततीः।।७८।।**

गङ्गा – तपोऽकृतेति– इह अस्मिन् बदरिकाश्रमे पितॄन् पूर्वपुरुषान् उद्धरिष्यन् भगीरथः चिरं चिरकालं यावत् तपः अकृत कृतवान्। कपिलमुनेः शापाद् भस्मीभूतपितॄणामुद्धाराय भगीरथः भगवतीं गङ्गां भुवि आनेतुं तपश्चचारेति पुराणेषु प्रसिद्धम्। पुनरत्र कलेः वर्तमानस्य कलियुगस्य उपरमे समाप्तौ मखः यज्ञः भवितेति अहम् अलिः प्रपश्यामि। भगीरथतपश्चर्यारूपभूतस्य कलेरुपरमे भाविनोऽर्थस्य मखस्य च साक्षात्कारस्य वर्णनात् भाविकालङ्कारः। इत्येवं योगिना स विलासी आस्थया अनुगिरं हिमालयोपरि हरिन्मणिगणप्रभास्थगितनव्यदूर्वाततीः हरिन्मणिगणानां समूहानां प्रभया कान्त्या स्थगिता दूरीकृता नव्यदूर्वाततयः सद्योजातदूर्वाङ्कुरसमूहा याभिस्तादृशीः स्थलीः अचार्यत पर्यभ्राम्यत। समृद्धिवस्तुवर्णनात् उदात्तालङ्कारः। योगिना स अनुगिरं स्थलीः आचार्यत इत्यत्र गतिबुद्धि (पा.सू. १.४.५२) इत्यादिना अण्यन्तावस्थायाः कर्तुः ण्यन्तावस्थायां कर्मत्वम्। अतस्तस्य प्रयोज्यकर्मत्वात् 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। प्रयोज्यकर्मणि त्वन्येषां ण्यन्तानां लादयो मताः इति नियमेन तत्पदबोध्ये प्रयोज्यकर्मणि लङ्लकारस्य विहितत्वेन तत्प्रयोज्यकर्मणः उक्तत्वात् प्रथमा।

**इहैव भगवान् भवः परिणिनाय शैलात्मजा–**
**मिहार्जुनकिरातयोः शरगणैरपूर्यम्बरम्।**
**मरुत्तमखतर्पितद्विजवरोज्झितैः काञ्चनैः**
**सुमेरुरिह निर्ममे वनमहीरदर्शीति सः।।७९।।**

**गङ्गा** – इहैव भगवानिति – इह हिमालय एव भगवान् भव: शिव: शैलात्मजां भगवतीं पार्वतीं परिणिनाय परिणीतवान्। विवाहविधिना तामर्धाङ्गिनीमकरोदित्यर्थ:। पुन: अर्जुनकिरातयो: शरगणै: बाणसमूहै: अम्बरम् आकाश: अपूरि आच्छादितम्। प्रसिद्धान्योपलक्षणरूप उदात्तालङ्कार:। इह च मरुत्तमखतर्पितद्विजवरोज्झितै: मरुत्ताख्यस्य पुराणप्रसिद्धस्य राज्ञो मखे तर्पितै: तृप्तिं प्राप्तै: द्विजवरै: विप्रश्रेष्ठै: उज्झितै: त्यक्तै: काञ्चनै: सुवर्णै: सुमेरु: पर्वत: निर्ममे। अद्भुतमिथ्यैश्वर्यवर्णनाद् अत्युक्ति:। इत्येवं प्रकारेण स विलासी वनमही: हिमालयस्थली: अदर्शि। योगिनेति पूर्वेण सम्बन्ध:। मरुत्तराज्ञ: कथा महाभारतादौ प्रसिद्धा। अश्वमेधपर्वणि एकादशेऽध्याये चतुस्त्रिंशत्तमे पद्ये एतादृश: कश्चन सङ्केतो लभ्यते –

ततो राजा जातरूपस्थ राशीन् पदे पदे कारयामास हृष्ट:। द्विजातिभ्यो विसृजन् भूरि वित्तं रराज वित्तेश इवारिहन्ता॥

**तमीशमभजत्स यच्छिरसि तण्डुला अर्पिता:**
**सृजन्ति सुकृताङ्कुरान्भवति सा ऽस्य केदारता।**
**न यत्र सुकरा गति: सकलतीर्थवत् किन्तु सा**
**सरिच्छिखरिहिम्यभूक्रमणकष्टयात्रा किल।।८०।।**

**गङ्गा** – तमीशमिति – यच्छिरसि यस्य भगवत: केदारनाम्ना प्रसिद्धस्य शिवस्य शिरसि उत्तमाङ्गे अर्पिता: भक्तै: शिरसि समर्पिता: तण्डुला: अक्षतकणा: सुकृताङ्कुरान् सत्कर्मप्ररोहान् सृजन्ति निर्मान्ति। स विलासी तमीशं शिवम् अभजत् असेवत। केदारक्षेत्रं गत्वा तद्दर्शनमकरोदित्यर्थ:। सा सुकृताङ्कुरसृष्टिरेव अस्य केदारनाथस्य केदारता क्षेत्रता। योगेन केदारनाम्नोऽन्यार्थस्य वर्णनात् निरुक्तिरलङ्कार:। अत्र केदारनाथे सकलतीर्थवत् पर्वतमार्गबाहुल्यात् सुकरा गति: नास्ति किन्तु सा गति: सरिच्छखरिहिम्यभूक्रमणकष्टयात्रा सरितो नद्यश्च शिखरिण: पर्वताश्च हिम्यभुव: तुषारभूमयश्चेति तत्क्रमणेन लङ्घनेन कष्टयात्रा कष्टप्रदायिनी सा यात्रा भवतीति। किलेति निश्चयार्थकोऽव्यय:। यत्र सकलतीर्थवत् सुकरा गतिर्नास्तीति प्रसिद्धनिषेधस्य अनुकीर्तनात् प्रतिषेधालङ्कार:। 'प्रतिषेध: प्रसिद्धस्थ निषेधस्यानुकीर्तनम्' इति लक्षणम्।

**भवन्ति यदवेक्षणश्रमत आस्तिका आस्तिका**
**असौ भवति मुक्तये सकृदपि स्वपूजाकृताम्।**
**यदीयकरुणालवा हरिकुबेरशक्रश्रियो**
**न यस्य गुणवर्णने क्षममलङ्कृतीहाशतम्।।८१।।**

**गङ्गा** – भवन्ति यदवेक्षणेति– आस्तिका: वेदवचनानुकर्तार:। यदवेक्षणश्रमत: यस्य केदारनाथस्य दर्शनपरिश्रमात् आस्तिका भवन्ति। केदारदर्शनं विना आस्तिकानामास्तिकत्वं न सम्भवतीत्यर्थ:। आस्तिकानामेव आस्तिकानामेव आस्तिकत्वविधानात् सिद्धस्यैव विधानरूपो विधिरलङ्कार:। असौ केदारनाथ: सकृत् अपि एकबारमपि स्वपूजाकृतां स्वयाजकानां मुक्तये मोक्षाय भवति। का कथा आजीवनं तदाराधकानाम्? कार्येण सह कारणस्य वर्णनरूपो हेत्वलङ्कार:। यदीयकरुणालवा: यस्य केदारनाथस्य दयालेशा: हरिकुबेरशक्रश्रिय:। हरि: विष्णुश्च कुबेरो राजराज: च शक्र: इन्द्रश्च तेषां श्री:। विष्णो: लोकपालनश्री: कुबेरस्य धनश्री: इन्द्रस्य च स्वर्गसाम्राज्यश्री:। ता: सर्वा: अपि भगवत: केदारनाथस्य दयालेशा: सन्ति। यस्य च केदारनाथस्य गुणवर्णने गुणानुवादे कृतीहाशतं कृतिनां विदुषाम् ईहाशतं चेष्टाशतम् अलं पर्याप्ततया न क्षमं न समर्थम्। यद्वा अस्मिन् पद्ये अलङ्कृतीनाम् अलङ्काराणाम् आशतं शतसङ्ख्यां यावन्निर्माणं क्षमं सम्पन्नमिति सूचयति कवि:।

**विदेहनृपनन्दिनीकरसरोरुहप्रोद्यत–**
**स्वयंवरणमालिकामधुमलिम्लुचेन्दिन्दिरै:।**
**यदङ्गचिरसङ्गतिप्रणयिनी: कटाक्षच्छटा**
**निगूहति सखीजनाद्धृदि स मे ऽस्त्वयोध्यापति:।।८२।।**

**गङ्गा** – विदेहनृपनन्दिनीति– विदेहनृपनन्दिनी जनकसुता। करसरोरुहप्रोद्यतस्वयंवरणमालिकामधुमलिम्लुचेन्दिन्दिरै: करसरोरुहयो: हस्तकमलयो: प्रोद्यताया: शोभिताया: स्वयंवरणमालिकाया: मधुन: मकरन्दस्य मलिम्लुचै: चौरै: लोलुपैरिति यावत्। मलिम्लुचो मांसभेदे चौरचलनयो: पुमानिति विश्व:। तादृशै: इन्दिन्दिरै: भ्रमरै: यदङ्गचिरसङ्गतिप्रणयिनी: यस्य भगवत: श्रीरामस्य अङ्गानां चिरसङ्गते: प्रणयिनी:, चिरकालं यावत् भगवत: श्रीरामस्य अङ्गेषु रन्तुकामा: कटाक्षच्छटा: सखीजनात् तत्र विद्यमानाभ्य: सखीभ्य: लज्जया निगूहति गोपयति प्राच्छादयति। स्वयंवरोत्सवेऽस्मिन् श्रीरामस्य अङ्गेषु चिरं सङ्गता: स्वकटाक्षच्छटा: सीता सखीजनेभ्य: भ्रमरै: गोपयति। भ्रमराणां नीलवर्णत्वात् कटाक्षै: साम्यम्। तेन च कटाच्छटानां सखीजनात् गोपनम्। स तादृश: सीताया रतिविषयीभूतोऽयोध्यापति: राम: मे हृदि अस्तु। शृङ्गारस्य कविसमवेतरतिभावं प्रति अङ्गत्वाद् रसवदलङ्कार:।

**स्वजानुयुगरिङ्गणोच्चलदुलूखलैकाहति–**
**प्रभग्नयमलार्जुनोल्बणरवश्रुतिव्यग्रया।**

**स्खलद्गति यशोदया सभयशङ्कमङ्के धृतो**
**हसन्मनसि मामके लसतु माथुरो बालकः।।८३।।**

गङ्गा – स्वजानुयुगेति– स्वजानुयुगरिङ्गणोच्चलदुलूखलैकाहति–प्रभग्नयमलार्जुनोल्बणरवश्रुतिव्यग्रया स्वजानुयुगस्य रिङ्गणेन चलनेन उच्चलतः उच्छलतः उलूखलस्य एकाहत्या एकेन प्रहारेण प्रभग्नयोः यमलार्जुनयोः उल्बणस्य भीषणस्य रवस्य शब्दस्य श्रुत्या श्रवणेन व्यग्रया भीतया, सभयशङ्कं भयेन शङ्कया च सहितं यथा स्यात् तथा, अत एव स्खलद्गति स्खलन्ती गतिः गमनं यस्मिन् तद् यथा स्यात् धृतः कोडीकृतः, हसन् माथुरो बालकः स्वलीलया मन्दस्मितियुक्तः बालो भगवान् श्रीकृष्णः मामके मनसि लसतु शोभताम्। श्रीकृष्णस्योलूखलबन्धनकथा यमलार्जुनोद्धारकथा च श्रीमद्भागवते प्रसिद्धा। यशोदायाः सुतविषयकरतिभावस्य कविसमवेतरतिं प्रत्यङ्गत्वात् प्रेयोऽलङ्कारः।

**शिवावमतिपातकासहनवीरभद्रोद्धृत–**
**स्वमस्तकफलार्पणानुनयलब्धवस्तानन:।**
**विहाय मदमस्तुतास्फुटगिरैव दक्षो ऽपि यं**
**प्रसीदतु दयानिधिः कनखले स दक्षेश्वरः।।८४।।**

गङ्गा – शिवावमतीति– शिवावमतिपातकासहनवीर–भद्रोद्धृतस्वमस्तकफलार्पणानुनयलब्धवस्ताननः शङ्करस्यापमानरूपपात–कस्यासहनेन वीरभद्रेण एतन्नाम्ना शिवगणेन उद्धृतं यत् स्वमस्तकरूपं फलं तस्य अर्पणरूपेण अनुनयेन लब्धं वस्ताननं छागमुखं येन स्तभच्छागवस्तच्छगलका अज इत्यमरः। स दक्षः अपि मदं विहाय गर्वं परित्यज्य यं शिवम् अस्फुटगिरैव अस्पष्टवाण्या एव अस्तुत। ब–बेत्यस्फुटवाण्या पूर्वापमानितं शिवमपूजयत्। तेन पूजनेन च स प्रसन्नो जात इति पुराणकथा। दयानिधिः करुणाकरः। दुष्टायापि शरणागताय वरप्रदानाद् दयानिधित्वेन शिवस्योपदेशः। स दक्षेश्वरः दक्षपूजितः शिवः प्रसीदतु प्रसन्नो भवतु। कथेयं पुराणेषु प्रसिद्धा। दक्षरूपरिपुविषयकरत्याभासस्य कविरतिं प्रत्यङ्गत्वात् ऊर्जस्विनामालङ्कारः।

**क्षुधा ऽपहृतधीः पराशरसुतो ऽपराध्यत्वयं**
**प्रभो भवदनुग्रहो ननु रुणद्धि विघ्नानिह।**
**क्षणभ्रुकुटिभीरुभिर्मुनिजनैरिति प्रार्थितः**
**प्रसादसुमुखो हृदि स्फुरतु काशिकाधीश्वरः।।८५।।**

गङ्गा – क्षुधाऽपहृतधीरिति– हे प्रभो! क्षुधा बुभुक्षया अपहृतधीः अयं पराशरसुतः व्यासः अपराध्यतु अपराधं करोतु। ननु इति निश्चयार्थकमव्ययम्। इह काशिकायां भवदनुग्रहः भवतः शिवस्य काशिकाधीश्वरस्य अनुग्रहः करुणा विघ्नान् रुणद्धि। इति एवम्प्रकारेण क्षणभ्रुकुटिभीरुभिः क्षणं यावत् या भ्रुकुटिः क्रोधजन्यो भ्रूविकारः तया भीरुभिः भयशीलैः मुनिजनैः प्रार्थितः प्रसादसुमुखः प्रार्थनया विस्मृतापराधत्वेन प्रसन्नमुखः काशिकाधीश्वरः विश्वनाथः शिवः हृदि स्फुरतु प्रकटीभवतु। इयं कथा पुराणेषु क्वचिल्लभ्येत। कोपशमस्य रतिं प्रत्यङ्गत्वात् समाहितमलङ्कारः।

**सुरान्तरवधीरितं शिशुमनेडमूकं हृदा**
**स्वपादकमलानतं क्षणमवेक्ष्य काञ्चीपुरे।**
**कवीन्द्रकुलदुर्लभातुलितसूक्तिधाराशतैः**
**पिपर्ति भवतीं विना कथय कैव कामाक्ष्यहो।।८६।।**

गङ्गा – सुरान्तरवधीरितमिति– हे कामाक्षि! सुरान्तैः शिवादिभिः अन्यैः देवैः अवधीरितं तिरस्कृतम्। कार्यस्य अत्यसम्भवत्वात् अकृपापात्रीकृतम् अनेडमूकं शिशुं मूकबधिरं बालकं, अनेडमूक उद्दिष्टः शठे वाक्श्रुतिवर्जिते इति मेदिनी। वाक्श्रुतिरहितं बालकं काञ्चीपुरे हृदा हृदयेन सभक्तिभावं स्वपादकमलानतं स्वस्य कामाक्ष्याः चरणसरोजयोः विनम्रं क्षणं क्षणमात्रमवेक्ष्य दृष्ट्वा अहो भवतीं कामाक्षीं विना कवीन्द्रकुलदुर्लभातुलितसूक्तिधाराशतैः कवीन्द्राणां कविश्रेष्ठानां कुलानि समूहाः तैः दुर्लभाः दुःखेन लब्धुं योग्याः याः अतुलिताः अनुपमाः सूक्तयः, ता एव धाराः प्रवाहाः तासां शतैः, यद्यपि 'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यमरानुशासनेन शतशब्दस्य एकवचनान्तत्वमेव प्राप्तम्। किन्त्वनेकशतसङ्ख्याविवक्षायां 'सङ्ख्याग्रे द्वित्वबहुत्वे स्तः' इति तस्यैव अनुशिष्टेः बहुत्वम्। शतैः समूहैः का एव पिपर्ति पूरयति इति कथय। न कापीत्यर्थः। अनेडमूकशब्दोऽयं कोशपठितोऽपि कविभिः न प्रयुक्तः इति काव्यप्रकाशे सप्तमोल्लासे टीकाकारैरत्र अप्रयुक्तत्वदोषो निर्दिष्टः। मूककविविरचिता मूकपञ्चशती प्रसिद्धा। कविरयं मूको बधिरश्चासीत्। भगवत्याः कामाक्ष्या दर्शनमात्रेणाऽस्य वाणी प्रस्फुरणं प्राप्ता। अयं पञ्चशतकेषु भगवत्या वर्णनं कृतवान्। मूकपञ्चशती कवित्वनिकषरूपेण कविसमवाये समाद्रियतेऽद्यापि। भक्तविषयकरतिभावोदयस्य कामाक्षीरतिं प्रत्यङ्गत्वाद् भावोदयोऽलङ्कारः।

**स्वभक्तनिधनोद्यते भ्रुकुटिभीषणो यो ऽन्तके**

**ददौ च शरणागते ऽभयवरान् मृकण्डोः सुते।**
**जयत्ययमवन्तिकामधिवसन् महाकालता-**
**प्रपन्नकरुणाब्धिते युगपदुद्वहन् शङ्करः।।८७।।**

**गङ्गा** – स्वभक्तनिधनोद्यत इति – भ्रुकुटिभीषण: भ्रूभङ्गभयानक: य: शिव: स्वभक्तनिधनोद्यते स्वभक्तस्य निधने हनने उद्यत: कृतप्रयत्नस्तस्मिन् तादृशे यमराजे अन्तके सति मृकण्डो: सुते मार्कण्डेये च शरणागते सति अभयवरान् मृत्युभयराहित्यवरान् ददौ। महाकालता – प्रपन्नकरुणाब्धिते महाकालता च प्रपन्नानां शरणागतानां करुणाब्धिता दयासमुद्रता चेति द्वे अपि। अन्तकमपि तिरस्कर्तुं शक्ति: महाकालता। शरणागतेभ्योऽभयप्रदानं प्रपन्नकरुणाब्धिता। एतद्द्वयमप्युद्वहन् अयं पूर्वोक्तगुणविशिष्ट: शङ्कर: अवन्तिकाम् उज्जयिनीमधिवसन् जयति सर्वोत्कर्षशाली वर्तते। अत्र कोपप्रसादयो: सन्धि: शिवरतौ अङ्गमिति भावसन्धिरलङ्कार:।

**मुने समभिवादये, किमसुरो ऽनिरुद्धं छला-**
**द्बबन्ध, सुत मा त्रसीः, खगपते त्वरस्वाः, खल।**
**क्व शार्ङ्गमिति, सम्भ्रमाद्बहुविधं वचो व्याहरन्**
**प्रसीदतु हरिश्चिरं मयि विभूषयन् द्वारकाम्।। ८८।।**

**गङ्गा** – मुने समभीति – नारदादनिरुद्धवृत्तान्तं श्रुत्वा भगवान् श्रीकृष्णो वक्ति-मुने! हे नारद! समभिवादये। असुर: बाणासुर: छालात् अनिरुद्धं मम पौत्रं बबन्ध किम्? इति प्रश्न:। श्रीमद्भागवते उषोऽनिरुद्धयो: प्रणयकथा वर्णिता। हे सुत अनिरुद्ध! मा त्रसी: मा भैषी:। हे खगपते गरुड! त्वरस्व। शीघ्रतां कुरु। आ: खल इति बाणासुरं प्रति कठोरोक्ति:। क्व शार्ङ्गम्? धनु: क्व। इति एवं प्रकारेण अनिरुद्धवृत्तं श्रुत्वा तत्प्रेम्णा सम्भ्रमात् आवेगात् बहुविधं वचो व्याहरन् द्वारकां विभूषयन् अलङ्कुर्वन् हरि: कृष्ण: मयि कवौ चिरं चिरकालं यावत् प्रसीदतु प्रसन्नो भवतु। अत्र रत्यादीनां शबलता हरिरतौ अङ्गमिति भावशबलताऽलङ्कार:।

**स्मरन्निति स सप्त ता जगति मोक्षदात्रीः पुरीः**
**प्रफुल्लसुरभिद्रुमे मृदुसमीरणे ऽस्मिन्वने।**
**प्रकाममधुरैः फलैः सुरसरिज्जलैर्वर्तयन्**
**पिकालिसुभगध्वनीन् निशमयन् न्यवात्सीच्चिरम्।।८९।।**

**गङ्गा** – स्मरन्नितीति– इति एवं प्रकारेण स विलासी प्रफुल्लसुरभिद्रुमे प्रफुल्ला: पुष्पिता: सुरभयो मधुरगन्धयुक्ता द्रुमा: वृक्षा यस्मिन् तादृशे, मृदुसमीरणे कोमलवायुयुक्ते अस्मिन् वने ता: अयोध्यामथुराप्रभृतिसप्तमोक्षदात्री: पुरी: स्मरन् प्रकाममधुरै: अत्यन्तमाधुर्ययुक्तै: फलै: सुरसरिज्जलै: गङ्गाजलै: वर्तयन् व्यवहरन् जीवनचर्यां चालयन् पिकालिसुभगध्वनीन् कोकिलसमूहमधुरस्वरान् निशमयन् शृण्वन् चिरं बहुकालं यावत् न्यवात्सीत् निवासमकरोत्। वनादीनां समेषां चाक्षुषप्रत्यक्षविषयत्वात् सुरभे: घ्राणप्रत्यक्षविषयत्वात् मृदुसमीरणस्य त्वक्प्रत्यक्षविषयत्वात् फलजलादीनां रासनप्रत्यक्षविषयत्वात् इन्द्रियपञ्चकप्रत्यक्षवर्णनमिति प्रत्यक्षप्रमाणालङ्कार:।

**प्रयाव सदनं सखे स्मरसि किं न बन्धून् प्रियान्**
**त्वरस्व चिरमत्र नौ निवसतोरभूद्विश्रमः।**
**तदाशयबुभुत्सयेत्यभिहितो ऽलिना ऽसौ यदा**
**शिरो ऽनमयता ऽमुना ह्यनुममे विरक्तिस्तदा।। ९०।।**

**गङ्गा** – प्रयाव सदनमिति– हे सखे! विलासिन्! सदनं गृहं प्रयाव गच्छाव। या धातो: लोटिरूपम्। किं प्रियान् गृहस्थितान् बन्धून् सम्बन्धिजनान् न स्मरसि? अत्र हिमालये चिरं बहुकालं यावत् निवसतो: नौ आवयो: अलिविलासिनो: विभ्रम: विरामो विश्रान्तिर्वाऽभूत्। अत: त्वरस्व। गृहगमनाय समुद्यतो भव। इति एवम्प्रकारेण तदाशयबुभुत्सया तस्य विलासिनोऽभिप्रायस्य बोद्धुमिच्छया अलिना अभिहित: कथित: असौ यदा शिर: अनमयत् तदा अमुना अलिना अस्य विलासिन: विरक्ति: हि निश्चयेन अनुममे अनुमितिविषया कृता। सम्प्रत्यस्य हृदये विरक्ति: समुदितेति अलि: तद्व्यवहारेण ज्ञातवानित्यर्थ:। शिरोनमनेन गृहगमनानिच्छाया अनुमानाद् अनुमानप्रमाणालङ्कार:।

**अवोचत विलास्यलिं सदनमद्य कारोपमं**
**स्वतन्त्रगतिरोधनान्मम विभाति सत्यं गुरो।**
**तुदन्ति तनयादयो मशकवन्निजेष्टाप्तये**
**त्यजन्त्यपहृतामिषं श्ववदिमं गृहे रङ्कवत्।। ९१।।**

गङ्गा – अवोचतेति– विलासी अलेः शिष्यत्वं प्रपन्नः पूर्वनास्तिकः अलिं स्वगुरुम् अवोचत अवदत – हे गुरो! अद्य भवन्मुखात् संसारस्य असारतां श्रुत्वा विविधतीर्थानां च दर्शनं कृत्वा सदा गृहं स्वतन्त्रगतिरोधनात् गार्हस्थ्यभाराद् बहुविधकार्यव्यासक्तत्वाच्च गृहे स्वातन्त्र्याभावः। तस्मात् मम विलासिनः कारोपमं विभाति। तत्र गन्तुं मनः न प्रवर्तत इति सत्यं स्वाशयं वच्मि। गृहं भवति कारोपमं तनयादयस्तु तत्र सन्त्येवेति तेषां कृते तत्र गन्तव्यमिति निराकर्तुमाह– तनयादयः निजेष्टाप्तये पुत्रादयः आदिपदादन्येषां सम्बन्धिनां ग्रहणम्। स्वाभीष्टप्राप्तये मशकवत् तुदन्ति पीडयन्ति। मशको यथा दशनात् पूर्वं कर्णयोः मधुरं रौति रक्तं पीत्वा च पीडां जनयति तद्वत् पुत्रादयोऽपि स्वेष्टाप्तये पीडयन्ति। अन्ते च श्ववत् श्वभिः कुक्कुरैस्तुल्याः तनयादयः अपहृतामिषं गृहीतमांसं जनम्, रङ्कवच्च रङ्कैः दरिद्रैः तुल्या इमे तनयादयः अपहृतामिषम् अपहृतधनम्। 'आमिषं पुन्नपुंसकम्। भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि चेति मेदिनी।' तादृशं जनमिव त्यजन्ति यथा गोसदृशो गवयः इत्यतिदेशवाक्यस्मरणेन अरण्ये दृष्टे पशुविशेषे गवयशब्दस्य शक्तिग्रहो भवति तथैव शुनः रङ्कस्य च सादृश्यं येषु भवति तेष्वेव तनयादिपदस्य शक्तिग्रहोऽत्र प्रतिपादित इत्युपमितिप्रमाणालङ्कारः।

**श्रुतिर्हितमुपादिशद्विजहतैषणानां त्रयं**
**नरेण सुखमाप्यते ऽतिलघुभैक्षचर्यावता।**
**उपाहसमहं पुरा धनमदान्धदृष्टिस्तु या-**
**मवैम्यवितथां भवत्प्रवचनाञ्जनैरद्य ताम्।। ९२।।**

गङ्गा – श्रुतिर्हितमिति – एषणानां कामनानां त्रयं सुतैषणा लोकैषणा वित्तैषणेति त्रयं विजहता त्यजता अतिलघुभैक्ष्यचर्यावता नरेण स्वल्पभिक्षाचारवता मनुष्येण सुखम् आप्यते इति श्रुतिः हितं कल्याणम् उपादिशत् अबोधयत्। धनमदान्धदृष्टिः पूर्वं चार्वाकादिपक्षपाती धनमदेन अन्धदृष्टिः अहं यां नास्तिकत्वात् पूर्वं श्रुतिमुपाहसम्, निन्दितवान्। अद्य भवत्प्रवचनाञ्जनैः भवतोऽलेः प्रवचनरूपेणोपदेशरूपेणाञ्जनैः तामवितथां सत्यामवैमि जानामि। वस्तुतः श्रुतिरेव सत्यमुपदिशतीति मे बोधो जातः। श्रुतिर्हितमुपादिशदिति श्रुतेः प्रामाण्यवर्णनात् शाब्दप्रमाणालङ्कारः।

**उपैमि परमेश्वरो नियतमस्त्यनस्मत्क्रिया-**
**सुसाधरचनाक्षमो विजनकाननासेवनात्।**
**इहापि कथमन्यथा सलिलकन्दमूलैः फलै-**
**रकिञ्चनतया भवेत्कथय मादृशां जीवनम्।। ९३।।**

गङ्गा – उपैमीति– परमेश्वरः सर्वशक्तिमान् जगन्नियन्ता अनस्मत्क्रियासुसाधरचनाक्षमः अस्माकं मनुष्याणां क्रियाणां भोजनावासादीनां या सुसाधा सुखेन साध्या रचना सृष्टिः तत्र अक्षमः असमर्थः अस्मत्क्रियासुसाधरचनाक्षमः। न अस्मत्क्रियासुसाधरचनाक्षमः इति अनस्मत्क्रियासुसाधरचनाक्षमः। अस्माकं योगक्षेमयोः साधक इत्यर्थः। अस्माकं सर्वविधकल्याणकरो वर्तते परमेश्वरः इति अहं विलासी विजनकाननासेवनात् जनरहितवनवासात् नियतं निर्धारितमुपैमि जानामि। अन्यथा इह वने अकिञ्चनतया नास्ति किञ्चन यस्य स अकिञ्चनस्तस्य भावस्तया अभाववत्तया सलिलकन्दमूलैः फलैः परमेश्वररचनासाधितैः तादृशां विरक्तानां वने जीवनं कथं भवेत् इति कथय वद। परमेश्वरकृपाजातसलिलादिभिरेव मादृशानां तपस्विनां जीवनमरण्येऽत्र प्रचलतीति भावः। अर्थापत्तिप्रमाणालङ्कारः।

**चिरं निवसता मया न ददृशे ऽत्र वीजं वपन्**
**कृषन्नपि महीं नरः क्वचिदतो न कर्तेह सः।**
**अकर्तृकमिदं कथं जनिमतो हि कर्ता ध्रुवो**
**विविक्तमिति रोचते ऽनुमितिदार्ढ्यसम्पत्तये।। ९४।।**

गङ्गा – चिरं निवसतेति – चिरं चिरकालं यावत् निवसता मया अत्र वने क्वचित् बीजं वपन् महीं धरणीं कृषन् अपि नरः न ददृशे। अनुपलब्धिप्रमाणालङ्कारः। अत्रत्यानि कन्दमूलफलानि सर्वे वृक्षाः च मनुष्यप्रयासेन न जाताः। अत एव मनुष्यः इह अत्र वने क्षेत्रवत् कर्ता नास्ति। इदं वनादि अकर्तकं कथम्? न कथमपीत्यर्थः। यतो हि जनिमतः जन्मवतः कर्ता ध्रुवः, निश्चयेन कोऽपि कर्ता भवति। इति एवं अनुमितिदार्ढ्यसम्पत्तये अनुमितेः ईश्वरसाधनरूपायाः दृढताप्रतिपत्तये विविक्तमेकान्तं रोचते। एतत्सर्वं दृष्ट्वैव ईश्वरस्य सिद्धिः भवतीत्यर्थः।

**स्वभाव इति वोच्यतां नियतिमाश्रयस्वाथ वा**
**निदान इह चेतना प्रथमतस्तु सम्भाव्यते।**
**गले पतति कर्तृतातनुसमीक्षणात्सा ततो**
**मुमुक्षुरत ईहते प्रथमभूमिकां निर्जनम्।। ९५।।**

**गङ्गा** – स्वभाव इति – स कर्ता स्वभावः, चार्वाकमते स्वभावशब्देन उच्यताम् अथवा नियतिमाश्रयस्व। सांख्यमते नियतिशब्देन प्रकृतिशब्देन वा उच्यताम्। इह निदाने अस्मिन् जगतः कारणे विचार्यमाणे प्रथमतस्तु जगत्कारणं चेतना चैतन्यमेव सम्भाव्यते। जगतः कर्तृत्वरूपेण चेतनादीनां सम्भावनात् सम्भवप्रमाणालङ्कारः। ततः तस्यां चेतनायां तनुसमीक्षणात् शरीरतादात्म्यबुद्ध्या कर्तृता कर्तृत्वभावः। यद्वा नैयायिकमते तनुसमीक्षणात् शरीररूपकार्यस्य दर्शनात् तस्य कर्तृरूपेण चेतनादनुमीयते। एवमेष कर्तृत्वभावः चेतनायाः चैतन्यस्य परमेश्वरशब्दवाच्यस्य गले पतति। बलात् स्वकरणीया भवति। अतः कर्तृतायाः स्वीकारात् मुमुक्षुः मोक्षेच्छुः शरीरात् आत्मबुद्धेः निरसनाय प्रथमभूमिकां मोक्षस्य प्रथमसोपानं निर्जनं विजनमेकान्तस्थानमीहते अभिलषति। तेन एकान्तसेवनेन ध्यानादिना शरीरे आत्मबुद्धेः निरासो भवति। यथोक्तं भगवता गीतायाम् –

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥८/५२

**गृहे भवति दोष इत्यवितथः प्रवादो यतो**
**नरैककृतिगोचरे ऽखिल इहेक्षिते वस्तुनि।**
**अदृष्टनरदुष्कराचलसरिद्वनो नाश्रये-**
**त्परेशमनुमीयते भुवि हि कायतः कारणम्॥९६॥**

**गङ्गा** – गृहे भवति दोष इति – अखिले समग्रे नरैककृतिगोचरे पुरुषैकरचितवस्तुपूरिते वस्तुनि ईक्षिते दृष्टे इह गृहे दोषो भवति। इति प्रवादः अवितथः, सत्यम्। वितथं त्वनृतं वच इत्यमरः ऐतिह्यप्रमाणालङ्कारः। सर्वत्र मनुष्यस्यैव कर्तृत्वदर्शनात् परमेश्वरे विश्वासो नोदेति। यतः यस्मात् अदृष्टनरदुष्कराचलसरिद्वनो अदृष्टानि न विलोकितानि नरैः दुष्कराणि कर्तुमशक्यानि अचलसरिद्वनानि पर्वतनदीकाननानि येन स पुरुषः परेशं परमात्मानं न आश्रयेत्, न प्राप्नुयात्। हि भुवि पृथ्व्यां कार्यतः घटादितः कारणं कुम्भकारादि अनुमीयते। अचलादीनि न नरकर्तृकाणि, अतः परिशेषात् तत्कर्तृत्वेन परमेश्वरः अनुमीयते।

**महीभ्रमणकर्षणैरिति विलासिहृच्छोधयन्**
**सुराङ्घ्रिरजसां चये सुकृतबीजमत्रावपन्।**
**प्रसिच्य मुहुरादरात्तदतिपूततीर्थाम्बुभिः**
**क्रमादलिकृषीवलो ऽजनयदास्तिकत्वाङ्कुरम्॥९७॥**

**गङ्गा** – उपमारूपकयोः सन्देहसङ्करं प्रतिपादयितुं वक्ति- **महीभ्रमणेति**-महीभ्रमणकर्षणैः मही पृथ्वी तस्यां भ्रमणं विभिन्नतीर्थदर्शनसमीहया चलनमेव कर्षणं, तैः। अथवा महीभ्रमणानि कर्षणानीव तैः। कर्षणसदृशैः महीभ्रमणैरित्यर्थः। विलासिहृच्छोधयन् विलासिनः स्वशिष्यस्य पूर्वनास्तिकस्य हृत् हृदयं शोधयन् परिष्कुर्वन्। यथा कर्षणेन क्षेत्राणां दूषिततत्त्वानि दूरीक्रियन्तेऽथ च सुशस्योत्पादनानुकूलता तत्रोत्पाद्यते तद्वत् विलासिहृदयनिष्ठनास्तिकत्वसंस्कारान् तीर्थदर्शनरूपमहीभ्रमणैः दूरीकुर्वन् तद्व्याजेन च तस्य शोधनमास्तिकत्वानुकूलत्वं प्रतिपादयन्। सुराङ्घ्रिरजसां चये, सुराणां देवानाम् अङ्घ्रीणां चरणानां रजसां धूलीनां चये समूहे। देवचरणरेणुसमूह इत्यर्थः। सुकृतबीजं सुकृतं पुण्यमेव बीजम्। अथवा बीजसदृशं सुकृतम्। आवपन्। तच्च बीजम् अतिपूततीर्थाम्बुभिः अति पवित्रप्रयागादितीर्थजलैः आदरात् मुहुः पुनः पुनः प्रसिच्य अलिकृषीवलः अलिरेव कृषीवलः। अलिः कृषीवल इव वा। क्रमात् क्रमशः। आस्तिकत्वाङ्कुरम्। आस्तिकत्वमङ्कुरमिव। अङ्कुरसदृशमास्तिकत्वम्। अजनयत् उदपादयत्। अजनयत् क्रियाया अङ्कुरादिभिरुपमानैरास्तिकत्वादिभिरुपमेयैश्च अन्वयस्य सम्भवेनोपमारूपकयोः सन्देहसङ्करः।

**श्रमाहृतमहामखोद्यदभिरामसामध्वनि-**
**प्रकाममुदितापरद्विजसमाजमालोकयन्।**
**प्रणामशतमादरात्सततमाचरन्सम्भ्रमात्**
**क्रमादनुपमामयं सरितमपि मन्दाकिनीम्॥९८॥**

**गङ्गा** – श्रमाहृतेति – श्रमाहृतमहामखोद्यदभिरामसामध्वनिप्रकाम-मुदितामरद्विजसमाजं श्रमेण आहृताः प्रारब्धाः ये महामखाः महान्तो यज्ञाः तत्र उद्यन्तः उच्चार्यमाणाः अभिरामाः रमणीयाः ये सामध्वनयः सामगानानि तैः प्रकामं नितरां मुदितानां प्रसन्नानाम् अमराणां देवानां द्विजानां ब्राह्मणानां च समाजम् आलोकयन् पश्यन् सम्भ्रमात् अपूर्वकर्मदर्शनात् विलासिनः आवेगोत्पत्तिः। तस्मात् आवेगात् आश्चर्याद् वा। आदरात् श्रद्धातिशयात् प्रणामशतं सततं सर्वदा आचरन् व्यवहरन् अयं विलासी क्रमात् अनुपमां मन्दाकिनीं गङ्गां सरितं नदीम् आप प्राप। वृत्त्यनुप्रासालङ्कारः।

**विशङ्कटतटीनटद्द्रुमपतत्प्रसूनावली**

विलासिन इहातनोदतनुफेनपुञ्जभ्रमम्।
अलिस्तु मधुसौरभानुसृतिकैतवादापतन्
न्यवर्तयदमुं सतां किमपि बोधने कौशलम्।। ९९।।

गङ्गा – विशङ्कटतटीति– इह मन्दाकिन्यां विशङ्कटतटीनटद्द्रुमपतत्प्रसूनावली विशङ्कटासु तटीषु तटेषु नटतां पवनवेगेन कम्पमानानां द्रुमाणां वृक्षाणां पततां प्रसूनानां कुसुमानाम् अवली समूहः विलासिनः अतनुफेनपुञ्जभ्रमं विशालफेनपटलस्य भ्रान्तिम् अतनोत् अजनयत्। तु किन्तु मधुसौरभानुसृतिकैतवात् मधुनः पुष्परसस्य सौरभस्य सुगन्धस्य अनुसृतेः अनुसरणस्य कैतवात् व्याजात् आपतन् आगच्छन् अलिः अमुं विलासिनः फेनपुञ्जभ्रमं न्यवर्तयत्। प्रसूनावल्यां भ्रमरस्य आपतनेन विलासिनः फेनपुञ्जभ्रमो गत इत्यर्थः। सतां सज्जनानां बोधने परोपदेशने किमपि अनिर्वचनीयमीदृशं कौशलं भवति। भ्रान्तिमदपह्नुत्यर्थान्तरन्यासानाम् अङ्गाङ्गिभावसङ्करः।

अतीत्य जनदुर्गमां तुहिनतुङ्गशृङ्गावली–
मनङ्गमदभङ्गकृत्त्रिनयनोत्तमाङ्गच्युताम्।
इदम्प्रथमदर्शनामचलमूर्ध्नि गङ्गोत्तरी–
पदेन विदिते तटे ऽभजदथैष भागीरथीम्।। १००।।

गङ्गा – अतीत्येति – अथ अनन्तरम्। एष विलासी, जनदुर्गमां जनैः तद्दर्शनलोलुपैर्भक्तैः सामान्यैर्वा दुःखेन गन्तुं योग्याम्। मार्गस्य तुषारादिशङ्कुलितत्वादतिकष्टेन गन्तुं योग्यामित्यर्थः। तादृशीं तुहिनतुङ्गशृङ्गावलीं तुहिनस्य तुङ्गा उच्चा ये शृङ्गाः शिखराः तेषामवली पङ्क्तिः, ताम्। तुहिनव्याप्तत्वात् उच्चतया च हिमगिरेः शिखरावलीनां दुर्गमत्वं बोधयति। अचलमूर्ध्नि पर्वतस्य हिमालयस्य मूर्ध्नि शिखरे, न त्वधोभागे। इदमप्रथमदर्शनां सर्वप्रथमं प्रकटीभूतां गङ्गोत्तरीति पदेन विदिते विख्याते तटे, अनङ्गमदभङ्गकृत्त्रिनयनोत्तमाङ्गच्युताम् अनङ्गस्य कामदेवस्य मदस्य अहङ्कारस्य भङ्गकृत् दर्पहन्ता यः त्रिनयनः शिवः तस्य उत्तमाङ्गात् शिरसः, उत्तमाङ्गं शिरः शीर्षमित्यमरः। च्युतां पतितां हिमालयशिखरे समागतामिति यावत्। भागीरथीं भगवतीं गङ्गाम् अभजत् असेवत्। छेकवृत्त्यनुप्रासयोः संसृष्टिः।

भागीरथमहीभृता तपसि तिष्ठता धूर्जटे–
र्जटापटलसङ्कटादियममोचि तत्तत्पितॄन्।
अमोचयत संसृतेः प्रतिविधित्सयेत्यज्ञता
स्मरन्नपि हि मुच्यते जगति को ऽपि भागीरथीम्।। १०१।।

गङ्गा – भगीरथमहीभृतेति – तपसि तपश्चर्यायां तिष्ठता भगीरथमहीभृता तन्नाम्ना सूर्यवंशीयनृपेण इयं गङ्गा धूर्जटेः शिवस्य जटापटलसङ्कटात् जटासमूहस्य दुःखात् अमोचि। ब्रह्मणः कमण्डलोः मुक्ता गङ्गा शिवजटाजूटं प्राप्तवती। तत्र भ्रमन्तीयं भगीरथतपःप्रसादात् शिवेन मुक्तेति पुराणेषु कथा। एवं सा भगीरथेन शिवजटापटलसङ्कटात् मोचितेति गङ्गा अपि भगीरथस्य तत्तत्पितॄन् पितृपितामहादीन् प्रतिविधित्सया प्रत्युपकारेच्छया संसृतेः संसारात् अमोचयत् मोचितवती। इति एवम्प्रकारेण प्रतिविधित्सया भगीरथपितृमोक्षकथनम् अज्ञता विद्यते। गङ्गायाः स्वभावमजानन्त एव केचन एवं वदन्ति। यतो हि जगति संसारे कोऽपि सामान्योऽपि जनः भागीरथीं स्मरन् अपि मुच्यते मुक्तिं लभते। अतो भगीरथपितृमोक्षे गङ्गाया मोक्षदानस्वभाव एव कारणं न तु प्रतिविधित्सेत्यर्थः। परिवृत्तिकाव्यलिङ्गयोः एकवाचकानुप्रवेशसङ्करः। तस्यापि अर्थान्तरन्यासोत्थापितापह्नुतिसङ्करेण अङ्गाङ्गिभावसङ्करः।

समाधिनिरतान् क्वचित्क्वचन दीक्षितानध्वरेऽ–
न्यतश्च हरिकीर्तनावसरलुप्तदेहस्मृतीन्।
परत्र शतरुद्रियश्रुतिजपाभिषिक्तेश्वरान्
विलोक्य वचनेष्वलेरिह शनैर्विलास्याश्वसीत्।। १०२।।

गङ्गा – समाधिनिरतेति – इह गङ्गोत्तरीतटे क्वचित् समाधिनिरतान् समाधिस्थान् तपस्विनः क्वचन अध्वरे यज्ञे दीक्षितान् यज्ञमाचरतः अन्यतश्च हरिकीर्तनावसरलुप्तदेहस्मृतीन् हरेः भगवतः विष्णोः कीर्तनावसरे भजनकाले लुप्ता दूरं गता देहस्य शरीरस्य स्मृतिः येषां तादृशान्। तन्मयीभावेन हरिकीर्तने संलग्नानित्यर्थः। परत्र अपरस्मिन् स्थाने शतरुद्रियश्रुतिजपाभिषिक्तेश्वरान् शतरुद्रियश्रुतेस्तदाख्यवेदभागस्य जपैः अभिषिक्तः पूजितः ईश्वरः शिवः येभ्यस्तान् विलोक्य विलासी शनैः अलेः वचनेषु अलिनोपदिष्टवैराग्यवचनेषु आश्वसीत् आश्वस्तोऽभवत्। तादृशजनान् प्रत्यक्षं विलोक्य विलासी अलिकथनेषु विश्वस्तोऽभूदित्यर्थः।

अनेकपथगामिनो मुहुरवेक्ष्य तत्रास्तिकान्

**उपास्तिषु मखक्रियास्वथ च निर्विकल्पस्थितौ।**
**हिताय कतमा भवेदिति स संशयानो ऽप्यभू-**
**च्छ्रुतीरितनिजोचितान्यतमसाधने निश्चितः।।१०३।।**

**गङ्गा** – अनेकपथगामीति – तत्र गङ्गोत्तरीतटे उपास्तिषु उपासनासु मखक्रियासु यज्ञविधानेषु अथ च निर्विकल्पस्थितौ निर्विकल्पकसमाधौ। निराकारब्रह्मचिन्तन इत्यर्थः। अनेकपथगामिनः अनेकमार्गाश्रयिणो जनान् मुहुः प्रतिस्थानं बारं बारं भिन्नभिन्नोपासनामार्गेषु संलग्नान् अवेक्ष्य दृष्ट्वा एतासु क्रियासु कतमा क्रिया हिताय मम कल्याणाय भवेत् इति संशयानः अपि स विलासी श्रुतीरितनिजोचितान्यतमसाधने वेदोक्तस्वोपयोग्यन्यतमक्रियायां निश्चितः दृढोऽभवत्। वेदोक्तक्रियासु मम योग्या या उपासनाक्रियास्तासु काचिदतिसुयोग्या मयाऽङ्गीकरणीयेति स निर्धारितवान्।

**तमेव विनयादलिं शरणमाश्रयाम्याहितं**
**क्षमेत विशयावलिं चिरममायया ऽपोहितुम्।**
**असाविति विचारयन् तमनमद्विलासी वचो**
**रसानतिरुचा ऽर्पयन् कमलमञ्जुलाक्षो ऽवदत्।।१०४।।**

**गङ्गा** – तमेव विनयेति – तं पूर्वोक्तं गुरुभूतम् अलिमेव विनयात् आदरात् आहितं हितं मोक्षप्राप्तिः तत्पर्यन्तम्। गुरोरभावे तदप्राप्तेः तावत् तस्यैव शरणमाश्रयामि। असौ मम गुरुभूतोऽलिः विशयावलिं शङ्कासमूहम् अमायया निष्कपटभावेन अपोहितुं दूरीकर्तुं क्षमेत्। इत्येवं विचारयन् विलासी तमलिम् अनमत् प्राणमत्। कमलमञ्जुलाक्षः कमले इव मञ्जुले सुन्दरे अक्षिणी यस्य स तादृशो विलासी अतिरुचा सरसभावेन वचोरसान् वचनरसान् तस्मै अर्पयन् अवदत्। वक्ष्यमाणमवोचत्। इदं पादगोमूत्रिकाचित्रम्। अस्य न्यास इत्थं कर्तुं शक्यते –

त व न द श ण श्र म्या तं
मे वि या लिं र मा या हि
क्ष त श व चि म य पो तुम्।
अ वि वि र त न द्वि सी चो
सा ति चा यन् म म ला व
र न रु र्प क ल ञ्जु क्षो दत्।।

**स्मरस्य मलयोद्भवः कथय को नु वातो गुरो**
**प्रियं न नयशालिनामतिभयाच्च कस्माद्वनम्।**
**तरिं भवपयोनिधेर्निजगदुश्च कं पण्डिताः**
**समाधिरिह हस्तगो ऽप्यचतुरैर्नरैर्दुर्लभः।।१०५।।**

**गङ्गा** – स्मरस्येति – हे गुरो! अले! मलयोद्भवः वातः वायुः स्मरस्य कामस्य कः नु? मलयोद्भवेन वायुना स्मरस्य कः सम्बन्ध इत्यर्थः। नयशालिनां नीतिमतां कस्मात् अतिभयात् वनं प्रियं न भवति? पण्डिताः कं भवपयोनिधेः संसारसमुद्रस्य तरिं नौकां निजगदुः कथयामासुः इति कथय, वद। अचतुरैः अपण्डितैः नरैः हस्तगः समाधिः पक्षे त्रयाणामुपर्युक्तप्रश्नानां समाधानं दुर्लभः भवति। अत्र हस्तगः तगः तकारस्थानगतो हः हकारः कल्प्यते चेत् उत्तरं भवति। प्रथमचरणे वातः इत्यत्र तकारस्थाने हकारस्य कल्पने वाहः भवति। मलयोद्भवः स्मरस्य वाहः वाहको भवतीत्युत्तरम्। द्वितीयचरणे अतिभयादित्यत्र तकारस्थाने हकारकल्पने अहिभयादित्युत्तरम्। तृतीयचरणे च तरिमित्यत्र हकारकल्पनेन हरिमित्युत्तरम्। गूढमलङ्कारः।

**गुरो जगति सर्वतो भवति दुर्दशा काऽमिता**
**नरस्य मणिविभ्रमं जनयतीह का च च्छविः।**
**वृते श्रुतिधनैर्हिमालयतपोवने नास्ति कोऽ-**
**नुयोगचरमाक्षरैरलिरिहोत्तराण्यब्रवीत्।।१०६।।**

**गङ्गा** – गुरो जगतीति – हे गुरो! जगति संसारे सर्वतः सर्वासु दुर्दशासु अमिता श्रेष्ठा का कतमा दुर्दशा भवति? इह संसारे नरस्य का च छविः मणिविभ्रमं जनयति उत्पादयति? श्रुतिधनैः तपस्विभिः वेदनिष्णातैः संसारस्य नश्वरतां ज्ञातवद्भिः वृते हिमालयतपोवने कः नास्ति?

को न भवति? इह प्रश्ने अलि: अनुयोगचरमाक्षरै: प्रश्नस्यान्तिमाक्षरै: पदै: उत्तराणि अब्रवीत् अवदत्। तथा च कामिता, कामुकता संसारस्य सर्वतोऽधिका दुर्दशा। काचच्छवि: नरस्य मणिविभ्रमं जनयति। नास्तिक: हिमालयतपोवने नास्ति इत्युत्तराणि। प्रश्नोत्तरालङ्कार:।

**समस्तवसुधाकृतालयनिलिम्पपुष्पावली-**
**समस्तवसुधाकृता ऽलय उपायत: स्वाशय:।**
**न्यवेद्यत विलासिना प्रयतमानसत्वोचितं**
**निशम्य मुमुदे ऽलिना प्रयतमानसत्त्वोचितम्।। १०७।।**

गङ्गा – समस्तवसुधेति – समस्तवसुधाकृतालयनिलिम्पपुष्पावली – समस्तवसुधाकृता समस्ता वसुधा पृथ्वी कृता आलय: मन्दिरं यैस्तेषां निलिम्पानां देवानां पुष्पावल्या पुष्पपुञ्जेन सम: तुल्य: य: स्तव: स्तुति: सा एव सुधा अमृतम्। तां सुधां करोतीति तत्कृत्। तथाभूतेन विलासिना उपायत: युक्ति: स्वाशय: स्वाभिप्राय: स्वमनो वा अलये न्यवेद्यत नैवेद्यरूपेण समार्प्यत। अबोध्यत इति यावत्। अलिना च प्रयतमानसत्वोचितं प्रयतं संयतं पवित्रं वा मानसं मन: यस्य स प्रयतमानस: विलासी। तस्य भाव: प्रयतमानसत्वम्। पवित्रचेतस्कत्वमित्यर्थ:। तस्योचितं तदनुरूपं पवित्रमानसानुकूलम्। प्रयतमानसत्त्वोचितं प्रयतमानानां मोक्षार्थं यतमानानां मुमुक्षूणां सत्त्वस्य अन्त:करणस्य शुद्धे: उचितं योग्यम्। तादृशं स्तवं श्रुत्वा अलिना मुमुदे प्रसन्नता अनुभूता। चतुर्थचरणे 'प्रयतमानसत्त्वोचितम्' इत्यत्र सत्त्वे यमकभङ्गोऽपि चिन्त्य:। यमकालङ्कार:।

**मनो बहुसुखं गिरा मम सदा नयस्त्वं गुरो**
**शमस्य परमेश्वरो वितरितेह चामुत्र च।**
**नरामहितदेवतानुसरणार्थिनो रोचते**
**क्रिया ऽत्र कतमोच्यतां कथय कर्म कर्ता च क:।। १०८।।**

गङ्गा – मनो बहुसुखमिति– हे गुरो! अले! त्वं गिरा नानाशास्त्रोपदेशेन मम मन: बहुसुखम् अनय:, नीतवानसि। 'सदा नय:' इत्यत्र 'सदानय:' इति पाठेन क्रियापदलाभ:। इह अस्मिन् संसारे अमुत्र परलोके च परमेश्वर: अस्य मनस: शं कल्याणं वितरिता प्रदाता। रा: धनं महितदेवतानुसरणार्थिन: महिता: सर्वै: समर्चिता: ये देवा: तेषामनुसरणम् अनुवर्तनम् अर्थयितुं याचितुं शीलं यस्य तस्य मनस: कृते न रोचते न प्रीतिं जनयति। अत्र अस्मिन् पद्ये कतमा क्रिया इति उच्यताम्, कथ्यताम्। कर्म च कर्ता च क: इत्यपि कथय। अत्र अनय: क्रिया। शं कर्म। रा: च कर्ता इत्युत्तरम्। क्रियादिगुप्तरूपा प्रहेलिका जाति:।

**प्राच्योदीच्यसमस्ततीर्थसुमन:स्नानार्चनासेवनै-**
**र्नास्तिक्ये गलहस्तिते श्रुतिवच: श्रद्धाङ्कुरे रोहति।**
**अलोच्य प्रयतं विलासिहृदयं स्वं च श्रमं सार्थकं**
**तुष्टो मीलितलोचनो ऽलिरचलश्चित्तेन दध्यौ शिवम्।। १०९।।**

**इत्यलिविलासिसंलापे खण्डकाव्ये पञ्चमं शतकम्।**

गङ्गा – प्राच्योदीच्येति – प्राच्योदीच्यसमस्ततीर्थसुमन:स्नानार्चनासेवनै: प्राच्यां पूर्वस्यां दिशि भवानि प्राच्यानि, उदीच्याम् उत्तरस्यां दिशि भवानि उदीच्यानि च यानि समस्तानि तीर्थानि सुमनस:, सुमना: पुष्पमालत्यो: स्त्रियां ना धीरदेवयो: इति मेदिनी। देवाश्च स्नानार्चनासेवनै: स्नानं च अर्चनं च आसेवनं च आसमन्तात् विधिवत् सेवनं तै:। तीर्थेषु स्नानानार्चनासेवनै: देवानां च अर्चनासेवनाभ्याम्। कर्तरि तृतीया। तै: नास्तिक्ये गलहस्तिते दूरीभूते सति श्रुतिवच:श्रद्धाङ्कुरे वेदवचनेषु श्रद्धाया: अङ्कुरे रोहति सति प्रयतं पवित्रं विलासिहृदयं विलासिनो हृत् स्वं तदुपदेशतीर्थाटनादि श्रमं सार्थकं च आलोच्य तुष्ट: मीलितलोचन: अचल: अलि: चित्तेन शिवं दध्यौ। शार्दूलविक्रीडितं वृत्तम्।

**इति विद्यावतीसुतरमाकान्तपाण्डेयविरचितायां गङ्गाख्या याम् अलिविलासिसंलापटीकायां पञ्चमं शतकम्।।**

अलिविलासिसंलापस्य शतकमिदं कुवलयानन्दोक्तानाम् अलङ्काराणाम् अभ्यासाय परिशीलनाय च छात्राणां महदुपकारकम्। इह दिङ्मात्रं निर्दिष्टम्। विस्तरस्तु ग्रन्थे गङ्गाख्यव्याख्यायां द्रष्टव्यमिति शम्।

■ पत्रसङ्केत:- आचार्यो निदेशकश्च, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:)
जनकपुरी, नवदेहली-58।

